# श्रीहेमाद्रिविरचित-

# चतुर्वर्गचिन्तामणे-

## र्दानखण्डम् ।

तस्यैव

## सप्तप्रकरणात्मको द्वितीयो भागः

---

पण्डितसदाशिवाचार्यदीक्षितेन

संशोधितः ।

---

वाराणस्याम्

प्रभाकरीकम्पन्यधिपतिभिर्–मेडिकलहाल–नाम्नि
यन्त्रालये मुद्रयित्वा प्राकाश्यं नीतः ।

सं० १९५९ ।



[ मूल्यम् ३॥)

॥ श्रीः ॥

# हेमाद्रेर्दानखण्डस्थद्वितीयभागस्य विषयानुक्रमणिका ।

## अथातिदानविधानमुच्यते ।

अथातिदानानि सतां हिताय हेमाद्रिसूरिः प्रकटीकरोति ।
दानेन येषां सकृदप्यनल्पकल्पान्तसाक्षी वरभोगयोगः ॥

### कानि पुनस्तानीत्यपेक्षायां भविष्यत्पुराणे ।

त्रीण्याहुरतिदानानि गावः* पृथ्वी सरस्वती ।
नरकादुद्धरन्त्येव जपवापनदोहनैः ॥

इत्यत्र यद्यपि धेनुशब्देन स्वरूपतो गौरेवाभिधीयते । तथापि धेनुशब्दसाधारण्यादिप्रकरणे गुडधेन्वादीनामपि सन्निवेशो युक्तस्तासु च क्रमेण निरूप्यमाणासु दशमी स्यात् स्वरूपत इति स्वरूपधेनोरन्ते स्थितत्वाद्गुडधेन्वादय एव प्रथमतो निरूप्यन्ते ।

### तदुक्तं मत्स्यपुराणे ।

यास्तु पापविनाशिन्यः पठ्यन्ते दशधेनवः ।
तासां स्वरूपं वक्ष्यामि नामानि च नराधिप ॥
प्रथमा गुडधेनुः स्याद्घृतधेनुस्तथापरा ।
तिलधेनुस्तृतीया तु चतुर्थी जलसंज्ञिता ॥
क्षीरधेनुश्च विख्याता मधुधेनुस्तथा परा ।
सप्तमी शर्कराधेनुर्दधिधेनुस्तथाष्टमी ॥
रसधेनुर्नवमी स्याद्दशमी स्यात् स्वरूपतः ।

---

* धेनुरिति पुस्तकान्तरे ।
† लवणस्याष्टमो तथेति पुस्तकान्तरे ।
‡ कार्पासधेनुरिति पुस्तकान्तरे ।

एतावत् तु विधानं च तमाचक्ष्व जगत्पते ॥
किं रूपं केन मन्त्रेण दातव्या तदिहोच्यताम् ।

मत्स्य उवाच ।

गुडधेनुविधानस्य यद्रूपमिह यत्फलम् ।
तदिदानीं प्रवक्ष्यामि सर्वपापविनाशनम् ॥
कृष्णाजिनं चतुर्हस्तं प्रागग्रीवं विन्यसेद्भुवि ।
गोमयेनोपलिप्तायां दर्भानास्तीर्य सर्वतः ॥
लघ्वेणकाजिनं तद्वद्वत्सस्य परिकल्पयेत् ।
प्राङ्मुखीं प्रापयेद्धेनुमुदक्पादां सवत्सकाम् ॥

'एणाकाजिनं' कृष्णाजिनम् । 'प्राङ्मुखीं' प्राक्शिरस्कमित्यर्थः । तदुत्तरेण वत्सोऽपि तथैव परिकल्पनीयः ।

उत्तमा गुडधेनुः स्यात् सदा* भारचतुष्टयम् ।
वत्सं भारेण कुर्वीत भाराभ्यां मध्यमा स्मृता ॥
अर्धभारेण वत्सः स्याद्गृहवित्तानुसारतः ।

'भारः' परिभाषायां व्याख्यातः । 'गृहवित्तानुसारत इति' इयमुत्तममध्यमादिकल्पना निजवित्तानुसारतः कर्तव्येत्यर्थः ।

धेनुवत्सौ घृतास्यौ तौ सितसूक्ष्माम्बरावृतौ ।
शुक्तिकर्णाविक्षुपादौ शुचिमुक्ताफलेक्षणौ ॥
सितसूत्रशिरालौ तौ सितकम्बलकम्बलौ ।
ताम्रकद्रूकपृष्ठौ तौ सितचामररोमकौ ॥

'कद्रूकं' ककुत्प्रदेशः ।

विद्रुमभ्रूयुगोपेतौ नवनीतस्तनान्वितौ ।
क्षौमपुच्छौ कांस्यदोहाविन्द्रनीलकतारकौ ॥

---

* भारमनुत्तममिति पाठः पुस्तकान्तरे ।

सुवर्णशृङ्गाभरणौ राजतखुरसंयुतौ ।
नानाफलमयैर्दन्तैर्घ्राणगन्धकरण्डकौ ॥

अत्र च सारतः परिमाणतश्च फलविशेष इति यथाशक्ति सुवर्णशृङ्गादिस्वम-वधेयम् ।

इत्येवं रचयित्वा तु धूपदीपैरथार्चयेत् ।

अथामन्त्रणमन्त्रः ।

ॐ या लक्ष्मीः सर्वभूतानां या च देवेष्ववस्थिता ।
धेनुरूपेण सा देवी मम*पापं व्यपोहतु ॥
देहस्था या च रुद्राणी शङ्करस्य सदा प्रिया ।
धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥
विष्णोर्वक्षसि या लक्ष्मीः स्वाहा या च विभावसोः ।
चन्द्रार्कशक्रशक्तिर्या धेनुरूपाऽस्तु सा श्रिये ॥
चतुर्मुखस्य या लक्ष्मीर्या लक्ष्मीर्धनदस्य च ।
लक्ष्मीर्या लोकपालानां सा धेनुर्वरदाऽस्तु मे ॥
स्वधा त्वं पितृमुख्यानां स्वाहा यज्ञभुजां तथा ।
सर्वपापहरा धेनुस्तस्माच्छान्तिं प्रयच्छ मे ॥
एवमामन्त्र्य तां धेनुं ब्राह्मणाय निवेदयेत् ।

अत्रैष दानवाक्यप्रयोगः ।

ॐ अद्यामुकस्मिन् कालेऽमुकसगोत्रायामुकशर्मणे ब्राह्मणायेमां गुडधेनुं यथोक्तसर्वोपकरणवतीं यथोक्तकृतवत्ससहितां विष्णुदैवताममुकसगोत्रोऽहममुकशर्मामुककामस्तुभ्यमहं संप्रददे न ममेति । ममामुकसगोत्रायामुकशर्मणे ब्राह्मणाय एतद्गुडधेनुदानप्रतिष्ठार्थं सुवर्णं दक्षिणा इदं तुभ्यमहं संप्रददे न ममेति ।

* शान्तिं प्रयच्छत्वित्वति क्वचित् पाठः ।

दक्षिणा तु ज्ञेयो निष्कशतं पार्थेत्यादिना परिभाषायामुक्ता ।

ब्राह्मणस्तु पुच्छदेशे प्रतिगृह्य स्वस्ति कुर्यात् ।
विधानमेतद्धेनूनां सर्वासामिह पठ्यते ।

'सर्वासां' प्रत्यक्षधेनुव्यतिरक्तानामित्यवगन्तव्यम् ।

तथा ।

एतदेव विधानं स्यात् त एवोपस्करा: स्मृता: ।
मन्त्रावाहनसंयुक्ता: सदा पर्वणि पर्वणि ॥
यथाश्रद्धं प्रदातव्या भुक्तिमुक्तिफलप्रदा: ।
अशेषयज्ञफलदा: सर्वपापहरा: शुभा: ॥
अयने विषुवे पुण्ये व्यतीपातेऽथ वा पुन: ।
गुडधेन्वादयो देया उपरागादिपर्वसु ॥

अत्र घृतादिधेनुद्रव्यपरिमाणमपि गुडधेनूक्तमेव ।

विधानमेतद्धेनूनां सर्वासामपि पठ्यते ।

इति सामान्येनातिदेशात् ।

कुम्भा: स्युर्द्रवधेनूनामितरासां तु राशय: ।

इति तु* भारचतुष्टयादिपरिमितस्य द्रवद्रव्यस्य कुम्भाधारतयावस्थापनप्रकारकथनम् । यत् तु पद्मपुराणादावेकेनैव घटेन घृतादिधेनुकथनं द्रोणमात्रेण च तिलधेनुकथनं तदेतद्धेनुप्रकारात् प्रकारान्तराभिप्रायेणेति कल्पतरु: । दानविवेकेन तु पलसहस्रपरिमाण: कुम्भ इति निर्णीत: । केचित् तु द्वादशपलाधिकानि पञ्चपलशतानि कुम्भमाहु: । तच्च पलद्वयं तु प्रसृतिरित्यादिना परिभाषायां दर्शितम् । ततश्च यथाधिकारं व्यवस्थेति ।

वह्निपुराणे तु—

प्रथमा गुडधेनु: स्यात् ।

इत्यादिकमभिधाय ।

---

* तुला भारचतुष्टयादीति न· प्र· पु· पाठ: ।

सप्तमी लवणधेनुस्तु दधिधेनुरथाष्टमी ।
नवनीतेन तैलेन गन्धैः प्रोक्ता तथा परा ॥

रवेश्चान्ये महर्षय इति क्वचित् पाठः ।

कुम्भाः स्युर्द्रवधेनूनां द्रोणेनैव हि राशयः ।
सर्वाः समफलाः प्रोक्ताः मध्यमोत्तमकन्यसाः ॥
स्वशक्तितो नृपश्रेष्ठ दरिद्रस्य चतुर्गुणा ।
कन्यसा सेश्वराणां तु दरिद्राणां सदोत्तमा ॥
एतदेव विधानं स्यात् सर्वशश्च यशस्करः ।
गुडधेन्वादयो देया उपरागादिपर्वसु ॥
कार्त्तिक्यां तु तथा माघ्यां युगादिषु च पर्वसु ।
समुपोष्य नरो दद्यात् सप्तम्यां तु दिने रवेः ॥
दिनत्रयं तदाहारो* याति विष्णोः परं पदम् ।
इह लोकेऽपि सौभाग्यमायुरारोग्यमेव च ॥
वैष्णवं लोकमाप्नोति मरणे स्मरणं हरेः ।
दशार्बुदसहस्राणि दश चाष्टौ च धर्मवित् ॥
न शोकदुःखमाप्नोति दौर्गत्यं जायते न च ।

इति गुडधेन्वादिदानविधिः ।

## अथ तिलधेनुदानम् ।

### विष्णुधर्मे । वशिष्ठ उवाच ।

तिलधेनुं प्रवक्ष्यामि केशवप्रीणनाय च ।
दत्त्वा भवति यस्याश्च नरेन्द्र विधिरुत्तमः ॥
यां दत्त्वा ब्रह्महा गोघ्नः पितृघ्नो गुरुतल्पगः ।

---

* तदाहारो गुडाहारः ।

अगारदाही गरदः सर्वपापयुतोऽपि वा ॥
महापातकयुक्तश्च संयुक्तश्चोपपातकैः ।
मुच्यते ह्यखिलैः पापैर्विष्णुलोकं च गच्छति ॥
अनुलिप्ते महीपृष्ठे वस्त्राजिनकुशावृते ।
धेनुं तिलमयीं कृत्वा सर्वरत्नैरलङ्कृताम् ॥
धेनुं द्रोणेन कुर्वीत आढकेन तु वत्सकम् ।
स्वर्णशृङ्गीं रूप्यखुरां गन्धघ्राणवतीं तथा ॥
कुर्याच्च शर्कराजिह्वां गुडास्यामविकम्बलाम् ।
इक्षुपादां* ताम्रपृष्ठां शुचिमुक्ताफलेक्षणाम् ॥
प्रशस्तपत्रश्रवणां फलदन्तवतीं शुभाम् ।
स्रग्दामपुच्छां कुर्वीत नवनीतस्तनान्विताम् ॥
सितसूत्रशिरालां† च सितसर्षपरोमिकाम् ।
फलैर्मनोहरैर्भक्ष्यैर्मणिमुक्ताफलान्विताम् ॥
सितवस्त्रयुगच्छन्नां घण्टाभरणभूषिताम् ।
ईदृक्संस्थानसम्पन्नां कृत्वा श्रद्धासमन्वितः ॥
कांस्योपदोहनां दत्त्वा केशवः प्रीयतामिति ।
या लक्ष्मीः सर्वदेवानां या च देवेष्ववस्थिता ॥
धेनुरूपेण सा देवी मम पापं व्यपोहतु ।
देहस्था या च रुद्राणी शङ्करस्य सदा प्रिया ॥
धेनुरूपेण सा देवी मम पापं व्यपोहतु ।
विष्णोर्वक्षसि या लक्ष्मीः स्वाहा या च विभावसोः ॥
चन्द्रार्कशक्रशक्तिर्या धेनुरूपास्तु सा श्रिये ।

* इक्षुदण्डामिति न० प्र० पु० पाठः ।
† शिरा नाडी अस्त्यस्याः ।

चतुर्मुखस्य या लक्ष्मीर्या लक्ष्मीर्धनदस्य च ॥
या लक्ष्मीर्लोकपालानां सा धेनुर्वरदास्तु मे ।
स्वधा त्वं पितृमुख्यानां स्वाहा यज्ञभुजां तथा ॥
सर्वपापहरा धेनुरस्माच्छान्तिं प्रयच्छ मे ।

वह्निपुराणे त्वयं मन्त्रः ।

तिलाश्च पितृदेवत्या निर्मिताश्चेह गोसवे ।
ब्रह्मणा तन्मयी धेनुर्दत्ता प्रीणातु केशवम्—इति॥
ततः प्रदक्षिणं कृत्वा पूजयित्वा प्रणम्य च ।
सदक्षिणा मया तुभ्यं दत्तेत्युक्त्वा विसर्जयेत् ॥
अनेन विधिना दत्त्वा तिलधेनुं नराधिप ।
सर्वपापविनिर्मुक्तः परं ब्रह्माधिगच्छति ॥
यश्च गृह्णाति विधिवद्दीयमानां प्रमोदयेत् ।
दीयमानां प्रपश्यन्ति ये च संहृष्टमानसाः ॥
तेऽप्यशेषाघनिर्मुक्ताः प्रयान्ति परमां गतिम् ।
प्रशान्ताय सुशीलाय वेदव्रतधराय च ॥
धेनुं तिलमयीं दत्त्वा न शोचति कृताकृते ।
त्रिरात्रं यस्तिलाहारस्तिलधेनुप्रदो भवेत् ॥
एकाहमथ तानत्ति तद्गतेनान्तरात्मना ।
दानाद्विशुद्धपापस्य तस्य पुण्यकृतो नृप ॥
चान्द्रायणादप्यधिकं कथितं तिलभक्षणम् ।

वराहपुराणे । होतोवाच ।

तिलधेनुं जलधेनुं रसधेनुं च पार्थिव ।
देहि शीघ्रं येन भवान् क्षुत्तृषावर्जितो दिवि ॥

रमते यावदादित्यस्तप्यते दिवि चन्द्रमाः ।
एवमुक्तस्ततो राजा विधानं पृष्टवानिदम् ॥
कम्बलं* सूक्ष्मसूत्रं तु पादा इक्षुमयास्तथा ।
ताम्रपृष्ठं भवेत् तस्य ईक्षणे मणिमौक्तिकैः ॥
चारुपत्रमयौ कर्णौ दन्ताः फलमयास्तथा ।
नवनीतस्तनौ कुर्यात् पुष्पमालामयीं कुरु ॥
पुच्छं तु मणिमुक्ताभिः फलैस्तां च समर्चयेत् ।
सुभगभ्रूयुगच्छन्नां† चारुवस्त्रविभूषिताम् ॥
इहक्संस्थानसम्पन्नां कृत्वा श्रद्धासमन्वितः ।
कांस्योपदोहनां दद्याद्देवी मे प्रीयतामिति ॥
मन्त्राभिमन्त्रितां कृत्वा तद्भक्ताय निवेदयेत् ।
यावन्तस्तिलवस्त्राणां धातुमूलफलस्य च ॥
विद्यन्ते रजोविन्दवस्तावत् स्वर्गं वसेन्नरः ।
पितॄन् विगतपापाँश्च कृत्वाधस्ताद्गतानपि ॥
प्राप्य देव्याः शुभान् लोकान् स्थापयेदविचारणात् ।
तस्मिँस्तु रमते वत्स यावदाचन्द्रतारकौ ॥
तथा कालादिहायातो जायते पृथिवीपतिः ।
इहैव तेजःसम्पन्नो बहुपुत्रः सुखान्वितः ॥
पुनर्देव्यां रतो नित्यं पूजयेद्विधिनाचलम् ।
प्राप्य योगशतैर्यत् तत् प्राप्नोति परमं पदम् ॥

इति देवीपुराणोक्तस्तिलधेनुदानविधिः ।

* कम्बलो गलरोमरूपसास्ना ।

† शुभवस्त्रयुगच्छन्नामिति न॰ प्र॰ पु॰ पाठः ।

## [त्रुटिः* ।]

यथा भवेत् तिलधेनोस्तच्छृणुष्व नराधिप ।
चतुर्भिः सेतिकाभिस्तु प्रस्थ एकः प्रकीर्त्तितः ॥
ते षोडश भवेद्धेनुश्चतुर्भिर्वत्सको भवेत् ।
इक्षुदण्डमयाः पादा दन्ताः पुष्पमयाः शुभाः ॥
नासा गन्धमयी तस्या जिह्वा गुडमयी तथा ।
पुच्छे स्रक् कल्पनीया स्याद्घण्टाभरणभूषिता ॥
ईदृशीं कल्पयित्वा तु स्वर्णशृङ्गीं प्रकल्पयेत् ।
कांस्यदोहां रूप्यखुरां पूर्वधेनुविधानतः ॥
तिलधेनुं ततो दत्त्वा द्वादश्यां नियतः शुचिः ।
आत्मानं तारयेद्दुर्गान्नरकात् कामभाग्भवेत् ॥

'सेतिका' कुडवः स च द्वादशप्रसृतिपरिमितः ।

**महाभारते ।**

सुदक्षिणां काञ्चनचारुशृङ्गीं कांस्योपदोहां द्रविणोत्तरीयाम् ।
धेनुं तिलानां ददतो द्विजाय लोका वसूनां सुलभा भवन्ति ॥

**तथा ।**

धेन्वाः प्रमाणेन समप्रमाणां धेनुं तिलानामपि च प्रदाय ।

---

* अष्टाशीत्युत्तरत्रिशततम( ३८८ )पृष्ठस्यद्वितीयपङ्क्तौ
"एवमुक्तस्ततो राजा विधानं पृष्टवानिदम्"
इति पद्यस्याधस्त्रुटिरित्यवगन्तव्यम् ।
महाशयवरा भ्रान्तिपिशाच्या को न मोहितः ।
यतः प्रादामकाण्डे वस्त्रुटिमेलनजं श्रमम् ॥
इति संशोधकः ।

पानीयवापीं च यमस्य लोके न यातनां काञ्चिदुपैति मर्त्यः ॥

तथा ।

गोमत्या विद्यया धेनुं तिलानामभिमन्त्र्य यः ।
रसरत्नमयीं दद्यान्नापि शोचेत् कृताकृते ॥

गोमतीविद्याऽपि तत्रैव । तद्यथा ।

गावो मामुपतिष्ठन्तु हेमशृङ्ग्यः पयोमुचः ।
सुरभ्यः सौरभेय्यश्च सरितः सागरं यथा ॥
गावः पश्याम्यहं नित्यं गावः पश्यन्तु मां सदा ।
गावोऽस्माकं वयं तासां यतो गावस्ततो वयम् ॥
एवं रात्रौ दिवा वाऽपि समेषु विषमेषु च ।
महाभयेषु च नरः कीर्त्तयन्मुच्यते भयात्–इति ॥

आदित्यपुराणे ।

दरिद्रः खलु यो दद्यात् तिलधेनुं विधानतः ।
गोमयेनोपलिप्याऽथ तत्र धेनुं समालिखेत् ॥
तिलैराकीर्य सर्वाङ्गं तिलधेनुं प्रकल्प्य च ।
खुरेषु चैव शृङ्गेषु देयं कनकमेव च ॥
सचैलां दक्षिणां चैव ब्राह्मणाय निवेदयेत् ।
तिलधेनुं प्रयच्छेत् तु स्वर्गलोकं च गच्छति ॥
पापैः* सर्वैः प्रमुच्येत कर्मणा मनसा कृतैः ।
तिलसंख्याश्च यावत्यस्तावत्कोटिशतानि च ॥
मोदते तत्र वर्षाणां वसुलोके न संशयः ।

---

* ऋणैरिति न. प्र. पु. पाठः ।

अथ मानुष्यमायाति कदाचित् कालपर्ययात् ॥
धनधान्यसमृद्धे वै जायते महतां कुले ।

इति तिलधेनुदानविधिः ।

## पुलस्त्य उवाच ।

विधानं तिलधेनोर्यत् तच्छृणुष्व नराधिप ।
षोडशाढकमयी धेनुश्चतुर्भिर्वत्सको भवेत् ॥
दक्षुदण्डमयाः पादाः दन्ताः पुष्पमयाः शुभाः ।
नासा गन्धमयी तस्या जिह्वा गुडमयी तथा ॥
पुच्छे स्रक् कल्पनीया स्याद्घण्टाभरणभूषिता ।
ईदृशीं कल्पयित्वा तु स्वर्णशृङ्गीं प्रकल्पयेत् ॥
रौप्यखुरां कांस्यदोहां पूर्वधेनुविधानतः ।
एवं विधानां तां कृत्वा ब्राह्मणाय तु दापयेत् ॥
कृष्णाजिनस्थितां धेनुं वासोभिर्भूषितां शुभैः ।
सूत्रेण सूत्रितां कृत्वा पञ्चरत्नसमन्विताम् ॥
सर्वौषधिसमायुक्तां मन्त्रपूतां तु दापयेत् ।
अन्नं मे जायतां सद्यः पानं सर्वरसास्तथा ॥
कामान् संपादयास्माकं तिलधेनो द्विजार्पिता ।
गृह्णामि देवि त्वां भक्त्या कुटुम्बार्थे विशेषतः ॥
भरस्व कामैर्मां सर्वैस्तिलधेनो नमोऽस्तु ते ।
एवं विधानतो दत्ता तिलधेनुर्नृपोत्तम ॥
सर्वकामसमावाप्तिं कुरुते नाऽत्र संशयः ।
जलधेनुस्तथैवेह कुम्भे धेनुः प्रकल्पिता ॥
दत्ता तु विधिना कामान् सद्यः सर्वान् प्रयच्छति ।

धेनुश्च तत्त्वतो* दत्ता पौर्णमास्यां नराधिप ॥
पितॄँस्तारयते दुर्गान्नरकात् कामदा भवेत् ।
घृतधेनुस्तथा दत्ता विधानेन विचक्षणैः ॥
सर्वकामसमावाप्तिं कुरुते कान्तिदा भवेत् ।
रसधेनुं तथा दत्त्वा कार्त्तिके मासि पार्थिव ॥
सर्वान् कामानवाप्नोति नित्यं सुगतिभाग्भवेत् ।

इति पद्मपुराणोक्तः पञ्चधेनुदानविधिः ।

अगस्त्य उवाच† ।

तिलधेनुं प्रवक्ष्यामि दुर्गा येन प्रसीदति ।
अपि दुष्कृतकर्मापि यां दत्त्वा निरृणो भवेत् ॥
प्रत्यक्षा येन‡ देवी स्याद्राज्यपुत्रसुखावहा ।
भवति न चिरेणैव तां शृणुष्व नृपोत्तम ॥
देवदेवीमनुज्ञाप्य सुस्नातो विजितेन्द्रियः ।
पूजयेत् पुष्पगन्धाद्यैर्दीपधूपविचित्रकैः ॥
हुत्वा हुताशने देवीं तथा द्रोणमयीं कुरु ।

'हुत्वा हुताशने देवीमिति' पूर्वोक्तहोमप्रकारेण देवीं प्रीणयित्वा ।

आढकेन भवेद्वत्सः सर्वरत्नविभूषिताम् ।
हेमशृङ्गीं रूप्यखुरां गन्धघ्राणां सुशोभनाम् ॥
मुखं गुडमयं कार्यं जिह्वामन्नमयीं तथा ।

---

* तत्त्वमिति याथार्थ्यम् ।

† अगस्त्य उवाचेत्यत्र पुलस्त्य उवाचेति न० प्र० पुस्तके उपलभ्यते ।

‡ प्रत्यक्षरूपेति न० प्र० पु० पाठः ।

सनत्कुमार उवाच ।

अतः परं प्रवक्ष्यामि तिलधेनुविधिं क्रमात् ।
पूर्वोक्तमण्डलं कुर्याच्छिवपूजां च पश्चिमे ॥
तस्याग्रे मध्यतो भूमौ पद्ममालिख्य शोभनम् ।
वस्त्रैराच्छादितं पद्मं तन्मध्ये विन्यसेद्बुधः ॥

'पूर्वोक्तमण्डलं' लिङ्गं तुलापुरुषदानविहितमण्डलम् । तस्य मण्डलस्य पश्चिमे प्राङ्मुखः शिवः पूज्यः । शिवस्य पुरतो मण्डलस्य मध्यभागे शालिचूर्णादिना पद्मं विलिख्य वस्त्रैराच्छाद्य तत्र तिलपुष्पं न्यसेदित्यन्वयः ।

तिलपुष्पं तु कृत्वा तु हैमं पुष्पं विनिक्षिपेत् ।
त्रिंशन्निष्केण कर्त्तव्यं तदर्धार्धेन वा पुनः ॥
पञ्चनिष्केण कर्त्तव्यं तदर्धार्धेन वा पुनः ।

'तिलपुष्पं' द्रोणादिपरिमिततिलराशिमयं पद्मिनीपुष्पं कृत्वा तत्र वस्त्राद्याच्छन्नं हेमपद्मं न्यसेत् ।

तस्याग्रे कारयेद्विद्वान् पद्मं तिलमयं शुभम् ।
अब्जं द्रोणेन कर्त्तव्यमथ भारेण कारयेत् ॥
वस्त्रैराच्छाद्य तन्मध्ये स्वर्णपद्मं विनिक्षिपेत् ।

इति कामिकोक्तेः ।

तमाराध्य विधानेन गन्धपुष्पादिभिः क्रमात् ।
पद्मस्योत्तरदिग्भागे विप्रानेकादश न्यसेत् ॥
तानभ्यर्च्य विधानेन गन्धपुष्पादिभिः क्रमात् ।
आच्छाद्य उत्तमं श्रङ्गं विप्रेभ्यो दापयेत् क्रमात् ॥
उष्णीषं च प्रदातव्यं कुण्डलैश्च विभूषयेत् ।
हेमाङ्गुलीयकं दत्वा ब्राह्मणेभ्यो विधानतः ॥
एकादशैव वस्त्राणि तेषामग्रे प्रकीर्य च ।

२

तेषु वस्त्रेषु निक्षिप्य तिलखारीं पृथक् पृथक् ॥
कांस्यपात्रं शतपलं विभिद्यैकादशांशकम् ।
इक्षुदण्डाश्च दातव्यास्तत्र तत्र पृथक् पृथक् ॥
गोशृङ्गे च हिरण्ये च द्विनिष्केण तु कारयेत् ।
राजतेन तु कुर्वीत खुरं निष्कद्वयेन तु ॥
एवं पृथक् पृथग्दत्वा तत् तिलेषु विनिक्षिपेत् ।

षोडशद्रोणा 'खारी'। कांस्यपात्रं दोहकं शतस्यैकादशांशकं प्रत्येकं प्रत्येकं नवपलमित्यर्थः। 'तत् तिलेषु विनिक्षिपेदिति' एवं हेमशृङ्गादीनि प्रत्येकं तिलखार्यां निक्षिप स्वर्णशृङ्गाद्युपेतास्तिलमध्ये धेनवः कल्पनीया इति रुद्रैकादशकमन्त्रैर्विप्रेभ्यो दापयेत्

तथा ।

पद्मस्य पूर्वदिग्भागे रवीन् द्वादश पूजितान् ।
एतेनैव तु मार्गेण ताँश्च श्रद्धासमन्वितः ॥
द्वादशादित्यमन्त्रेण दापयेद्देवमेव च ।
पूर्वदक्षिणदिग्भागे द्विजान् षोडश संस्थितान् ॥
मूर्त्तिविघ्नेशमन्त्रैश्च दापयेत् पूर्ववत् पुनः ।

अत्र पद्मोत्तरदिग्भागे एकादश विप्रा रुद्ररूपाः पूज्याः। तेभ्यः प्रागुक्तमेकादशधा स्थितं तिलखार्यादि देयम् ।

मन्त्रस्तु–

ये देवासोदिव्येकादशस्थ ।

इत्यादिः । तथा पद्मस्य पूर्वदिग्भागे द्वादश विप्रानादित्यरूपानर्चयेत् । तेभ्यो ऽपि कांस्यपात्रं शतपलं द्वादशधा विभज्य पूर्ववत् सुवर्णशृङ्गादियुतां प्रत्येकं तिलखारीं दद्यात् ।

मन्त्रश्च–

यज्ञो देवानाम् ।

इत्यादित्यलिङ्गकः । तथा पद्मस्य दक्षिणे भागे षोडश विप्रान् मूर्त्तिविशेषरूपानर्चयेत् ।

मूर्त्तयो भवादिका अष्टौ । तद्यथा ।

भवः शर्वश्च रुद्रश्च पशुपत्युग्रसंज्ञकौ ।
महादेवश्च भीमश्च ईशानश्चाष्टमः स्मृतः ॥

विशेषनामानि तु गणेशदाने वक्ष्यन्ते ।

तेभ्योऽपि शतपलं कांस्यपात्रं षोडशधा विभज्य पूर्ववत् प्रत्येकं सुवर्णशृङ्गाद्युपेतां तिलखारीं दद्यात् ।

मन्त्रस्तु—

भवाय देवाय० ।

इत्यादिप्रणवादिनमोऽन्तेन नाम्ना कर्त्तव्यः ।

यजमानेन कर्त्तव्यं सर्वमेतद्यथाक्रमम् ।
केवलं रुद्रदानं वा आदित्येभ्योऽथ वा पुनः ॥
मूर्त्त्यादीनां च वा देयं यथाविभवविस्तरम् ।
पद्मं विन्यस्य रजसा शेषं वा कारयेन्नृपः ॥
दक्षिणा च प्रदातव्या पञ्चनिष्केण भूषणम् ।

एतच्च पद्मद्वारादि विशेषदानान्तं सर्वं रुद्राद्यन्यतमोल्लेखकं वा दानं मध्यपद्ममेकमेव वा कार्यम् । सर्वत्र च मध्यपद्मं गुरवे देयम् ।

एवं कृत्वा विधानेन हेमाब्जं गुरवे ददेत् ।

इति वातुलोक्तेः ।

सर्वेष्वपि पद्मेषु भूषणं पञ्चनिष्कहेम्ना कार्यम् । शिवार्चा स्नपनं होमादि च प्राग्वत् । दक्षिणाऽऽचार्यर्त्विगादेः ।

तदुक्तं कामिके ।

पूर्ववन्मण्डपं कृत्वा कुर्याद्वै मण्डलान्वितम् ।

तद्वत् पूजां च होमं च स्नपनाद्यं तथैव च ॥
पञ्चाङ्गभूषणं* पञ्चनिष्केणात्र प्रकल्पयेत् ।
दक्षिणां पूर्ववद्दद्यादनुक्तं पूर्ववद्भवेत्—इति ॥

इति लिङ्गपुराणोक्तस्तिलधेनुदानविधिः ।

सप्तव्रीहिमयाः सप्त धेनवः परिकीर्त्तिताः ।
यथा तिलमयी धेनुस्तथैवैतास्तु कारयेत् ॥
यच्च व्रीहिमयी धेनुर्गोधूमा सतिला परा ।
माषमुद्गमयी चैव सप्रियङ्गुश्च सप्तमी ॥
उपस्करं तु सर्वासु तिलधेनुवदीरितम् ।
एतासामेव धेनूनामङ्गानि तिलधेनुवत् ॥
सप्तव्रीहिमयाः सप्त यो ददातीह मानवः ।
स याति परमं स्थानं वायुभूतः खमूर्त्तिमान् ॥
ब्रह्महा च सुरापश्च तस्करो गुरुतल्पगः ।
धेनुदानेन पूतोऽसौ याति विष्णोः परं पदम् ॥

इति विश्वामित्रप्रोक्तः सप्तव्रीहिधेनुदानविधिः ।

## अथ घृतधेनुदानविधिः ।

## वशिष्ठ उवाच ।

तिलाभावे तथा दद्याद्घृतधेनुं यतव्रतः ।
येन भूप विधानेन तदिहैकमनाः शृणु ॥
वासुदेवं जगन्नाथं घृतक्षीराभिषेचनात् ।
संपूज्य पूर्ववत् पुष्पैर्गन्धपुष्पादिभिर्नरः ॥
अहोरात्रोषितो नाम्ना अभिष्टूय घृतार्चिषम् ।
घृतार्चिषे जगन्नाथाय देवाय नमः ।

इति मनुः ।

---

* पञ्चाङ्गभूषणमिति कुण्डलकटकग्रैवेयकादि ।

गव्यस्य सर्पिषः कुम्भं पुष्पमालादिभूषितम् ।
कांस्यापिधानसंयुक्तं सितवस्त्रयुगेन च ॥
हिरण्यगर्भसहितं मणिविद्रुममौक्तिकैः ।

अत्र पलसहस्रपरिमाणः 'कुम्भः' । द्वादशपलाधिकानि पञ्चपलशतानीति केचित् । तदेतत् परिभाषायामुपवर्णितम् । 'कांस्यापिधानसहितं' कांस्यपात्रापिहितम् । 'हिरण्यगर्भसहितं' मध्यवर्त्तिना हिरण्येन सहितमित्यर्थः । 'मणिविद्रुममौक्तिकैः' सहितमिति शेषः ।

इक्षुयष्टिमयान् पादान् खुरान् रौप्यमयाँस्तथा ।
सौवर्णे चाक्षिणी कुर्याच्छृङ्गे चागुरुकाष्ठजे ॥

अत्र सुवर्णादेरनुदितसंख्यतया यथाशक्ति विधानम् ।

सप्तधान्यमये पार्श्वे पत्त्रोर्णेन च कम्बलम् ।
कुर्यात् तुरुष्ककर्पूरैर्घ्राणं फलमयाँस्तु तान् ॥
तद्वच्छर्करया जिह्वां गुडक्षीरमयं मुखम् ।

'पत्त्रोर्णं' धौतकौशेयम् । 'तुरुष्कः' सिह्लकः ।

क्षौमसूत्रेण लाङ्गूलं रोमाणि सितसर्षपैः ।
ताम्रपात्रमयं पृष्ठं कुर्याच्छ्रद्धासमन्वितः ॥
ईदृक्स्वरूपां सङ्कल्प्य घृतधेनुं नराधिप ।
तद्वत् कल्पनया विद्वान् घृतवत्सं प्रकल्पयेत् ॥

'तद्वत्' धेनुवत् खुरशृङ्गादियुक्तमित्यर्थः । स च धेनोश्चतुर्थभागेन कर्त्तव्यः ।

तं च विप्रं महाभाग मनसैव घृतार्चिषम् ।
कल्पयित्वा ततस्तस्मै प्रयतः प्रतिपादयेत् ॥
एतां ममोपकाराय गृह्णीष्व त्वं द्विजोत्तम ।
प्रीयतां मम देवेशो घृतार्चिः पुरुषोत्तमः ॥
इत्युदाहृत्य विप्राय दद्याद्धेनुं नराधिप ।

स्कन्दपुराणे । अयं मन्त्रः ।

घृतं गावः प्रसूयन्ते घृतं भूम्यां प्रतिष्ठितम् ।
घृतमग्निश्च देवाश्च घृतं मे संप्रदीयताम् ॥

विश्वामित्रः ।

घृतमग्निर्घृतं सोमस्तन्मयाः सर्वदेवताः ।
घृतधेनुप्रदानेन सर्वास्तुष्यन्ति देवताः ॥

इति ।

घृतरत्नं सुवर्णानां सम्यक् कल्पनया कृतम् ।
दत्त्वैकरात्रं स्थित्वा तु घृताहारो नराधिप ॥
मुच्यते सर्वपापेभ्यस्तथा दानफलं शृणु ।
घृतक्षीरवहा नद्यो यत्र पायसकर्दमाः ॥
तेषु सर्वेषु लोकेषु सुपुण्येषूपजायते ।
पितुरूर्ध्वं नयेत् सप्त पुरुषाँस्तस्य येऽप्यधः ॥
ताँस्तेषु नृप लोकेषु स नयत्यस्तकल्मषः ।
सकामानामियं व्युष्टिः* कथिता नृपसत्तम ॥
विष्णुलोकं नरा यान्ति निष्कामा घृतधेनुदाः ।
घृतमग्निर्घृतं सोमस्तन्मयाः सर्वदेवताः ॥
घृतं प्रयच्छता दत्ता भवन्त्यखिलदेवताः ।

सुवर्णमत्र दक्षिणा । अनुक्तदक्षिणेषु तस्य यथाशक्ति विहितत्वात् ।
इति विष्णुधर्मोक्तो घृतधेनुदानविधिः ।

अगस्त्य उवाच ।

तिलाभावे प्रदातव्या सर्पिर्धेनुर्विजानता ।
स्नापयित्वा भवानीं च घृतक्षीरैर्यथाविधि ॥

---

* व्युष्टिरिति समृद्धिः फलं वा ।

पूजयेत् पुष्पमालाभिर्नैवेद्यैः सुमनोहरैः ।
आहरेत् सर्वद्रव्याणि उपकल्पेत तत्र ताम् ॥
गव्यस्य सर्पिषः कुम्भे पुष्पमालाविभूषिते ।
कांस्यपात्र्या तथा वस्त्रैश्च्छादयीत विधाय ताम् ॥
हिरण्यगर्भसहितां मणिविद्रुममौक्तिकैः ।
पादामिक्षुमयान् कुर्यात् कुर्याद्रौप्यमयान् शफान् ॥
हैमं चक्षुस्तथा श्रृङ्गे कृष्णागुरुमये शुभे ।
सप्तधान्यैश्च तत्पार्श्वे पत्रोर्णेन च कम्बलम् ॥
घ्राणं त्वगुरुकर्पूरैः स्तनान् फलमयान् शुभान् ।
मुखं च गुडक्षीरेण सितां जिह्वां प्रकल्पयेत् ॥

'सिता' शर्करा ।

पुच्छं क्षौममयं कार्यं रोमाणि सितसर्षपैः ।
ताम्रपृष्ठं विचित्रं तु ईदृग्रूपां मनोरमाम् ॥
विधिना घृतवत्सं च कुर्याल्लक्षणलक्षितम् ।
एतैः कृत्वा तथा नत्वा पूजयित्वा विधानतः ॥
तद्भक्ताय प्रदातव्या मङ्गला शास्त्रपारगे ।
इमां ममोपकाराय गृह्णीष्व मदनुग्रहात् ॥
प्रीयतां नन्दिनी देवी मङ्गला चर्चिका उमा ।
इत्युक्त्वा चार्चयेद्धेनुं कृत्वा नन्दां मनोऽनुगाम् ॥
अनेन विधिना देया सर्पिषो धेनुरुत्तमा ।
हिरण्यरत्नधेनुश्च प्रदेया विधिनाऽमुना ॥
मुच्यते सर्वपापेभ्यः सर्वान् कामानवाप्नुयात् ।
यत्र क्षीरवहा नद्यो यत्र सर्पिर्वहा ह्रदाः ॥
पायसाः कर्दमा यत्र तस्मिन् लोके महीयते ।

तेषां स्वामित्वमाप्नोति मुदा परमया युतः ॥
दश पूर्वापराँस्तार्य आत्मानं त्वेकविंशकम् ।
भूयः पृथ्वीशतां याति इह लोके स मानवः ॥
सकामानामियं व्युष्टिर्धेनोस्तावदुदाहृता ।
देव्या लोकमवाप्नोति निष्कामो घृतधेनुदः ॥

इति देवीपुराणोक्तो घृतधेनुदानविधिः ।

गवाभावे तथा दद्याद्घृतधेनुं प्रयत्नतः ।
येन कार्या विधानेन तदिहैकमनाः शृणु ॥
आदित्यं तु जगन्नाथं घृतक्षीराभिषेचनैः ।
संपूज्य पूर्ववत् पुष्पैर्गन्धपुष्पादिभिर्नरः ॥
अहोरात्रोषितो भूत्वा अभिप्लुत्य घृतार्चिषम् ।
गव्यस्य सर्पिषः कुम्भं पुष्पमालाविभूषितम् ॥
कांस्योपधानसंयुक्तं सितवस्त्रयुगेन च ।
हिरण्यगर्भसहितं मणिविद्रुममौक्तिकैः ॥
इक्षुयष्टिमयाः पादाः खुरा रौप्यमयास्तथा ।
सौवर्णे चाक्षिणी कुर्याच्छृङ्गे चागुरुकाष्ठजे ॥
सप्तधान्यमये पार्श्वे पत्रोर्णेन च कम्बलम् ।
कुर्यात् तुरुष्ककर्पूरं घ्राणं फलमयाँस्तनान् ॥
तद्वच्छर्करया जिह्वां गुडक्षीरमयं मुखम् ।
क्षौमसूत्रेण लाङ्गूलं रोमाणि सितसर्षपैः ॥
ताम्रपात्रमयं पृष्ठं कुर्याच्छ्रद्धासमन्वितः ।
ईदृक्स्वरूपां सङ्कल्प्य घृतधेनुं नराधिप ॥
तद्वत् कल्पनया धेनोर्घृतवत्सं प्रकल्पयेत् ।
तं च विप्रं महाभाग मनसैव घृतार्चिषम् ॥

कल्पयित्वा ततस्तस्मै प्रयतः प्रतिपादयेत् ॥
इमां ममोपकाराय गृह्णीष्व त्वं द्विजोत्तम ।
प्रीयतां मम देवेशो घृतार्चिर्मिहिरोत्तमः ॥
इत्युदाहृत्य विप्राय दद्याद्धेनुं नरोत्तम ।
दत्त्वैकरात्रं स्थित्वा च घृताहारो नराधिप ॥
मुच्यते सर्वपापेभ्यस्तस्य दानफलं शृणु ।
घृतक्षीरवहा नद्यो यत्र पायसकर्दमाः ॥
तेषु लोकेषु नित्यं स सुपुण्येषु प्रमोदते ।
पितुरूर्ध्वं नयेत् सप्त पुरुषाँस्तस्य येऽप्यधः ॥

इत्यादित्यपुराणोक्तो घृतधेनुदानविधिः ।

भविष्योत्तरे ।

घृतधेनुविधानेन नवनीतमयी शुभा ।
दातव्या नृपते धेनुर्न्यूनाधिक्यविवर्जिता ॥
मन्त्रः स एव निर्दिष्टो घृतधेनौ च यः स्मृतः ।
शृणु पार्थ महाबाहो प्रदानफलमुत्तमम् ॥
घृतक्षीरवहा नद्यो यत्र पायसकर्दमाः ।
घृतधेनुप्रदो याति तत्र कामैः प्रपूजितः ॥
पितुरूर्ध्वं नयेत् सप्त पुरुषाँस्तस्य येऽप्यधः ।
तान् श्रेष्ठेष्विह लोकेषु स नयत्यस्तकल्मषान् ॥
सकामानामियं व्युष्टिः कथिता नृपसत्तम ।
निष्कल्मषं पदं यान्ति निष्कामास्तत्प्रदायिनः* ॥

आह कात्यायनः ।

अलाभे यो गवां दद्याद्घृतधेनुं यथाविधि ।

---

* इति नवनीतधेनुदानविधिरिति न० प्र० पुस्तकेऽधिको वर्त्तते ।

२

दुर्गाणि तारितो धेन्वा देवनद्यां प्रमोदते ॥
घृतालाभे तु यो दद्यात् तिलधेनुं समाहितः ।
सर्वकामवहा नद्यस्तं सेवन्ते दिवि स्थितम् ॥
तिलालाभे तु यो दद्याज्जलधेनुं समाहितः ।
सर्वान् कामानवाप्नोति नात्र कार्या विचारणा ॥
घृतधेनुं नरो दद्यात् तिलधेनुं यथाक्रमम् ।
जलधेनुं यथा यो वै शश्वन्न च्यवते दिवः ॥
जितेन्द्रियाय शान्ताय वैष्णवाय यथाविधि ।
धेनुं दत्त्वा घृतमयीं विष्णुसालोक्यमश्नुते ॥
पितरं चैव धर्मात्मा पितामहमथापि वा ।
घृतधेन्वा परित्राति* सप्त सप्त च सप्त च ॥

इति घृतधेनुदानविधिः ।

## अथ जलधेनुदानम् ।

## वशिष्ठ उवाच ।

जलधेनुं प्रवक्ष्यामि प्रीयते दत्तया यया ।
देवदेवो हृषीकेशः सर्वगः सर्वभावनः ॥
जलकुम्भं नरव्याघ्र सुवर्णरजतान्वितम् ।
रत्नगर्भमशेषैस्तु ग्राम्यैर्धान्यैः समन्वितम् ॥
सितवस्त्रयुगच्छन्नं दूर्वापल्लवशोभितम् ।
कुष्ठमांसीमुरोशीरवालकामलकैर्युतम् ॥
प्रियङ्गुपत्रसहितं सितवस्त्रोपवीतिनम् ।
सच्छत्रं स उपानत्कं दर्भविष्टरसंस्थितम् ॥
चतुर्भिः संवृतं भूप तिलपात्रैश्चतुर्दिशम् ।

* परत्रापीति न॰ प्र॰ पु॰ पाठः ।

स्थापितं दधिपात्रेण घृतक्षौद्रवता मुखे ॥
उपोषितः समभ्यर्च्य वासुदेवं जलेश्वरम्* ।
पुष्पधूपोपहारैस्तु यथाविभवमादृतः ॥
सङ्कल्प्य जलधेनुं च कुम्भं तमभिपूज्य च ।
पूजयेद्वत्सकं तद्वत् कुम्भं जलमयं बुधः ॥
एवं संपूज्य गोविन्दं जलधेनुं सवत्सकाम् ।
सितवस्त्रधरः शान्तो वीतरागो विमत्सरः ॥
दद्याद्द्विजाय राजेन्द्र प्रीत्यर्थं जलशायिनः ।
जलशायी जगद्योनिः प्रीयतां मम केशवः ॥
इति चोच्चार्य भूनाथ विप्राय प्रतिपाद्यताम् ।
अपक्वान्नाशिना स्थेयमहोरात्रमतः परम् ॥

'जलकुम्भमित्यादि' कुम्भोऽत्र कलशः । सुवर्णरजतयोरनियतपरिमाणतया यथाशक्ति विधानम् । पञ्चरत्नानि धान्यानि च परिभाषायामुक्तानि ।

अथ यद्यपि सामान्येनोपदेशस्तथाऽपि तत्सामान्यादितरेषु तथात्वमिति न्याया दितरधेनुवदविरुद्धधर्मानुष्ठानं वेदितव्यम् । ततश्च सुवर्णस्य शृङ्गाकृतित्वं रजतस्य खुराकृतित्वं तिलपात्राणां ताम्रपात्रमयत्वं दधिपात्रस्य कांस्यपात्रमयत्वं चानुसन्धेयम् । तथा धान्यानि पार्श्वद्वये कुष्ठादीनि घ्राणदेशे प्रियङ्गुपात्रं श्रवणे यज्ञोपवीतं शिरःस्थाने स्थापयेत् । वत्सोऽपि चतुर्थांशेन धेनुवत् कार्यः ।

क्वचित् तु—

पूजयेद्वत्सकं तद्वत् कृतं घृतमयं बुधः ।

इति पाठाद्घृतजलयोर्विकल्पोऽवगम्यते । दानवाक्यं तु पूर्ववत् । दक्षिणा चात्र यथाशक्ति सुवर्णमिति ।

अनेन विधिना दत्त्वा जलधेनुं नराधिप ।
सर्वान् कामानवाप्नोति ये दिव्या ये च मानुषाः ॥

---

* जलेश्वरमिति क्वचित् पाठः ।

शरीरारोग्यमावाधाप्रशमः सार्वकामिकः ।
नृणां भवति दत्तायां जलधेन्वां न संशयः ॥

इति विष्णुधर्मोक्तो जलधेनुदानविधिः ।

**भानुरुवाच ।**

जलधेनुं प्रवक्ष्यामि प्रीयते दत्तया यया ।
देवदेवो मयूखेशः सर्वगः सर्वभावनः ॥

'जल कुम्भं समानीयेत्यादि' विष्णुधर्मतुल्यार्थम् ।

विशेषस्तु-

ततः संपूज्य चादित्यं जलधेनुं सवत्सकाम् ॥
दद्याद्विप्राय देवाग्रे प्रीत्यर्थं मिहिरस्य* तु ।
आदित्यस्य जगद्योनिः प्रीयतां मिहिरः सदा ॥
इति चोच्चार्य तां गां तु विप्राय प्रतिपादयेत् ।
अनेन विधिना यस्तु जलधेनुं महामुने ॥
सर्वाह्लादानमाप्नोति यांश्च ध्यायति मानवः ।
सर्वपापविनिर्मुक्तः पितरं सपितामहम् ।
प्रपितामहं यथा पूर्वपुरुषाणां चतुष्टयम् ॥
आत्मानं तनयं पौत्रं तदधस्ताच्चतुष्टयम् ।
तारयेत् स मुनीन्द्रेह जलधेनुप्रदो नरः ॥
यश्च गृह्णाति विधिवत् तस्याप्येवंविधाः कुले ।
चतुर्दश तथा चैव ददतश्चानुमोदतः ॥
दीयमानां प्रपश्यन्ति जलधेनुं च ये नराः ।
तेऽप्यशेषैघनिर्मुक्ताः प्रयान्ति परमां गतिम् ॥

इति आदित्यपुराणोक्तो जलधेनुदानविधिः ।

---

* सूर्यस्य ।

**अगस्त्य उवाच ।**

तोयधेनुं शृणु वत्स यथा देवी प्रसीदति ।
कुम्भं तोयसुसंपूर्णं रत्नवस्त्रयुगान्वितम् ॥
समस्तवीजसंयुक्तं दूर्वापल्लवशोभितम् ।

'समस्तवीजानि' सर्वधान्यानि ।

दूर्वाक्षतदधिशङ्खकुष्ठामलकचन्दनैः ।
माल्यच्छत्रसमायुक्तं तिलपात्रैश्च संयुतम् ॥
दधिक्षीरघृतं पात्रं विधानेनोपकल्पयेत् ।
वत्सकं कल्पयेत् तस्यास्तद्वत् तोयमयं बुधः ॥
देवीमभ्यर्च्य विधिवत् सोपवासोऽथ नक्तवान् ।
देवीभक्ते प्रदद्याद्यः सर्वान् कामानवाप्नुयात् ॥
जयारिसूदनी देवी देवानां भयनाशिनी ।
वेदमातर्वरे दुर्गे सर्वगे सुभगे नमः ॥
अनेन वत्समन्त्रेण नन्दानाम्नाऽभिमन्त्रयेत् ।
देवी मे प्रीयतां नित्यं यथोदितफलं शिवा ॥

इति देवीपुराणोक्तो जलधेनुदानविधिः ।

**स्कन्दपुराणे ।**

जलधेनुं च यो दद्यात् तस्य दानफलं शृणु ।
प्रपां सत्रं तडागं वा कूपं वाऽपि सुपुष्कलम् ॥
कृत्वा कुम्भान् सुवर्णांश्च गन्धमाल्यैरलङ्कृतान् ।

'प्रपा' पानीयशाला । 'सत्रं' शाला सभाजनसमाश्रया । 'सुवर्णान्' शोभनवर्णान् ।

पुष्पैश्च विविधाकारैरभ्यर्च्य द्विजसत्तमान् ।
भक्ष्यभोज्यैः सुतृप्तानां तिलपात्राणि दापयेत् ॥

दक्षिणां पुष्कलां दद्यादेभ्यस्त्वाशंसयेत् ततः ।

'एभ्यः' द्विजेभ्यः ।

आपः शिवास्तु सौम्याश्च तर्पयन्तु पितॄन् मम ।
कामदाः कामदानाय भवन्त्विति च वै वदेत् ॥
एवं दत्त्वा तु तां धेनुं पुनः कृत्वा च वै सदा ।
आवाहयेत् प्रपां देवीं ब्रह्मलोकसमर्पिणीम् ॥
तिलपात्राणि दत्त्वा च तथा वस्त्रयुगं शुभम् ।
सुवर्णस्य च सान्निध्यं फलानि विविधानि च ॥
ततो दद्याच्छुचिः स्नातो ब्राह्मणेभ्यो यथाविधि ।
एवं विधानतो दत्त्वा ब्रह्मलोके महीयते ॥

विश्वामित्रः ।

शरीरारोग्यमाबाधाप्रशमः सार्वकालिकः ।
नृणां भवति दत्तानां जलधेन्वां न संशयः ॥

इति जलधेनुदानविधिः ।

## अथ क्षीरधेनुदानम् ।

विनीताश्व उवाच ।

क्षीरधेनुं प्रवक्ष्यामि तां निबोध नराधिप ।
अनुलिप्ते महीपृष्ठे गोमयेन नरोत्तम ॥
गोचर्ममात्रमानेन कुशानास्तीर्य सर्वतः ।
तत्रोपरि महाराज न्यसेत् कृष्णाजिनं बुधः ॥
तत्रोपरि कुण्डलीकां गोमयेन कृतामपि ।
क्षीरकुम्भस्ततः स्थाप्यश्चतुर्थांशेन वत्सकम् ॥
सुवर्णमुखश‍ृङ्गाणि चन्दनागुरुकाणि च ।
प्रशस्तपत्रश्रवणां तिलपात्रोपरि न्यसेत् ॥

मुखं गुडमयं तस्या जिह्वा शर्करया तथा ।
फलप्रशस्तदन्तां च मुक्ताफलमयेक्षणाम् ॥
इक्षुपादां दर्भरोमां सितकम्बलकम्बलाम् ।
ताम्रपृष्ठां कांस्यदोहां पट्टसूत्रमयं तथा ॥
पुच्छं च नृपशार्दूल नवनीतमयस्तनीम् ।
स्वर्णशृङ्गीं रौप्यखुरां पञ्चरत्नमयां भुवि ॥
चत्वारि तिलपात्राणि चतुर्दिक्ष्वपि स्थापयेत् ।
सप्तव्रीहिसमायुक्तां दिक्षु सर्वासु प्रक्षिपेत् ॥
एवं लक्षणसंयुक्तां क्षीरधेनुं प्रकल्पयेत् ।
आच्छाद्य वस्त्रयुग्मेन गन्धपुष्पैः समर्चयेत् ॥
धूपं दीपादिकं कृत्वा ब्राह्मणाय निवेदयेत् ।
आच्छाद्यालङ्कृतं कृत्वा मुद्रिकाकर्णमात्रकैः ॥
पादुकोपानहौ छत्रं दत्त्वा दानं समर्पयेत् ।
अनेनैव तु मन्त्रेण क्षीरधेनुं प्रकल्पयेत् ॥
या लक्ष्मीः सर्वभूतानामित्यादि नरपुङ्गव ।
आप्यायस्वेति मन्त्रेण क्षीरधेनुं प्रसादयेत् ॥
गृह्णामि त्वां देवि भक्त्या ग्राहको मन्त्रमुच्चरेत् ।
एवं धेनुं प्रदायाऽथ क्षीराहारोदितं चरेत् ॥
त्रिरात्रं तु पयोभक्षो ब्राह्मणो राजसत्तम ।
दीयमानां प्रपश्यन्ति ते यान्ति परमां गतिम् ॥
सतां हेमसहस्रेण शतेनाथ स्वशक्तितः ।
शतार्धमथ वाऽप्यर्धं तथैवार्धं यथेच्छया ॥
दत्त्वा धेनुं महाराज शृणु तस्यापि तत्फलम् ।
दिव्यं वर्षसहस्रं तु रुद्रलोके महीयते ॥

पितृपितामहैः सार्धं ब्रह्मणो भवनं व्रजेत् ।
दिव्यं विमानमारूढो दिव्यगन्धानुलेपनः ॥
क्रीडित्वा सुचिरं कालं विष्णुलोकं स गच्छति ।
द्वादशादित्यसंकाशैर्विमानैर्वरमण्डितैः ॥
गीतवादित्रनिर्घोषैरप्सरोगणसेवितैः ।
तत्रोपविष्टोऽसौ राजा विष्णुसायुज्यतां व्रजेत् ॥
य इदं शृणुयाद्राजन् पठेद्वा भक्तिभावितः ।
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥

इति स्कन्दपुराणोक्तः क्षीरधेनुदानविधिः ।

## अथ दधिधेनुदानम् ।

विनीताश्व उवाच ।

दधिधेनोर्महाराज विधानं शृणु साम्प्रतम् ।
अनुलिप्ते महीभागे गोमयेन नराधिप ॥
गोचर्ममात्रं तु पुनः पुष्पप्रकरसंयुतम् ।
कुशैरास्तीर्य वसुधां कृष्णाजिनकृतास्तराम् ॥
दधिकुम्भं च संस्थाप्य सप्तधान्यस्य चोपरि ।
चतुर्थांशेन वत्सं तु सौवर्णमुखसंयुतम् ॥
प्रशस्तपत्रश्रवणां मुक्ताफलमयेक्षणाम् ।
चन्दनागुरुशृङ्गीं च मुखं वै गन्धमालिकम् ॥
जिह्वा शर्करया राजन् घ्राणं श्रीखण्डकं तथा ।
फलमूलमया दन्ताः सितसूत्रस्य कम्बला ॥
ताम्रपृष्ठा दर्भरोमा पुच्छं सूत्रमयं तथा ।
स्वर्णशृङ्गीं रौप्यखुरां नवनीतमयस्तनीम् ॥
इक्षुपादां सुसंस्कृत्य सर्वाभरणभूषिताम् ।

आच्छाद्य वस्त्रयुग्मेन पुष्पगन्धैस्तु पूजिताम् ॥
ब्राह्मणाय कुलीनाय साधुवृत्ताय धीमते ।
समाधियमयुक्ताय तादृशाय प्रदापयेत् ॥
पुच्छदेशोपविष्टाय मुद्रिकाकर्णमात्रकैः ।
पादुकोपानहौ छत्रं दत्त्वा मन्त्रमनुस्मरेत् ॥
दधिक्राव्णेति मन्त्रेण दधिधेनुं प्रदापयेत् ।
एवं दधिमयीं धेनुं दत्त्वा राजर्षिसत्तम ॥
एकाहारो दिनं तिष्ठेद्दध्ना च नृपनन्दन ।
यजमानो वसेद्राजन् त्रिदिनं च द्विजोत्तम ॥
दीयमानां प्रपश्यन्ति तेऽपि यान्ति परां गतिम् ।
दश पूर्वान् दश परानात्मानं चैकविंशकम् ॥
विष्णुलोकमवाप्नोति यावदाभूतसंप्लवम् ।
दाता च दापकश्चैव तेऽपि यान्ति परां गतिम् ॥
यत्र मधुवहा नद्यो यत्र पायसकर्दमाः ।
ऋषयो मुनयः सिद्धास्तत्र गच्छन्ति धेनुदाः ॥
य इदं शृणुयाद्भक्त्या श्रावयेद्वापि मानवः ।
सोऽश्वमेधफलं प्राप्य विष्णुलोकं स गच्छति ॥

इति स्कन्दपुराणोक्तो दधिधेनुदानविधिः ।

## अथ मधुधेनुदानम् ।

मधुधेनुं प्रवक्ष्यामि सर्वपापप्रणाशिनीम् ।
अनुलिप्ते महीपृष्ठे कृष्णाजिनकुशोत्तरे ॥
धेनुं मधुमयीं कृत्वा संपूर्णघटपूरिताम् ।
तद्वच्चतुर्थभागेन वत्सकं परिकल्पयेत् ॥
सौवर्णं तु मुखं कृत्वा शृङ्गाण्यगुरुचन्दनैः ।

पृष्ठं ताम्रमयं तस्य पुच्छं सूत्रमयं तथा ॥
पादास्त्विक्षुमयाः कार्याः सितकम्बलकम्बलाम् ।
मुखं गुडमयं कृत्वा जिह्वा शर्करयान्विता ॥
मौक्तिकं नयने तस्या दन्ताः फलमयास्तथा ।
दर्भरोमधरा देवी रूप्यखुरविभूषिता ॥
अश्वत्थपत्रश्रवणां* नवनीतमयस्तनीम् ।
सर्वलक्षणसंयुक्तां सप्तधान्यानि दापयेत् ॥
चत्वारि तिलपात्राणि चतुर्दिक्षु च विन्यसेत् ।
आच्छाद्य वस्त्रयुग्मेन घण्टाभरणभूषिताम् ॥
कांस्योपदोहनीं दत्त्वा गन्धपुष्पैस्तु पूजिताम् ।
अयने विषुवे पुण्ये व्यतीपाते दिनक्षये ॥
संक्रान्तावुपरागे च सर्वकालमतन्द्रितः ।
द्रव्यब्राह्मणसंपत्तिर्दृष्टमात्रेण दापयेत् ॥
ब्राह्मणाय दरिद्राय श्रोत्रियाय कुटुम्बिने ।
आर्यावर्त्तसमुत्पन्ने वेदवेदाङ्गपारगे ॥
तादृशाय प्रदातव्या मधुधेनुर्नरोत्तम ।
पुच्छदेशोपविष्टाय गन्धधूपादिपूजिताम् ॥
आच्छाद्य वस्त्रयुग्मेन मुद्रिकां कर्णमात्रिकाम् ।
स्वशक्त्या दक्षिणां दत्त्वा वित्तशाठ्यविवर्जितः ॥
उदकपूर्वं तु कर्त्तव्यं पश्चाद्दानं समर्पयेत् ।
रसज्ञा सर्वदेवानां सर्वभूतहितेरता ॥
प्रीयन्तां पितृदेवाश्च मधुधेनो नमोऽस्तु ते ।
एवमुच्चार्य तां धेनुं ब्राह्मणाय निवेदयेत् ॥

---

* प्रशस्तपत्रश्रवणामिति न० प्र० पु० पाठः ।

अहं गृह्णामि त्वां देवि कुटुम्बार्थं विशेषतः ।
कामं कामदुघे कामान् मधुधेनो नमोऽस्तु ते ॥
मधुवातेति मन्त्रेण प्रदाप्यायतचेतसा ।
दत्त्वा धेनुं महाराज छत्रकोपानहौ तथा ॥
एवं यः कुरुते भक्त्या मधुधेनुं नराधिप ।
दत्त्वा दानं पायसेन मधुना च दिनं नयेत् ॥
ब्राह्मणोऽपि त्रिरात्रं तु मधुपायससंयुतः ।
एवं कृते तु यत् पुण्यं तं निबोध नराधिप ॥
यत्र मधुवहा नद्यो यत्र पायसकर्दमाः ।
ऋषयो मुनयः सिद्धास्तत्र गच्छन्ति धेनुदाः ॥
तत्र भोगान् वरान् भुङ्क्ते ब्रह्मलोके स तिष्ठति ।
क्रीडित्वा सुचिरं कालं पुनर्मर्त्त्यमुपागतः ॥
स भुक्त्वा विपुलान् भोगान् विष्णुलोकं च गच्छति ।
दश पूर्वान् दश परानात्मानं चैकविंशकम् ॥
नयेत विष्णुसायुज्यं मधुधेनुप्रसादतः ।
य इदं शृणुयाद्भक्त्या श्रावयेद्वापि मानवः ॥
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ।

इति स्कन्दपुराणोक्तो मधुधेनुदानविधिः ।

## अथ रसधेनुदानम् ।

### विनीताश्व उवाच ।

रसधेनुं महाराज कथयामि समासतः ।
अनुलिप्ते महीपृष्ठे कृष्णाजिनकुशोत्तरे ॥
रसस्य तु घटं राजन् संपूर्णमैक्षवस्य च ।
तद्वत् सङ्कल्पयेत् प्राज्ञश्चतुर्थांशेन वत्सकम् ॥

इक्षुदण्डमयाः पादा राजतखुरसंयुता।
सुवर्णशृङ्गाभरणा वस्त्रपुच्छा घृतस्तनी॥
पुष्पकम्बलसंयुक्ता शर्करामुखजिह्विका।
दन्ताः फलमयास्तस्याः पृष्ठं ताम्रमय शुभम्॥
पुष्परोमां तु राजेन्द्र मुक्ताफलकृतेक्षणाम्।
सप्तव्रीहिसम युक्तां चतुर्दिक्षु सदीपिकाम्॥
सर्वोपस्करसंयुक्तां सर्वगन्धविभूषिताम्।
चत्वारि तिलपात्राणि चतुर्दिक्षु निवेशयेत्॥
ब्राह्मणे वेदविदुषे श्रोत्रियायाहिताग्नये।
पुराणज्ञे विशेषेण साधुवृत्ताय धीमते॥
तादृशाय प्रदातव्या रसधेनुः कुटुम्बिने।
दाता स्वर्गमवाप्नोति सर्वपापविवर्जितः॥
दाता वा ग्राहको वापि एकाहं रसभोजनः।
सोमपानं भवेत् तस्य सर्वमेव फलं भवेत्॥
दीयमानां तु पश्यन्ति तेऽपि यान्ति परां गतिम्।
धेनुं च पूजयित्वाऽग्रे गन्धधूपस्रगादिभिः॥
पूर्वोक्ता ये च मन्त्राश्च तानेव प्रयतः स्मरेत्।
एवमुच्चारयित्वा तु दीयते वै द्विजोत्तमे॥
दश पूर्वान् पराँश्चैव आत्मानं चैकविंशकम्।
नयेत परमं स्थानं यस्मान्नावर्त्तते पुनः॥
एषा ते कथिता राजन् रसधेनुरनुत्तमा।
ददस्व च महाराज पुण्यश्लोकानवाप्नुहि॥
य इदं पठते नित्यं शृणुयाद्वापि भक्तितः।
सर्वपापविनिर्मुक्तो विष्णुसायुज्यतां व्रजेत्॥

इति स्कन्दपुराणोक्तो रसधेनुदानविधिः।

अथ शर्कराधेनुदानम् ।

विनीताश्व उवाच ।

तद्वच्च शर्कराधेनुं राजन् कुर्यात् यथार्थतः ।
अनुलिप्ते महीपृष्ठे कृष्णाजिनकुशोत्तरे ॥
धेनुः शर्करया राजन् सदा भारचतुष्टयम् ।
उत्तमा कथ्यते सद्भिश्चतुर्थांशेन वत्सकः ॥
तदर्धं मध्यमा प्रोक्ता चतुर्थांशेन कन्यसा ।
तद्वद्वत्सं प्रकुर्वीत चतुर्थांशेन मानवः ॥
अथ वा धेनुतः कुर्यादष्टांशेन तु वत्सकम् ।
स्वशक्त्या कारयेद्धेनुं यथात्मानं न पीडयेत् ॥
सर्ववीजानि संस्थाप्य चतुर्दिक्षु समन्ततः ।
सौवर्णमुखश्रृङ्गाणि मौक्तिकैर्नयनानि च ॥
गुडेन च मुखं कार्यं जिह्वा पिष्टमयी तथा ।
कम्बलं पट्टसूत्रेण घण्टाभरणभूषिता* ॥
इक्षुपादा रौप्यखुरा नवनीतमयस्तनी ।
प्रशस्तपत्रश्रवणा सितचामरभूषिता ॥
पञ्चरत्नसमायुक्ता दर्भरोमसमन्विता ।
कांस्योपदोहना सस्यगन्धपुष्पैः समन्विता ॥
ईदृग्विधानसंयुक्ता वस्त्रैराच्छादितोपरि ।
गन्धपुष्पैरलङ्कृत्य ब्राह्मणाय निवेदयेत् ॥
श्रोत्रियाय दरिद्राय साधुवृत्ताय धीमते ।
वेदवेदाङ्गविदुषे विशेषेणाग्निहोत्रिणे ॥
अनुसूयवे प्रदातव्या न मत्सरयुताय वै ।

---

* कण्ठाभरणसंयुतेति पाठः पुस्तकान्तरे ।

अयने विषुवे पुण्ये व्यतीपाते च षण्मुख ॥
येषु पुण्येषु कालेषु यदृच्छा वापि दापयेत् ।
सत्पात्रं तु द्विजं दृष्ट्वा स्वागतं श्रोत्रियं गृहे ॥
तादृशाय प्रदातव्या पुच्छदेशे निवेदयेत् ।
पूर्वामुखस्थितो दाता अथ वा तु ह्युदङ्मुखः ॥
धेनुं पूर्वमुखीं कृत्वा वत्समुत्तरतो न्यसेत् ।
दानकाले तु ये मन्त्रास्तान् पठित्वा समर्चयेत् ॥
आच्छाद्य चैव तं विप्रं मुद्रिकाकर्णवेष्टकैः ।
स्वशक्त्या दक्षिणां दद्याद्गन्धपुष्पं सचन्दनम् ॥
धेनुं समर्पयेत् तस्य मुखं च न विलोकयेत् ।
एकाहं शर्कराहारो ब्राह्मणस्त्रिदिनं वसेत् ॥
सर्वपापहरा धेनुः सर्वकामप्रदायिनी ।
सर्वकामसमृद्धस्तु जायते नाऽत्र संशयः ॥
दीयमानां प्रपश्यन्ति तेऽपि यान्ति परां गतिम् ।
य इदं शृणुयाद्भक्त्या पठते वापि मानवः ॥
मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ।

इति स्कन्दपुराणोक्तः शर्कराधेनुदानविधिः ।

## अथ कार्पासधेनुदानविधिः ।

### वराह उवाच ।

अतः परं प्रवक्ष्यामि धेनुं कार्पासकीं शुभाम् ।
विश्वस्य गुह्यगुप्त्यर्थं ब्रह्मणा वांशुकं कृतम्* ॥
कार्पासमूलं तच्चापि तेनासावुत्तमं स्मृतम् ।
सा च कार्पासभारेण धेनुः श्रेष्ठा प्रकीर्त्तिता ॥

---

* ब्रह्मणा च स्वयं कृतमिति क्वचित् पाठः ।

मध्यमा च तदर्धेन तस्याप्यर्धेन कन्यसा ।
पूर्ववद्वस्त्रधान्यं च हिरण्यं च तथैव च ॥
वत्सकं तु चतुर्थांशाद्दानमन्त्रो विधीयते ।
कुर्वीत पूर्ववद्वत्सं वस्त्रधान्याद्युपस्करम् ॥

'पूर्ववदिति' वराहपुराणोक्ततिलधेनुवदित्यर्थः ।

हेमकुन्देन्दुदेहेश क्षीरार्णवसमुद्भवे ।
सोमप्रिये सुधेन्वाख्ये सौरभेयि नमोऽस्तुते ॥
दत्तेयमिन्दुनाथाय शशांकायामृताय च ।
अत्रिनेत्रप्रजाताय सोमराजाय वै नमः ॥

दानमन्त्रः ।

यस्त्वेवं परया भक्त्या ब्राह्मणाय प्रयच्छति ।
स याति सोमलोकं तु सोमेन सह मोदते ॥
न रोगी न ज्वरी कुष्ठी कुले तस्य प्रजायते ।
पुत्रदारसमोपेतो जीवेच्च शरदां शतम् ॥

इति वराहपुराणोक्तः कार्पासधेनुदानविधिः ।

## अथ लवणधेनुदानम् ।

### युधिष्ठिर उवाच ।

कृष्ण कृष्ण महाबाहो सर्वशास्त्रविशारद ।
कथयस्व हि दानानामुत्तमं यत् प्रकीर्त्तितम् ॥
येन दत्तेन दत्तानि सर्वाण्यपि भवन्त्युत ।
सर्वकामसमृद्धश्च सर्वपापक्षयो भवेत् ॥
प्रायश्चित्तविशुद्धिश्च तन्मे कथय सुव्रत ।

### श्रीकृष्ण उवाच ।

शृणु राजन् प्रवक्ष्यामि लवणस्येह कल्पिताम् ।

गोमयेनोपलिप्ते तु दर्भसंस्तरसंस्थितम् ॥
आविकं चर्म विन्यस्य पूर्वाशाभिमुखं स्थितम् ।
वस्त्रेणाच्छादितां कृत्वा धेनुं कुर्वीत मध्यगाम् ॥
आढकेनैव कुर्वीत बहुवित्तोऽल्पवानपि ।
स्वर्णशृङ्गीं रौप्यखुरामिक्षुपादां फलस्तनीम् ॥
कार्या शर्करया जिह्वा गन्धघ्राणवती तथा ।
समुद्रोदरजां शुक्तिं कर्णौ च परिवेष्टयेत्* ॥
शृङ्गे चन्दनकाष्ठाभ्यां मौक्तिके चाक्षिणी शुभे ।
कपोलौ सक्तुपिण्डाभ्यां यवानास्ये प्रदापयेत् ॥
कम्बलं पट्टसूत्रेण ग्रीवायां छत्रिका तथा ।
पृष्ठे वै ताम्रपात्रं तु अपाने गुडपिण्डकम् ॥
लाङ्गूले कम्बलं दद्याद्रसान् क्षीरप्रदेशतः ।
योनिप्रदेशे च मधु सर्वतस्तु फलान्विताम् ॥
एवं सम्यक् परिस्थाप्य लवणस्य कृतां च गाम् ।
स्थापयेत् वत्सकं चापि चतुर्भागेन मानवः ॥
एवं धेनुं समभ्यर्च्य माल्यवस्त्रविभूषणैः ।
स्नात्वा देवार्चनं कुर्याद्ब्राह्मणानभिपूज्य च ॥
कृत्वा प्रदक्षिणं गां तु पुत्रभार्यासमन्वितः ।
ब्राह्मणाय सुशीलाय वृत्तयुक्ताय वै नृप ॥
दद्यात् पर्वसु सर्वेषु मन्त्रेणानेन मानवः ।
लवणे वै रसाः सर्वे लवणे सर्वदेवताः ॥
सर्वदेवीमयि देवि लवणाख्ये नमोऽस्तु ते ।
एवमुच्चार्य मन्त्रान्ते विप्राय प्रतिपादयेत् ॥

---

* परिकल्पयेदिति पुस्तकान्तरे ।

सम्यक् प्रदक्षिणं कृत्वा दक्षिणासहितं नृप ।
प्रदक्षिणा मही तेन कृता भवति भारत ॥
सर्वदानानि दत्तानि सर्वर्त्तुकफलानि च ।
सर्वे रसाः सर्वमन्त्राः सर्वमेतच्चराचरम् ॥
सौभाग्यं च परां वृद्धिं शरीरारोग्यसम्पदः ।
नृणां भवति दत्त्वा तु रसधेनुं न संशयः ॥
स्वर्गे च नियतं वासो यावदाभूतसंप्लवम् ।
पत्त्रोर्णकम्बलगलां लवणोदकेन कृत्वा फलस्तनवतीमविचर्म पृष्ठे ।
दत्त्वा द्विजाय विधिवद्रसधेनुमेतां लोकं गवां सकलसौख्ययुतं प्रयाति ॥

इति भविष्यत्पुराणोक्तो लवणधेनुदानविधिः ।

## अथ कर्पूरादिधेनुदानम् ।

कर्पूरधेनुं वक्ष्यामि सर्वगन्धमयीं शुभाम् ।
यां दत्वा सर्वगन्धास्तु प्रदत्ताः स्युर्महीपते ॥
चन्द्रग्रहे वाऽथ भानोः कार्त्तिक्यां विषुवत्यथ ।
द्वादश्यामयने पुण्ये दद्यात् कर्पूरगां विभो ॥
ब्राह्मणाय दरिद्राय शीलवृत्तपराय च* ।
भूमावास्तीर्य नेत्रं तु शङ्खशुक्लाम्बरं शुभम् ॥
कार्या चतुष्पला धेनुः पलमात्रस्तु वत्सकः ।
अथ वा पलिका धेनुर्वत्सः कार्यस्तु कार्षिकः ॥
सुवर्णशृङ्गा रौप्यखुरा पुच्छं कुङ्कुमसंभवम् ।
मृगनाभिमया दन्ता ग्रन्थिपर्णमयं मुखम् ॥
अक्षिणी सिह्लकमये कर्णौ चागुरुकाष्ठजौ ।
देवदारुमयं पुच्छं गुदं गुग्गुलसंभवम् ॥

---

* श्रुतवृत्तरताय चेति क्वचित् पाठः ।

कुष्ठं कपोलकं प्रोक्तमुशीरं चर्म चैव तु ।
उदरे चन्दनं दद्यात् खुराग्रे नखमेव च ॥
एवं संकल्प्य कर्पूरां धेनुं वस्त्रेण पूजिताम् ।
विप्रं संपूज्य कर्पूरां वस्त्रयुग्मेन चैव हि ॥
कर्पूरधेनुं विप्रेश गृहाणेमां सुपूजिताम् ।
पुष्पगन्धस्थिता सा मे कमला प्रीयतामिति ॥
अनेनैव तु मन्त्रेण दानं विप्राय दापयेत् ।
दत्त्वा धेनुमिमां राजन् गन्धर्वाणां समो भवेत् ॥
कल्पत्रयं वसेत् स्वर्गे राजराजो भवेदिह ।
सर्वान् कामानवाप्नोति गौरीलोके महीयते ॥

तथा ।

सर्वकामप्रदा धेनुः शर्करायाः प्रकीर्त्तिता ।
सर्वपापहरा चैव तस्माद्दद्यात् समाहितः ॥
गुडधेनुवदत्रापि मन्त्रावाहनपूजनम् ।
दत्त्वा फलमयीं धेनुं कामानां फलभाग्भवेत् ॥
तथा कस्तूरिकां धेनुं श्रद्धावित्तसमन्वितः ।
पात्रे दद्यान्नृपश्रेष्ठ मन्त्रमेतमुदीरयेत् ॥

इति विष्णुधर्मोक्तः कर्पूरादिधेनुदानविधिः ।

## अथ सुवर्णधेनुदानम् ।

श्रीभगवानुवाच ।

कथयामि रहस्यं ते दानधर्मोपबृंहितम् ।
सुवर्णधेनुसम्बन्धि सर्वपापोपशान्तिदम् ॥
यद्ब्रह्मणापि राजेन्द्र विहितं विष्णुना पुरा ।
तत् ते विस्तरतो राजन् कथयाम्यनुपूर्वशः ॥

सुवर्णस्य सुवर्णस्य शुद्धस्य परिकल्पिताम् ।

एकः सुवर्णशब्दो हिरण्यवचनः परः परिमाणवचनः ।

रौप्यवत्सकसंयुक्तां मुक्ताफलविभूषिताम् ।
प्रवालशृङ्गोपयुतां पद्मरागाक्षिशालिनीम् ॥
घृतपात्रस्तनवतीं कर्पूरागुरुनासिकाम् ।
शर्करारसनोपेतां भृष्टान्न*मुखसंमिताम् ॥
शङ्खशृङ्गान्तरां शुक्तिललाटस्थानकल्पिताम् ।
फलदन्तां वस्त्रयुग्मपार्श्वां क्षौमसुकम्बलाम् ॥
इक्षुपादां नारिकेलश्रवणां गुडजानुकाम् ।
पञ्चगव्यापानवतीं कांस्यपृष्ठसमन्विताम् ॥
सुपट्टसूत्रलाङ्गूलां सप्तधान्यसमन्विताम् ।
फलपुष्पसमोपेतां छत्रोपानत्समन्विताम् ॥
सुवर्णधेनुं विप्राय प्रतिपाद्येद्दर्शे नरः ।
हिरण्यरेताः पुरुषः पुराणः कृष्णपिङ्गलः ॥
तप्तहेमच्छविः स्रष्टा विश्वात्मा प्रीयतामिति ।
अनेनैव तु मन्त्रेण धेनोर्दानं प्रकीर्त्तितम् ॥
अश्वमेधसहस्रस्य फलमाप्नोत्यसंशयम् ।
कुलानां तु सहस्रं तु स्वर्गं नयति तद्बुधः ॥
किमन्यैर्बहुभिर्दानैः पर्याप्तं हेमधेनुना ।
सुवर्णधेनुं दत्त्वा हि कृतकृत्यो भवेन्नरः ॥
हिरण्यगर्भो भगवान् प्रीयतामिति कीर्त्तयेत् ।
उपवासविशुद्धात्मा दद्यात् सोमरविग्रहे ॥
रक्षःपिशाचास्तद्गेहं न पश्यन्ति नराधिप ।

---

* भृष्टाद्येति न॰ प्र॰ पु॰ पाठः ।

कार्त्तिक्यां प्रयतो दद्याद्द्वादश्यां कार्त्तिकस्य तु ॥
दत्त्वा तत्पदमाप्नोति यत्र गत्वा न शोचति ।

इति विष्णुधर्मोक्तः सुवर्णधेनुदानविधिः ।

## अगस्त्य उवाच ।

मनुना यं विधिं कृत्वा प्राप्ता लोका अनुत्तमाः ।
ब्रवीमि तदहं हेमधेनुदानविधिं नृप ॥
शुभां हेममयीं गां च कारयेद्राजतान् खुरान् ।

'शुभां' शुद्धसुवर्णैस्तु घटिताम् । अत्र सुवर्णपरिमाणचतुर्थांशवत्सनिर्माणादिरनुक्ताङ्गोपसंहारः पूर्वोक्तसुवर्णधेनोरवगन्तव्यः ।

तां वस्त्रप्रावृतां कृत्वा प्राप्नुयाल्लोकमुत्तमम् ।
विचित्रचित्रपुष्पैश्च गन्धधूपविलेपनैः ॥
तथा क्षमापयेद्देवीं तां गां तत्र समर्पयेत् ।
देवि त्वदीयादादेशात् तव भक्तेषु दीयते ॥
पुनस्तां विप्रराजाय दापयेच्छिवभाविने ।

'शिवभाविने' शिवध्यायिने ।

अक्षय्यफलकामेन प्रायश्चित्तविशुद्धये ।
मनुना चीर्णमेतद्धि संपतेयुर्नरा अधः ॥
सप्त पूर्वापरान् वंशान् रुद्रकिल्विषसंस्थितान् ।
उद्धृत्य वा नयेद्वत्स देवीलोकमनुत्तमम् ॥

इति देवीपुराणोक्तो हेमधेनुदानविधिः ।

## वह्निपुराणे ।

सुवर्णधेनुश्चाप्यत्र सुवर्णाश्च चतुर्दश ।
सुनिर्णिक्तसुवर्णैश्च सप्तभिर्मध्यमा स्मृता ॥
चतुर्भिः कन्यसा प्रोक्ता चतुर्थांशेन वत्सकः ।

गुडधेनुविधानेन दत्ता सर्वफलप्रदा ॥

## विश्वामित्रः ।

हिरण्यरेताः पुरुषः पुराणः कृष्णपिङ्गलः ।
रत्नहेमच्छविः स्रष्टा विश्वात्मा प्रीयतामिति ॥
हिरण्यगर्भो भगवान् प्रीयतामिति कीर्त्तयेत् ।
सुवर्णधेनुं दत्त्वा च कृतकृत्यो भवेन्नरः ॥

इति सुवर्णधेनुदानविधिः ।

## अथाह वृद्धगौतमः ।

धेनुं स्वर्णमयीं कुर्यात् पूर्वेण विधिना ततः ।
सुवर्णशृङ्गीं रत्नाढ्यां तथा रौप्यखुरामपि ॥
तथा च तर्णकं कुर्यादष्टभागेन पूर्ववत् ।
ब्राह्मणं श्रुतसम्पन्नं वैष्णवं च कुटुम्बिनम् ॥
आचारवन्तं धर्मिष्ठं द्विजशुश्रूषणोद्यतम् ।
गृहमाहूय विधिवत् पूजयेत् पूर्ववच्च तम् ॥
यथा विभवतो भक्त्या होमः पूर्ववदेव हि ।
मन्त्रैस्तु वैष्णवैः सम्यक् पालाशसमिधस्तथा ॥
होमान्ते तां प्रदद्याच्च मन्त्रेणानेन मेहवान् ।
चक्रं सुदर्शनं यस्य राजतेजस्तथैव हि ॥
प्रमेहं हरतु क्षिप्रं विष्णुर्गरुडवाहनः ।

दानमन्त्रः ।

दानं प्रमेहरोगघ्नमेतत् कार्यं मनीषिभिः ॥
कृतेनानेन शाम्यन्ति प्रमेहा दारुणा अपि ।

अत्र 'पूर्ववदिति' राजतवृषभदानवदिति ज्ञेयम् ।

इति प्रमेहघ्नसुवर्णधेनुदानविधिः ।

अथाह बौधायनः ।

सौवर्णीं गां प्रकुर्वीत पलेनार्धेन वा पुनः ।
वित्तशाठ्यं न कुर्वीत कुर्वन्नैवं फलं भवेत् ॥
रत्नशृङ्गीं रौप्यखुरां नानावस्त्रैरलङ्कृताम् ।
ग्रहाणामुपरि स्थाप्य नव धान्यानि विन्यसेत् ॥
होमस्तु पूर्ववत् कार्यो गोविन्दप्रीतये हितः ।
एवं विष्णुप्रतद्विष्णुर्विष्णोर्नुकमिति क्रमात् ॥
समिदाज्यचरुं हुत्वा पूर्णाहुत्यन्त एव हि ।
ततस्तां तु शुची रोगी ब्राह्मणं वेदपारगम् ॥
श्रुतवृत्तोपसम्पन्नं कुलीनं धर्मवादिनम् ।
वृद्धं ज्ञानोपसम्पन्नमनुद्वेगकरं नृणाम् ॥
भक्त्या स्वयं समानीय पूजयेत् प्रीतिपूर्वकम् ।
अङ्गुलीयकपात्राद्यैरुपानच्छत्रकैरपि ॥
मन्त्रेणानेन तां पात्रे दद्याद्रोगी यतात्मवान् ।
गोविन्दं मनसा ध्यायन् गवां मध्ये स्थितं शिशुम् ॥
बर्हापीडकसंयुक्तं वेणुवादनतत्परम् ।
गोपीजनैः परिवृतं वन्यपुष्पावतंसकम् ॥

गोविन्द गोपीजनवल्लभेश कंसासुरघ्न त्रिदशेन्द्रवन्द्य ।
गोदानतृप्तः कुरु मे दयालो ह्यर्शोविनाशं क्षयितारिवर्गः ॥

दानमन्त्रः ।

दानेनानेन नियतमर्शसां जायते क्षयः ।
तस्मात् कुर्यात् प्रयत्नेन सुखार्थं ह्येतदर्शसः ॥

इत्यर्शोघ्नसुवर्णधेनुदानविधिः ।

वायुपुराणे ।

चतुर्विधा च या वन्ध्या भवेद्वत्सवियोजनात् ।
वक्ष्ये तस्याः प्रतीकारं तत्स्वरूपं निबोध मे ॥
हिरण्येन यथा शक्त्या सवत्सां कारयेद्दृढाम् ।
धेनुं पलेन वत्सं च पादेन गुरुरब्रवीत् ॥
धेनुं रौप्यखुरां रत्नं तस्याः पुच्छे नियोजयेत् ।
घण्टां गले च बध्नीयात् सवत्सां प्राङ्मुखः शुचिः ॥
चन्दनागुरुकर्पूरैर्गन्धमाल्यैः सुशोभनैः ।
उपचारैः षोडशभिर्नैवेद्यं पायसं भवेत् ॥
मोदकं च तथापूपं गुडं लवणमेव च ।
जीरकं तु सुविस्तीर्णे शूर्पे वेणुमये दृढे ॥
धेनोरेकं प्रदातव्यं ब्राह्मणस्त्रीषु चैव हि ।
षडष्टौ दश वा दद्यात् तदनन्तरमेव च ॥
ब्राह्मणं सर्वशास्त्रार्थकुशलं धर्मवेदिनम् ।
विद्याविनयसम्पन्नं शान्तं चैव जितेन्द्रियम् ॥
अलोलुपं सर्वजनप्रियं कल्मषवर्जितम् ।
आहूय भक्त्या संपूज्य वस्त्राद्यैर्गन्धपुष्पकैः ॥
तेनैव कारयेत् पूजामादृतो धेनुवत्सयोः ।
होमं च कारयेत् तत्र समिदाज्यचरूत्कटम् ॥
सोमोधेनुमिति मन्त्रं समुच्चार्य ततः पुनः ।
प्राङ्मुखायोपविष्टाय प्रदद्यात् तामुदङ्मुखः ॥
मन्त्रेणानेन विधिवत् पुच्छे हस्तं विधाय च ।
धेनुर्याङ्गिरसः सा तु वशिष्ठे सुरभी च या ॥
दुहिता या तथा भानोरग्नेश्च वरुणस्य च ।

याश्च गावः प्रवर्त्तन्ते वनेषूपवनेषु च ॥
प्रीणन्तु ता मम सदा पुत्रपौत्रप्रदाः सुखम् ।
प्रयच्छन्ति दिवारात्रमविच्छेदं च सन्ततेः ॥

दानमन्त्रः ।

एवं दत्त्वा तु तद्दानं प्रणिपत्य विसर्जयेत् ।

इति वन्ध्यात्वहरसुवर्णधेनुदानविधिः ।

तथा ।

प्रस्विन्नपाणिपादः स्याद्यो हरेत रसादिकम् ।
वक्ष्यामि तत्प्रतीकारं दानहोमादिकर्मणा ॥
पलार्धेन तदर्धेन तदर्धेनाऽथ वा पुनः ।
कुर्याद्धेनुं सुवर्णेन वत्सस्तत्पादतो भवेत् ॥
एवं कृत्वा तु तां धेनुं वस्त्रेणावेष्ट्य शोभनाम् ।
गुडस्योपरि संस्थाप्य पूजयेद्गन्धधूपकैः ॥
गुडस्य च परीमाणं चत्वारिंशत्पलं भवेत् ।
यद्वा तदर्धमेव स्याद्यथाविभवमेव वा ॥
हव्यकव्यादि च घृतदधिक्षीरचतुष्टयम् ।
पादेष्वेकैकेशः स्थाप्यं पूर्वदक्षिणतः क्रमात् ॥
शृङ्गाणि च पुनस्तस्याः कुङ्कुमेनानुलेपयेत् ।
एवं विधाय तां धेनुमाचार्यः स्वर्णरूपिणीम् ॥
होमं समारभेत् कुण्डे स्थण्डिले वाऽथ पूजिते ।
अग्निप्रणयनं कृत्वा ह्याचार्यः सर्ववेदवित् ॥
धर्मज्ञो यज्ञवेदस्तु कुशलः क्रोधवर्जितः ।
अनुद्वेगकरो नृणां पुराणार्थविदङ्गवित् ॥
समिदाज्यतिलैश्चापि मन्त्रैरेभिः क्रमेण तु ।

आयं गौरिति मन्त्रेण समिद्धोमः प्रशस्यते ॥
शौभेद्ये यदि मन्त्रेण आज्यहोमो बुधैः सह ।
तिलहोमो व्याहृतिभिरष्टोत्तरसहस्रकम् ॥
एवं होमं च निर्वर्त्य निर्यातस्याभिषेचनम् ।
अग्नेः पूर्वोत्तरे देशे स्थापयेत् कुम्भमव्रणम् ॥
श्वेतेन वाससा चैव मृत्तिकां गुग्गुलं तथा ।
गोरोचना संभवे च पञ्चभङ्गसमिद्धुते ॥
मन्त्रैरथापोहिष्ठेति तिसृभि*स्तं तु रोगिणम् ।
हिरण्यवर्ण इति च पावमानेन चैव हि ॥
शन्नोवातानुवाकेन शान्तिं प्रथममेव हि ।
कृत्वाभिषेचनं कुर्याच्छुक्लाम्बरधरस्य तु ॥
आहुतीनां च संपातैः पाणिपादौ च लेपयेत् ।
ततस्तां पूजयेद्धेनुं रोगी गन्धाक्षतादिभिः ॥
गाव एव सुरभय इति मन्त्रेण भक्तितः ।
आचार्यायाऽथ तां दद्यात् प्राङ्मुखाय ह्युदङ्मुखः ॥
मन्त्रेणानेन विधिवत् पूजितायां न संशयः ।
आदित्यस्य सुता यास्तु देवानां याश्च धेनवः ॥
पितॄणामपि यक्षाणां गन्धर्वाणां च सर्वशः ।
यक्षाणां गुह्यकानां तु वशिष्ठसुरभिस्तथा ॥
एतास्तुष्टा मम क्षिप्रं धेनोरस्याः प्रदानतः ।
रसचौर्येण यज्जातं वैरूप्यं पाणिपादयोः ॥
तत्सर्वं नाशयन्त्याशु धेनवः सर्वतोषिताः ।

दानमन्त्रः ।

---

* तिसृभिरित्यार्षः ।

अनेन विधिना स्वर्णधेनुदानं करोति यः ।
पूर्वकर्मविपाकोत्थं दुःखं सर्वं प्रणश्यति ॥
दक्षिणां ब्राह्मणे दद्याद्यथाशक्त्याऽथ भक्तितः ।
ब्राह्मणान् भोजयेच्चापि बन्धूनपि च भोजयेत् ॥
स्वयं स्नात्वा च भुञ्जीत मृष्टाहारैस्तु संयतः ।
दानेनानेन नियतं पादप्रस्वेदजां रुजम् ॥
जयन्ति रोगिणा कार्यं पादप्रस्वेदिना ततः ।

इति पादप्रस्वेदघ्नसुवर्णधेनुदानविधिः ।

## अथ स्वरूपतो गोदानं महाभारते ।

दानानामिह सर्वेषां गवां दानं विशिष्यते ।
गावः श्रेष्ठाः पवित्राश्च पावना जगदुत्तमाः ॥
ऋते दधिघृताभ्यां च नेह यज्ञः प्रवर्त्तते ।
तेन यज्ञमशेषं हि गोमूलं संप्रचक्षते ॥
गावोऽधिकास्तपस्विभ्यः सदा सर्वेभ्य एव च ।
तस्मान्महेश्वरो देवस्तदेताभिः सह स्थितः ॥
पयसा हविषा दध्ना शकृताप्यथ चर्मणा ।
अस्थिभिश्चोपकुर्वन्ति वालैः शृङ्गैश्च भारत ॥
गोभिस्तुल्यं न पश्यामि धनं किञ्चिदिहाच्युतम् ।
कीर्त्तनं श्रवणं दानं दर्शनं चापि पार्थिव ॥
गवां प्रशस्यते वीर सर्वपापहरं परम् ।
गावो लक्ष्म्याः सदा मूलं गोषु पाप्मा न विद्यते ॥
स्वाहाकारवषट्कारौ गोषु नित्यं प्रतिष्ठितौ ।
गावो यज्ञप्रणेत्र्यो वै तथा यज्ञस्य गौर्मुखम् ॥
अमृतं ह्यक्षयं दिव्यं रक्षन्ति च वहन्ति च ।

अमृतायतनं चैताः सर्वलोकनमस्कृताः ॥
न गोदानात् परं दानं किञ्चिदस्तीति मे मतिः ।
सा गौर्न्यायार्जिता दत्त्वा कृत्स्नं तारयते कुलम् ॥
अमृतं वै गवां क्षीरमित्युवाच प्रजापतिः ।
तस्माद्ददाति यो धेनुममृतत्वं स गच्छति ॥

## लिङ्गपुराणे ।

अग्न्यागाराणि विप्राणां देवतायतनानि च ।
पूज्यन्ते शकृता यासां किं देयमधिकं ततः ॥

## देवलः ।

विमानवरमारूढो दिव्याभरणभूषितः ।
यो गन्तुं वाञ्छति स्वर्गं स गोदानं प्रयच्छतु ॥
दानमप्यधिकं धेनोर्विद्यते वा समं भुवि ।
नियतं त्रिदशैर्वासः कल्पितोऽस्यास्तु विग्रहे ॥

## भविष्यत्पुराणे । ब्रह्मोवाच ।

आदित्यदुहिता गौर्हि पृथ्वीयं परिकीर्त्तिता ।
श्रेयोऽर्थं सर्वलोकानामुत्पन्ना क्रतुसिद्धये ॥
ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम् ।
एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति ॥
गोभ्यो यज्ञाः प्रवर्त्तन्ते गोभ्यो देवाः समुत्थिताः ।
गोभ्यो वेदाः समुद्गीर्णाः* सषडङ्गपदक्रमाः ॥
शृङ्गमूले गवां नित्यं ब्रह्मविष्णू समाश्रितौ ।
शृङ्गाग्रे सर्वतीर्थानि स्थावराणि चराणि च ॥

---

* समुत्कीर्णा इति न॰ प्र॰ पु॰ पाठः ।

शिरोमध्ये महादेवः सर्वभूतमयः स्थितः ।
ललाटाग्रे स्थिता देवी नासावंशे च षण्मुखः ॥
कम्बलेश्वतरौ नागौ नासापुटसुपालितौ ।
कर्णयोरश्विनौ देवौ चक्षुषोः शशिभास्करौ ॥
दन्तेषु वायवः सर्वे जिह्वायां वरुणः स्थितः ।
सरस्वती च हूंकारे यमयक्षौ च गण्डयोः ॥
सन्ध्याद्वयं तथोष्ठाभ्यां ग्रीवामिन्द्रः समाश्रितः ।
रक्षांसि कक्षदेशे तु साध्याश्चोरसि संस्थिताः ॥
चतुष्पात् सकलो धर्मः स्वयं जङ्घासु संस्थितः ।
खुरमध्ये तु गन्धर्वाः खुराग्रेषु च पन्नगाः ॥
खुराणां पश्चिमाग्रेषु गणा ह्यप्सरसां स्थिताः ।
रुद्राश्चैकादश पृष्ठे वसवः सर्वसन्धिषु ॥
श्रोणीतटस्थाः पितरः सोमो लाङ्गूलमाश्रितः ।
आदित्यरश्मयो बालाः पिण्डीभूता व्यवस्थिताः ॥
साक्षाद्गङ्गा च गोमूत्रे गोमये यमुना स्थिता ।
क्षीरे सरस्वती देवी नर्मदा दधिसंस्थिता ॥
हुताशनः स्वयं सर्पिर्ब्राह्मणानां गुरुः परः ।
अष्टाविंशतिदेवानां कोट्यो रोमसु संस्थिताः ॥
उदरे पृथिवी ज्ञेया सशैलवनकानना ।
चत्वारः सागराः पूर्णा गवां ये तु पयोधराः ॥
एतद्भिः कथितं सर्वं यथा गोषु प्रतिष्ठितम् ।
जगद्धै देवशार्दूल सदेवासुरमानवम् ॥

स्कन्दपुराणे ।

तृणानि खादन्ति वसन्त्यरण्ये पिबन्ति तोयान्यपरिग्रहाणि ।

दुह्यन्ति वाह्यन्ति पुनन्ति पापं गवां रसैर्जीवति जीवलोकः ॥
तुष्टास्तु गावः शमयन्ति पापं दत्तास्तु गावस्त्रिदिवं नयन्ति ।
संरक्षिताश्चोपनयन्ति वित्तं गोभिर्न तुल्यं धनमस्ति किञ्चित् ॥
'शस्पं समश्नाति ददाति नित्यं पापापहं मित्रविवर्धनं च ।
स एव चाऽऽर्यः परिभुज्यते च गोभिर्न तुल्यं धनमस्ति किञ्चित् ॥
तृणानि शुष्काणि वने चरित्वा पीत्वाऽपि तोयान्यमृतं स्रवन्ति ।
यद्गोमयाद्याश्च पुनन्ति लोकान् गोभिर्न तुल्यं धनमस्ति.किञ्चित् ॥

हारीतः ।

बहुक्षीराश्च यो गा वै ब्राह्मणायोपपादयेत् ।
उत्तारयेत् स आत्मानं सप्त सप्त कुलानि च ॥

देवलः ।

सुशीलां लक्षणवतीं युवतिं वत्ससंयुताम् ।
बहुदुग्धवतीं स्निग्धां धेनुं दद्याद्विचक्षणः ॥

वेदव्यासः ।

यश्चात्मविक्रयं कृत्वा गाः क्रीत्वा संप्रयच्छति ।
आत्मविक्रयतुल्यास्ताः शास्वतीर्वृद्धकौशिकः ॥

तथा ।

संग्रामेष्वर्जयित्वा तु यो वै गाः संप्रयच्छति ।
यावतीः स्पर्शयेद्गावः स तावत् फलमश्नुते ॥

'तावदिति' पूर्वोक्ततावद्गोरोमसंमितसंवत्सरं स्वर्गफलमित्यर्थः ।

यो वै द्यूते धनं जित्वा क्रीत्वा गाः संप्रयच्छति ।
स दिव्यमयुतं शक्र वर्षाणां फलमश्नुते ॥

अन्तर्जाताः सुक्रयज्ञानलब्धाः पणक्रीता निर्जिताश्चौकजाश्च ।

कृच्छ्रोत्सृष्टाः पोषणाभ्यागताश्च द्वारैरेतैर्गोविशेषाः प्रशस्ताः ॥

'अन्तर्जाता' गर्भिण्य इति भारतपदप्रकाशकारः । 'सुक्रयलब्धाः' यथामूल्यक्रयप्राप्ताः । 'पणक्रीताः' भृतिलब्धाः । 'निर्जिता' युद्धादिना । 'ओकजाः' गृहजाताः । 'कृच्छ्रोत्सृष्टाः पोषणाभ्यागता इति' व्याध्यादिकृच्छ्राक्रान्ताः सत्यः स्वामिना यास्त्यक्ताः स्वयं च पोषणं कृत्वा लब्धाः ।

रुष्टा दुष्टा* दुर्वला व्याधिता च न दातव्या या च मूल्यैरदत्तैः ।
क्लेशैर्विप्रं या फलैः संयुनक्ति तस्यावीर्याश्चाफलाश्चापि लोकाः ॥

'मूल्यैरदत्तैः' स्वीकृतेति शेषः ।

तथा ।

न कृशां पापवत्सां वा वन्ध्यां रोगान्वितां तथा ।
न व्यङ्गां नापरिश्रान्तां दद्याद्गां ब्राह्मणाय वै ॥
यो दद्यादुपयुक्तार्थां जीर्णां धेनुं च निष्फलाम् ।
तमः संप्रविशेद्दाता द्विजं क्लेशेन योजयेत् ॥

ब्रह्मपुराणे ।

पीतोदकां जग्धतृणां दुग्धचोषां† निरिन्द्रियाम् ।
उन्मत्तामङ्गहीनां च मृतवत्सां महाशनाम् ॥
केशवालपुरीषास्थिक्रव्यादां सन्धिनीं‡ खलाम् ।
पुटधेनुं यमलसूं नित्यं व्रणयितस्तनीम् ॥
न दद्याद्ब्राह्मणेभ्यश्च सदोषं वृषभं तथा ।

'पीतोदकां जग्धतृणामिति' वृद्धत्वोपलक्षणपराम् । 'दुग्धचोषां' स्वक्रोयस्तनपायिनीम् । 'महाशनां' बहुभक्षाम् । 'पुटधेनुं' बाल्यावस्थैव या गर्भिणी ।

---

* उत्सृष्टा चेति न० प्र० पु० पाठः ।

† दुग्धदोहामिति न० प्र० पु० पाठः ।

‡ सन्ध्या वृषभसंयोगस्तज्जगर्भोऽस्त्यस्या इति सन्धिनी ।

विश्वामित्रः ।

नैकशृङ्गां च निश्छृङ्गां* स्फुटिताक्षीं चलत्खुराम् ।
न दद्यात् त्रिस्तनीं चैव गां शुभामेव दापयेत् ॥

महाभारते ।

अम्बरीषो गवां दत्त्वा ब्राह्मणेभ्यः प्रतापवान् ।
अर्बुदानि दशैकं च सराष्ट्रोऽभ्यपतद्दिवम् ॥
दत्त्वा शतसहस्रं तु गवां राजा प्रसेनजित् ।
सवत्सानां महातेजा गतो लोकाननुत्तमान् ॥

तथा ।

प्रासादा यत्र सौवर्णाः शय्या रत्नोज्ज्वलास्तथा ।
वराश्चाप्सरसो यत्र तत्र गच्छन्ति गोप्रदाः ॥
गोप्रदो नरकं नैति यथा भित्त्वाऽम्बुजं जलम् ।
विमानेनार्कवर्णेन दिवि राजन् विराजते ॥
तं चारुवेषाः सुश्रोण्यः शतशो वरयोषितः ।
रमयन्ति विमानस्थं दिव्याभरणभूषिताः ॥
वेणूनां वल्लकीनां च नूपुराणां च निःस्वनैः ।
हासैश्च हरिणाक्षीणां सुप्तः सन् प्रतिबुध्यते ॥

यावन्ति रोमाणि भवन्ति धेन्वास्तावन्ति वर्षाणि महीयते स्वः ।
स्वर्गाच्च्युतश्चापि ततस्त्रिलोके कुले समुत्पत्स्यति गोमतां सः ॥

विष्णुः ।

गोप्रदानेन स्वर्गमाप्नोति दशधेनुप्रदो गोलोकं शतप्रदश्च ब्रह्मलोकम् ।

जाबालः ।

होमार्थमग्निहोत्रस्य यो गां दद्यादयाचिताम् ।

---

* चलच्छृङ्गामिति न· प्र· पु· पाठः ।

त्रिर्वित्तपूर्णा पृथिवी तेन दत्ता न संशयः ॥

याज्ञवल्क्यः ।

यथाकथञ्चिद्दत्त्वा गां धेनुं वाऽधेनु*मेव वा ।
अरोगामपरिक्लिष्टां दाता स्वर्गे महीयते ॥

अङ्गिराः ।

गौरेकस्यैव दातव्या श्रोत्रियस्य विशेषतः ।
सा हि तारयते पूर्वान् सप्त सप्त च सप्त च ॥

नन्दिपुराणे ।

अपात्रे सा तु गौर्दत्ता दातारं नरकं नयेत् ।
कुलैकविंशत्या युक्तं ग्रहीतारं च तारयेत् ॥
विधिना च यदा दत्ता पात्रे धेनुः सदक्षिणा ।
तदा तारयते जन्तून् कुलानामयुतैः शतैः ॥
पात्राण्याध्यात्मिका मुख्या सुशुद्धाश्चाग्निहोत्रिणः ।
देवताश्च तथा मुख्या गोदानं ह्येतदुत्तमम् ॥

महाभारते ।

वृत्तिग्लानं सीदति चातिमात्रं कव्यार्थं च होमहेतोः प्रसुत्याम् ।
गुर्वर्थे वा बालसंवृद्धये वा धेनुं दद्यादेष कालो विशिष्टः ॥

'प्रसुत्यां' सोमयागे ।

तथा ।

न वधार्थं प्रदातव्या न कीनाशे न नास्तिके ।
गोजीवे न च दातव्या तथा गौः पुरुषर्षभ ॥

'कीनाशो' हलवाहकः ।

---

* अधेनुमित्यप्रसूतां गाम् ।

आत्रेयः ।

सीदते बहुभृत्याय श्रोत्रियायाहिताग्नये ।
अतिथिप्रियाय दान्ताय देया धेनुर्गुडान्विता ॥
अकुलीनाय मूर्खाय लुब्धाय पिशुनाय च ।
हव्यकव्यव्यपेताय गौर्न देया कथञ्चन ॥

अथ दानविधिः । विश्वामित्रः ।

प्राङ्मुखीं गामवस्थाप्य सवत्सां तां सुपूजिताम् ।
पुच्छदेशे तु दाता वै स्नातो बद्धशिखो भवेत् ॥
उदङ्मुखस्तु विप्रः स्यात् पात्रलक्षणलक्षितः ।
आज्यपात्रं करे कृत्वा कनकेन समन्वितम् ॥
निक्षिप्य पुच्छं तस्मिँस्तु घृतदिग्धं प्रगृह्य च ।
सतिलं विप्रपाणिं तु प्रागग्रं तु निधापयेत् ॥
सतिलं सकुशं चापि गृहीत्वा दानमाचरेत् ।
अनेनैव तु मन्त्रेण पात्रहस्तो जलं क्षिपेत् ॥
“ यज्ञसाधनभूता या विश्वस्याघप्रणाशिनी ।
विश्वरूपः परो देवः प्रीयतामनया गवा ॥ ”
अनुव्रज्य तु तां धेनुं ब्राह्मणेन समन्विताम् ।
गोमतीं तु ततो विद्यां जपेत प्रयतः शुचिः ॥
उद्दिश्याऽथ वासुदेवं प्रीयतामिति चानघ ।
पात्रं मनसि सञ्चिन्त्य तोयमप्सु विनिक्षिपेत् ॥
जलशायी ब्रह्मपिता पद्मनाभः सनातनः ।
अनन्तभोगशयनः प्रीयतां परमः पिता ॥

गोमतीमाह यमः ।

“ गावः सुरभयो नित्यं गावो गुग्गुलगन्धिकाः ।

गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत् ॥
अन्नमेव परं गावो देवानां हविरुत्तमम् ।
पावनं सर्वभूतानां रक्षन्ति च वहन्ति च ॥
हविषा मन्त्रपूतेन तर्पयन्त्यमरान् दिवि ।
ऋषीणामग्निहोतृणां गावो होमप्रतिष्ठिकाः ॥
सर्वेषामेव भूतानां गावः शरणमुत्तमम् ।
गावः पवित्रं परमं गावो मङ्गलमुत्तमम् ॥
गावः सर्वस्य लोकस्य गावो धन्याः सवाहनाः ।
नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च ॥
नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः ।
ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम् ॥
एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति ।

अन्यापि गोमती महाभारतोक्ता तिलधेनुदाने दर्शिता । ततश्चानयोर्विकल्पानुष्ठानमिति ।

## सर्वगोदानसाधारणं मन्त्रमाह वशिष्ठः ।

घृतक्षीरप्रदा गावो घृतयोन्यो घृतोद्भवाः ।
घृतनद्यो घृतावर्त्तास्ता मे सन्तु सदा गृहे ॥
घृतं मे हृदये नित्यं घृतं नाभ्यां प्रतिष्ठितम् ।
घृतं मे सर्वतश्चैव घृतं मे मनसि स्थितम् ॥
गावो ममाग्रतो नित्यं गावः पृष्ठत एव च ।
गावो मे सर्वतश्चैव गवां मध्ये वसाम्यहम् ॥
इत्याचम्य जपन् सायं प्रातश्च पुरुषः सदा ।
यदह्ना कुरुते पापं तस्मात् स परिमुच्यते ॥

दक्षिणा चात्र सुवर्णम् ।

यदाह वशिष्ठः।

सुवर्णं दक्षिणामाहुर्गोप्रदाने महाफले* ।
सुवर्णं परमं ह्यायुर्दक्षिणार्थं न संशयः ॥
गोप्रदानं तारयते सप्त पूर्वान् पराँस्तथा ।
सुवर्णं दक्षिणां दत्त्वा तावद्द्विगुणमुच्यते ॥
सुवर्णं परमं दानं सुवर्णं दक्षिणा परा ।
सुवर्णं पावनं प्राहुः परिमाणं परं तथा ॥

अत्र सुवर्णशब्दस्य हिरण्यपर्यायत्वे यथाशक्त्यानुष्ठानम्। अपरे त्वाहुः सकृदुच्चरितसुवर्णशब्दावगतपरिमाणार्थपरित्यागानुपपत्तेः सुवर्णशब्दस्य प्राहुरित्यादिक्रियाकर्मभूततया द्वितीयान्तत्वेन लिङ्गविशेषनिर्धारणाच्च परिमाणार्थतैव न्याय्येति। एवं च सत्यनियतानुष्ठानप्रसङ्गभङ्गः। तथा परिमाणपरं तथेत्येतदपि समञ्जसं स्यात्।

अत्र केचिच्चोदयन्ति—

एतदेव विधानं स्यात् त एवोपस्कराः स्मृताः ।
विधानमेतद्धेनूनां सर्वासामपि पठ्यते ॥

इति वचनात् प्रत्यक्षधेनोरपि सकलगुडधेनुधर्मप्राप्तौ शुक्तिकर्णेक्षुपादादित्वमाचरणीयमिति। तदसत्—

दशमी स्यात् स्वरूपतः।

इति स्वरूपशब्द एव सवत्सां गोरूपधारिणीमुपकरणादिविहीनां धेनुमवगमयन् शुक्त्यादिमयीं कर्णादिप्रतिकृतिकृतिं निवारयति। सर्वशब्दश्च प्रकृतापेक्षोऽपि स्वरूपधेनुवर्जमवतिष्ठते। तस्मात् तत् स्वरूपधेन्वा गुडधेनोरितिकर्त्तव्यता कर्त्तव्येति। वक्ष्यमाणसुवर्णशृङ्गिकाविधिस्तु भिन्न एवेति सर्वमनवद्यम्।

इति गोदानविधिः।

---

* महाद्युते इति न० प्र० पु० पाठः।

अथ स्कन्दपुराणे ।

योनरो गां प्रयच्छेत् तु सवत्सां कांस्यदोहनाम् ।
हेमशृङ्गीं रूप्यखुरां दुकूलक्षौमसंयुताम् ॥
शय्यास्तरणसंपन्नां बहुपुष्पफलैर्युताम् ।
ब्राह्मणान् तर्पयित्वा तु गन्धमाल्यैरलङ्कृताम् ॥
देवैरध्युषितां तां तु सर्वैस्तद्वद्द्वयेन तु ।
मृदुबन्धेन बध्नीयादन्तःश्लक्ष्णेन रज्जुना ॥
कुशान् सुवर्णबीजानि तिलान् सिद्धार्थकाँस्तथा ।
प्रदद्यात् तान् ततोऽद्भिश्च मन्त्रेणानेन सुव्रत ॥
सर्वदेवमयीं दोग्ध्रीं सर्वलोकमयीं तथा ।
सर्वलोकनिमित्तां तां सर्वदेवनमस्कृताम् ॥
प्रयच्छामि महासत्त्वामक्षयाय शुभामिति ।
एवं स दत्त्वा यो गां तु यत्र यत्र प्रजायते ॥
तत्र तत्र गता सा तान् जन्तूँस्तारयते भयात् ।
सर्वलोकान्तरे गत्वा रमते च यथा नरः ॥
स तथा मानवो जातो गोसहस्री महाबलः ।
रूपवान् धनवाँश्चैव बहुपुत्रश्च जायते ॥

कात्यायनः ।

शीलोपपन्नां वसनोत्तरीयां कांस्योपदोहां कनकान्तशृङ्गीम् ।
विप्राय दत्त्वा भगवन् प्रियाय प्रयाति लोकानमृतान् सुपुण्यान् ॥

संवर्त्तः ।

यो ददाति शफै रौप्यैर्हेमशृङ्गीमरोगिणीम् ।
सवत्सां वस्त्रसंयुक्तां सुशीलां गां पयस्विनीम् ॥
यावन्ति तस्या रोमाणि सवत्साया दिवं गतः ।

तावतो वत्सरानास्ते स नरो ब्रह्मणोऽन्तिके ॥

देवलः ।

चामीकरमये शृङ्गे कृते रौप्यमयाः खुराः ।
कांस्यजं दोहनं पृष्ठं ताम्रं वस्त्रयुगान्विता ॥
पुष्पमालावृता धूपघण्टाचामरमण्डिता ।
दीयते पुच्छदेशेन श्रद्धया दक्षिणान्विता ॥
दत्त्वैवं दत्तभोगाढ्यो दिव्यस्त्रीवृन्दसंवृतः ।
गोवत्सरोमतुल्यानि वर्षाणि दिवि मोदते ॥

इति हेमशृङ्गीदानविधिः ।

नन्दिपुराणे ।

यो गां सुपरिपूर्णाङ्गीं हेमशृङ्गीमकोपनाम् ।
सुशीलां राजतैः पादैश्चित्रवस्त्रसुसंवृताम् ॥
सलोहपात्रां* कुतपे निविष्टचरणां तथा ।

'कुतपोऽत्र' नेपालकम्बलः ।

स दक्षिणां प्रदद्याद्गां सोऽक्षयं स्वर्गमाप्नुयात् ।
गवि रोमाणि यावन्ति प्रसूतिकुलसंस्थितिः ॥
तावन्त्यब्दानि वसति स्वर्गे दाता न संशयः ।
एतच्छतगुणं पुण्यं कपिलादानतः स्मृतम् ॥

इत्यपरहेमशृङ्गीदानविधिः ।

मत्स्यपुराणे ।

दशसौवर्णिके शृङ्गे खुराः पञ्चपलान्विताः ।
पञ्चाशत्पलिकं कांस्यं ताम्रं वापि तथैव च ॥

---

* सहस्रपात्रामिति न॰ प्र॰ पु॰ पाठः ।

दाता स्यात् स्वर्गमाप्नोति यावदाभूतसंप्लवम् ।

'पञ्चपलानि' रौप्यस्येति विज्ञेयम् । 'ताम्रं' पृष्ठम् । 'कांस्यं' दोहनम् । आच्छादनार्थं वासोयुगं सुवर्णदक्षिणेत्यपि बोद्धव्यम् ।

इति कनकशृङ्गीदानविधिः ।

## ब्रह्मपुराणे ।

गां दद्याद्वेदपूर्णाय विप्राय गृहमेधिने ।
सुवर्णालङ्कृतशृङ्गीं वस्त्रघण्टासमन्विताम् ॥
प्रत्यग्रां त्रिसमृद्धां तु ललाटतटतर्पणाम् ।
राजतच्छन्नचरणां मुक्तालाङ्गूलभूषिताम् ॥
कांस्योपदोहां तृप्तां च लवणादितृणोदकैः ।
गवां पुच्छं गृहीत्वा च ससुवर्णेन पाणिना ॥
गृहस्थो वेदविद्विप्रो दापयेत् तत्प्रतिग्रहम् ।
भोगसौख्यप्रदा चैषा गोमाता पापनाशिनी ॥
कृष्णा स्वर्गप्रदा ज्ञेया गौरी च कुलवर्धनी ।
रक्ता रूपप्रदा ज्ञेया पीता दारिद्र्यघातिनी ॥
पुत्रप्रदा कृष्णसारी नीला धर्मविवर्धनी ।
कपिला सर्वपापघ्नी नानावर्णा च मोक्षदा ॥

'प्रत्यग्रा' नववयस्का । 'त्रिसमृद्धा' शीलक्षीरप्रसवगुणयुक्ता । 'लवणादितृणोदकैस्तृप्तेति' सर्वदा लवणादिषु तुष्टेत्यर्थः ।

इति सुवर्णशृङ्गीदानविधिः ।

## आदित्यपुराणे ।

कृष्णां गां ददते यस्तु पट्टच्छन्नां स्वलङ्कृताम् ।
घण्टामालाकुलां कृत्वा पुष्पैश्चैव परिस्कृताम् ॥
विधिवच्च द्विजातिभ्यो यमलोकं न पश्यति ।

आयुरारोग्यमैश्वर्यं दाता कामाँश्च मानसान् ॥
श्वेतां गां ददते यस्तु दिव्यां रत्नैरलङ्कृताम् ।
घण्टामालाकुलां कृत्वा पुष्पैश्चैवाप्यलङ्कृताम् ॥
मुखे धूपः प्रदातव्यो घृतेनास्यं च पूरयेत् ।
सुवर्णशृङ्गाभरणा तथा रौप्यखुरा शुभा ॥
पट्टच्छन्ना शुभा चैव दातव्या ध्यानयोगिने ।
यस्तु दद्याच्च गां श्वेतां तस्य पुण्यफलं शृणु ॥
जन्मप्रभृति यत् पापं मातृकं पैतृकं च यत् ।
कुलोद्धतस्यांहस्तस्य तत्क्षणादेव नश्यति ॥
गां ददानीह इत्येव वाचा पूयेत सर्वशः ।
पिता पितामहश्चैव तथैव प्रपितामहः ॥
नरकस्थाः प्रमुच्यन्ते सोमलोकं व्रजन्ति ते ।
गौरीं चैव प्रयच्छेत् तु यस्तु गां वै नरः शुचिः ॥
अहोरात्रोषितश्चैव कृतशौचो नरः सदा ।
सुवर्णशृङ्गीं रौप्यखुरां मुक्तालाङ्गूलभूषिताम् ॥
घण्टामालाकुलां चैव गन्धपुष्पैरलङ्कृताम् ।
कुतपं वास्तरेत् प्राज्ञो मुखे धूपं प्रदापयेत् ॥
भक्ष्यभोज्यान्नपानेन ब्राह्मणान् भोजयेच्छुभान् ।
गां ददानीह इत्येव वाचा पूयेत सर्वशः ॥
मातृकं पैतृकं चैव यच्चान्यद्दुष्कृतं भवेत् ।
पापं च तस्य तत् सर्वं दहत्यग्निरिवेन्धनम् ॥
वर्षकोटिसहस्रं तु पुमान् स दिवि मोदते ।
दासीदासैरलङ्कारैस्तूयते सर्वजन्तुभिः ॥
अरोगश्चैव जायेत तेजस्वी च भवेन्नरः ।

नीलवर्णां च गां दद्याद्दोग्ध्रीं शीलगुणान्विताम् ॥
सुवर्णशृङ्गीं रौप्यखुरां मुक्तालाङ्गूलभूषिताम् ।
पट्टच्छन्नां शुभां सौम्यां घण्टादानैरलङ्कृताम् ॥
पञ्चरङ्गेण सूत्रेण गणवेष्टनशोभिताम् ।
रुद्रस्य प्रमुखे देया विष्णोश्च ब्रह्मणश्च ह ॥
गां ददानीह इत्येव वाचा पूयेत सर्वशः ।
पिता पितामहश्चैव तथैव प्रपितामहः ॥
नरकस्थाः प्रमुच्यन्ते नीलां गां ददते तु यः ।
वर्षकोटिसहस्राणि लोके तिष्ठति वारुणे ॥
दधिक्षीरवहा नद्यो वर्त्तन्ते सर्वतः सदा ।
घृतशैलाः प्रपद्यन्ते नवनीतस्य पर्वताः ॥
कृषिभागी बहुधनो दुर्भिक्ष्यं च न पश्यति ।

इति नानागोदानविधिः ।

## महाभारते ।

समानवत्सां कपिलां धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसम्पन्नां ब्रह्मलोके महीयते ॥

'समानवत्सां' समानवर्णवत्साम् ।

रोहिणीं तुल्यवत्सां च धेनुं दद्यात् पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतामिन्द्रलोके महीयते ॥
समानवत्सां शबलां धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतां सोमलोके महीयते ॥

'शबला' कुर्बुरा ।

समानवत्सां कृष्णां तु धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतामग्निलोके महीयते ॥

वातरेणुसुवर्णां तु सवत्सां कामदोहिनीम् ।
प्रदाय वस्त्रसंवीतां वायुलोके महीयते ॥
समानवत्सां धूम्रां तु धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंयुक्तां यमलोके महीयते ॥
अघ्न्यां हेमसवर्णां तु सवत्सां कामदोहनाम् ।
प्रदाय वस्त्रसंवीतां वारुणं* लोकमश्नुते ॥

'अघ्न्या' गौः । 'कामदोहनाम्' अनायासदोह्याम् ।

हिरण्यवर्णां पिङ्गाक्षीं सवत्सां कामदोहनाम् ।
प्रदाय वस्त्रसंवीतां कौवेरं लोकमाप्नुयात् ॥
पलालधूमवर्णां तु सवत्सां कामदोहनाम् ।
प्रदाय वस्त्रसंवीतां पितृलोके महीयते ॥
सवत्सां पीवरीं दत्त्वा शितकण्ठीमलङ्कृताम् ।
वैश्वदेवमसंबाधं स्थानं श्रेष्ठं प्रपद्यते ॥

'शितकण्ठीं' कृष्णगलाम् ।

समानवत्सां गौरीं तु धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतां वसूनां लोकमश्नुते ॥

'सुव्रता' सुखदोह्या ।

पाण्डुकम्बलवर्णां तु सवत्सां कामदोहनाम् ।
प्रदाय वस्त्रसंवीतां साध्यानां लोकमश्नुते ॥
वत्सोपपन्नां नीलाङ्गीं सर्वरत्नसमन्विताम् ।
गन्धर्वाप्सरसां लोकान् दत्त्वा प्राप्नोति मानवः ॥
गोप्रदानरतो याति पीत्वा जलदसञ्चयान् ।
विमानेनार्कवर्णेन दिवि राजन् विराजते ॥

---

* कौवेरमिति क्वचित् पाठः ।

तं चारुवेषाः सुश्रोण्यः सहस्रं वरयोषितः ।
रमयन्ति नरश्रेष्ठ गोप्रदानरतं नरम् ॥

इति समानवत्सगोदानविधिः ।

आदित्यपुराणे ।

कपिलां ये प्रयच्छन्ति चेलच्छन्नां स्वलङ्कृताम् ।
सुवर्णशृङ्गीं रौप्यखुरां मुक्तालाङ्गूलभूषिताम् ॥
श्वेतवस्त्रपरिच्छन्नां घण्टास्वनरवैर्युताम् ।

'घण्टास्वनरवैः' घण्टाशब्दकोलाहलैः ।

सहस्रं यो गवां दत्त्वा कपिलां चापि सुव्रत ।
सममेव पुरा प्राह ब्रह्मा ब्रह्मविदां वरः ॥
यावन्ति रोमकूपाणि कपिलाङ्गे भवन्ति हि ।
तावत्कोटिसहस्राणि वर्षाणां दिवि मोदते ॥
रुक्मशृङ्गीं रौप्यखुरां मुक्तालाङ्गूलभूषिताम् ।
कांस्योपदोहनां धेनुं वस्त्रच्छन्नामलङ्कृताम् ॥
दत्त्वा द्विजेन्द्राय नरः स्वर्गलोके महीयते ।
दशधेनुप्रदानेन तुल्यैका कपिला मता ॥

याज्ञवल्क्यः ।

हेमशृङ्गी शफै रौप्यैः सुशीला वस्त्रसंयुता ।
सकांस्यपात्रा दातव्या क्षीरिणी गौः सदक्षिणा ॥
दाताऽस्याः स्वर्गमाप्नोति वत्सरान् रोमसंमितान् ।
कपिला चेत् तारयति भूयस्त्वासप्तमं कुलम् ॥

व्यासः ।

रुक्मशृङ्गीं रौप्यखुरां वस्त्रकांस्योपदोहनाम् ।
सवत्सां कपिलां दत्त्वा वंशान् सप्त समुद्धरेत् ॥

यावन्ति तस्या रोमाणि सवत्साया भवन्ति हि ।
सुरभीलोकमासाद्य रमते तावतीः समाः ॥

लोकोत्तरे ।

घण्टाचामरसंयुक्ता किङ्किणीजालमण्डिता ।
दिव्यवस्त्रसमायुक्ता हेमदर्पणभूषिता ॥
पयस्विनी सुशीला च तरुणी वत्सकान्विता ।
कपिलैवं प्रदातव्या शिवस्याग्रे विधानतः ॥

दानमन्त्रस्तु मत्स्यपुराणे ।

कपिले सर्वभूतानां पूजनीयाऽसि रोहिणि ।
तीर्थदेवमयी यस्मादतः शान्तिं प्रयच्छ मे ॥

इति कपिलादानविधिः ।

कूर्मपुराणे ।

दशसौवर्णिके शृङ्गे खुराः पञ्चपलान्विताः ।
पञ्चाशत्पलिकं ताम्रं कांस्यं चैतावदेव तु ॥
वस्त्रं तु त्रिगुणं धेन्वा दक्षिणा च चतुर्गुणा ।
एतैरलङ्कृतां धेनुं घण्टाभरणभूषिताम् ॥
कपिलां विप्रमुख्याय दत्त्वा मोक्षमवाप्नुयात् ।
द्विगुणोपस्करोपेता महती कपिला स्मृता ॥
दत्त्वा सा विप्रमुख्याय स्वर्गमोक्षफलप्रदा ।
सप्तजन्मकृतात् पापान्मुच्यते दशसंयुतात् ॥
यान् यान् प्रार्थयते कामाँस्ताँस्तान् प्राप्नोति मानवः ।
अन्ते स्वर्गापवर्गौ च फलमाप्नोत्यसंशयः ॥

इति कपिलादानविधिः ।

अथ देवतोद्देशेन गोदानम् । लिङ्गपुराणे ।

देवदक्षिणदिग्भागे धेनुः कार्या उदङ्मुखी ॥
प्राङ्मुखं वत्सकं कृत्वा ब्राह्मणं च उदङ्मुखम् ।
प्राङ्मुखो यजमानस्तु पूजयेद्ब्राह्मणं ततः ।
कोदादिति च मन्त्रेण गृह्णीयाद्ब्राह्मणः स्वयम् ॥

देवोऽत्र महेश्वरः ।

एवं विधानतो दत्त्वा याति दाता शिवालयम् ।
तत्र भुक्त्वाक्षयान् भोगानन्ते ब्रह्मैति शास्वतम् ॥

देवीपुराणे ।

नीलां वा बभ्रुं वा श्वेतां पाटलां कपिलामपि ।
सदुग्धां वत्सलां चैव सुखदोहां सुगां नृप ॥
आदाय विधिवद्देवीं पूजयेच्छुभपङ्कजैः ।
धूपं तु पञ्चनिर्यासं तुरुष्कागुरुचन्दनम् ॥
दत्त्वा तु मन्त्रपूर्वं तु नैवेद्यमुपकल्पयेत् ।
पायसं घृतसंयुक्तं क्षामयेच्च तथा तु ताम् ॥
द्विजाय शिवभक्ताय सवत्सां गां निवेदयेत् ।
सहेमवस्त्रकांस्यं च महापुण्यमवाप्नुयात् ॥
यावत् तद्रोमसंख्यानं तावद्देव्याः पुरं वसेत् ।
इहैव गतपापोऽसौ जायते नृपसत्तम ॥

विष्णुधर्मे । मान्धातोवाच ।

ब्रह्मणः प्रीणनार्थाय केशवस्य शिवस्य च ।
यानि दानानि देयानि तान्याचक्ष्व द्विजोत्तम ॥
येन चैव विधानेन दानं पुंसः सुखावहम् ।
ऐहिकामुष्मिकार्त्तिं च करोति न विहन्यते ॥

वसिष्ठ उवाच ।

गोदानमादौ वक्ष्यामि प्रत्यक्षक्रमयोगतः ।
येन चैव विधानेन धेनुं नाधिकविस्तरम् ॥
पुण्यं दिनमथासाद्य स्नात्वाऽऽतर्प्य पितॄंस्तथा ।
कृतोपवासः संप्राश्य पञ्चगव्यं नरेश्वर ॥
घृतक्षीराभिषेकं च कृत्वा विष्णोः शिवस्य च ।
तमभ्यर्च्य यथान्यायं पुष्पादिभिरनुक्रमात् ॥
उदग्मुखीं प्राङ्मुखीं वा गृष्टिं कृत्वा पयस्विनीम् ।

'गृष्टिः' सकृत्प्रसूतेत्यर्थः ।

सपुत्रां वस्त्रसंवीतां सितयज्ञोपवीतिनीम् ।
स्वर्णशृङ्गीं रौप्यखुरां सुवर्णोपरिसंस्थिताम् ॥
शक्तितो दक्षिणायुक्तां ब्राह्मणाय निवेदयेत् ।
गावो ममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः ॥
गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ।
प्रदक्षिणं ततः कृत्वा धेनुं द्विजवरं च तम् ॥
इमां नः प्रतिगृह्णीष्व धेनुर्दत्ता मया तव ।
स मे पापापनोदाय गोविन्दः प्रीयतामिति ॥

वह्निपुराणे तु अयमधिको मन्त्रः ।

या धेनुः काश्यपस्यासीदत्रेर्वा गौतमस्य च ।
साभिकामफला देवि इह लोके परत्र च ॥
एवमुच्चार्य तं विप्रं गोविन्दं नृप कल्पयेत् ।
अनुव्रजेत् तु गच्छन्तं पदान्यष्टौ नराधिप ॥
अनेन विधिना धेनुं यो विप्राय प्रयच्छति ।
सर्वकामसमृद्धात्मा विष्णुलोकं स गच्छति ॥

सप्तावरान् सप्तपरानात्मानं चैव मानवः ।
सप्तजन्मकृतात् पापान्मोचयत्यवनीपते ॥
पदे पदेऽश्वमेधस्य गोसवस्य च मानवः ।
फलमाप्नोति राजेन्द्र दक्षायैवं जगौ हरिः ॥
सर्वकामदुघा सम्यक् सर्वकालेषु पार्थिवः ।
भवत्यथो पापहरा यावदिन्द्राश्चतुर्दश ॥
सर्वेषामेव पापानां कृतानामविजानता ।
प्रायश्चित्तमिदं प्रोक्तमनुतापोपबृंहितम् ॥
सर्वेषामेव दानानामेकजन्मानुगं फलम् ।
हाटकक्षितिगौरीणां* सप्तजन्मानुगं फलम् ॥
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चान्यैश्च मानवैः ।
लोकाः कामदुघाः प्राप्ता दत्त्वैतद्विधिना नृप ॥
गोभ्योऽधिकं जगति नापरमस्ति कश्चि-
द्दानं पवित्रमिति शास्त्रविदो वदन्ति ।
ताः संप्रदैः सुरसदश्च समीहमानै-
र्देयाः सदैव विधिना द्विजपुङ्गवेभ्यः ।

इति देवतोद्देशेन गोदानविधिः ।

## अथ देवताभ्यो गोदानम् । स्कन्दपुराणे ।

शिवाय विष्णवे चापि यस्तु दद्यात् पयस्विनीम् ।
धेनुं स्नानोपहारार्थं स परं ब्रह्म गच्छति ॥

## भविष्यत्पुराणे ।

सौरीं सूर्याय यो दद्यात् तरुणीं च पयस्विनीम् ।

---

* गौरीति गौः ।

तेन दत्तं भवेत् सर्वं जगत् स्थावरजङ्गमम् ॥

'सौरी' सूर्यसुता धेनुरित्यर्थः ।

स्नानाग्निकार्यमुद्दिश्य सुरूपां सुपयस्विनीम् ।
कुलीनां कपिलां दत्वा दत्तं भवति गोशतम् ॥
य एवं गामलङ्कृत्य दद्यात् सूर्याय मानवः ।
सोऽश्वमेधस्य यज्ञस्य फलमष्टगुणं लभेत् ॥

तथा ।

यो दद्यादुभयमुखीं सौरभेयीं दिवाकरे ।
सप्तद्वीपां महीं दत्त्वा यत् फलं तदवाप्नुयात् ॥
पादद्वयं शिरोर्ध च यदा स्यादेव निर्गतम् ।
तदा सा पृथिवी ज्ञेया सशैलवनकानना ॥

## अथ वृषभैकादशीदानम् । शिवधर्मे ।

दश गावः स वृषभा वृषभैकादशी स्मृता ।
शिवाय विनिवेद्यैवं विशुद्धेनान्तरात्मना ॥
रुद्रैकादशतुल्यात्मा बलभोगादिभिर्गुणैः ।
शिवादिसर्वलोकेषु यथेष्टं मोदते वशी ॥

भविष्यत्पुराणे ।

दश गावः स वृषभा वृषभैकादशी च ताम् ।
सूर्याय विनिवेद्येह यत् फलं लभते शृणु ॥
द्वादशादित्यतुल्यात्मा अणिमादिर्गुणैर्युतः ।
सौरादिसर्वलोकेषु यथेष्टं मोदते दिवि ॥

## अथ वृषभाधिकगोशतदानम् । शिवधर्मोत्तरे ।

वृषभं गोशतं दद्याच्छिवायातीव शोभनम् ।
त्रिसप्तकुलजैः सार्धं शृणु यत् फलमाप्नुयात् ॥

सूर्यकोटिप्रतीकाशैर्विमानैः सार्वकामिकैः ।
अनेकयानसंख्यानैरसुरासुरपूजितैः ॥
शतरुद्रबलोपेतो वीरभद्र इवापरः ।
गत्वा शिवपुरं दिव्यमशेषाधिपतिर्भवेत् ॥

भविष्यत्पुराणे ।

सवृषं गोशतं दत्त्वा भास्कराय नराधिप ।
त्रिसप्तकुलजैः सार्धं शृणु यत् फलमाप्नुयात् ॥
सूर्यकोटिप्रतीकाशैर्दिवाकर इवापरः ।
गत्वादित्यपुरं रम्यं क्रीडते सूर्यवन्नृप ॥
भुक्त्वा तु विपुलान् भोगान् प्रलये सर्वदेहिनाम् ॥
मोहकञ्चुकमुत्सृज्य विशत्यादित्यमण्डलम् ॥
सर्वज्ञः सूर्यपरमः शुद्धस्वात्मनि संस्थितः ।
सर्वगः परिपूर्णत्वात् सूर्यवद्दीप्तिमान् भवेत्* ॥

इति देवतागोदानविधिः ।

अथ त्रिरात्रगोदानविधिः । विष्णुधर्मोत्तरे ।

हेमशृङ्गीं रौप्यखुरां मुक्तालाङ्गूलभूषणाम् ।
अहताम्बरसंवीतां तथा कांस्योपदोहनाम् ॥
त्रिरात्रं स्थण्डिले सुप्त्वा त्रिरात्रं गोरसाशनः ।
तृप्तां तु तर्पिते दत्त्वा वाससा संवृते द्विजे ॥
सदक्षिणा महाभाग त्रिरात्रं गोरसैस्ततः ।
प्राणसन्धारणं कृत्वा शिवलोके† महीयते ॥
यावन्ति धेनो रोमाणि तावद्वर्षाणि मानवः ।

---

* सार्वभौमिकैरिति क्वचित् पाठः ।

† सूर्यवद्दीप्तिमाप्नुयादिति क्वचित् पाठः ।

दत्त्वैवं कपिलां विप्राः प्राप्नोत्यभ्यधिकं फलम् ॥

महाभारते ।

तिस्रो रात्रीस्त्वद्भिरुपोष्य भूमौ तृप्ता गावस्तर्पितेभ्यः प्रदेयाः ।
वत्सैः पीताः सुप्रजाः सोपचारास्त्र्यहं दत्त्वा गोरसैर्वर्त्तितव्यम् ॥

तथा ।

द्विजातिमभिसत्कृत्य श्वःकल्यमुपवेद्य च ।
प्रदानार्थे नियुञ्जीत रोहिणीं नियतव्रतः ॥

'श्वःकल्यमुपवेद्य' प्रातःकाल उपस्थानं कर्त्तव्यमिति ज्ञापयित्वा ।

आह्वानं च प्रयुञ्जीत समङ्गे बहुले इति ।
प्रविश्य च गवां मध्यमिमां श्रुतिमुदाहरेत् ॥

गौर्मे माता वृषभश्च पिता मे दिवं शर्म मे प्रतिष्ठा प्रपद्ये ।
प्रपद्यैकां सर्वरीं मुख्यगोषु मुनिर्वाणीमुत्सृजे गोप्रदाने ॥

समतामेति वै गोभिः समसख्यः समव्रतः ।
एकालपगमनात् सद्यः कल्मषाद्विप्रमुच्यते ॥
उत्सृष्टवृषवत्सा हि प्रदेया सूर्यदर्शने ।

उत्सृष्टो त्यक्तो वृषवत्सो यया सा तथा ।

ऊर्जस्विन्य ऊर्जमेधाश्च यज्ञो गर्भो अमृतस्य प्रतिष्ठा क्षितौ ।
ऋक् संप्रवाहाः पुण्यभावाः प्राजापत्याः सर्वमित्यर्थवादः ॥
गावो ममैनः प्रणुदन्तु सौर्यस्तथा सौम्याः स्वर्गयानाय सन्तु ।
आहूता मे ददतश्चाश्रयन्तु तथा मुक्ताः सन्तु सर्वाशिषो मे ॥
शेषोत्सर्गे कर्मभिर्देहमोक्षे सरस्वत्यः श्रेयसि संप्रवृत्ताः ।
यूयं नित्यं पुण्यकर्मोपवत्यः दिशध्वं मे गतिमिष्टां प्रपन्नाः ॥
या वै यूयं सोऽहमाद्यैकभावो युष्मान् दत्त्वा चाहमात्मप्रदाता ।
नमस्कृता मन एवोपपन्नाः संरक्षध्वं सौम्यरूपोग्ररूपाः ॥

एवं तस्याग्रे पूर्वमर्धं वदेद्वै गवां दाता विधिवत् पूर्वदृष्ट्या ।
प्रतिब्रूया*च्छेषमर्धं द्विजातिः प्रतिगृह्णन् गोप्रदाने विधिज्ञः ॥

'पूर्वमर्धं' या वै यूयमित्यादिकम् ।

गां ददानीति वक्तव्यमर्घ्यमुस्रा†वसु प्रदत् ।
ऊधस्या नमितव्या च वैष्णवीति च चोदनात् ॥
नाम संकीर्त्तयेत् तस्या यथासंख्यं यथोत्तरम् ।
फलं षट्त्रिंशदष्टौ च सहस्राणि च विंशतिः ॥
एवमेतान् गणान् दृष्ट्वा गवादीनां यथाक्रमम् ।
गोप्रदाता समाप्नोति समस्तानष्टमे क्रमे‡ ॥

'अर्घ्यम्' अर्घार्हम् । 'उस्रावसु' गोधनम् । 'प्रदत्' प्रददत् । 'ऊधस्यं' क्षीरं तद्युक्ता ऊधस्या । 'अष्टमे क्रमे' गवि दत्तायां गच्छन्त्यामष्टमे पदे ।

गोघ्नः शाली निर्भयश्चार्घदाता नस्योतदो वसुदाता च कामी ।
उषस्योढा भारं नयँश्च विद्वान् विख्यातास्ते वैष्णवाश्चन्द्रलोकाः ॥
गां वै दत्त्वा गोव्रती स्यात् त्रिरात्रं निशां चैकां संवसेतेह ताभिः
काम्याष्टम्यां वर्त्तितव्यं त्रिरात्रं गवां रसैर्वा शकृता प्रस्नवैर्वा ॥
वेदव्रती स्याद्वृषभप्रदाने वेदावाप्तिर्गोयुगस्य प्रदाने ।
तथा गवां विधिमासाद्य यज्वा लोकानग्र्यान् विन्दते नाविधिज्ञः ॥

'वसुदाता' द्रव्यदाता । 'कामी' काम्यफलवान् । 'उषस्योढा' उषस्याया गायत्र्या वाहयिता इत्यर्थः । 'काम्याष्टमी' रोहिणीयुक्ताष्टमी । 'रसैः' दध्यादिभिः 'प्रस्नवैः' क्षीरैः । 'वेदव्रती' वेदव्रतफलवान् । 'गवां यज्वा' गोप्रदाता ।

---

* गवां लोक इति क्वचित् पाठः ।

† प्रतिज्ञायेति प्र॰ न॰ पु॰ पाठः ।

‡ उस्रेति गौः ।

§ समस्तानामतिक्रमे इति न॰ प्र॰ पु॰ पाठः ।

कामान् सर्वान् पार्थिवानेकसंस्थान् यो वै दद्यात् कामदुग्धां च धेनुम् ।
सम्यक् ताः स्युर्हव्यकव्यौघवत्यस्तासामुक्षमायशास्यं प्रदानम् ॥
न चाशिष्यायाव्रतायोपकुर्यान्नाशान्ताय न च वक्रबुद्धये ।
गुह्यो ह्ययं सर्वलोकस्य धर्मो नेमान् धर्मान् यत्र तत्र प्रकल्पयेत् ॥

इति त्रिरात्रगोदानविधिः ।

अथाह वृद्धगौतमः ।

धेनुं पयस्विनीं हृद्यां घण्टाभरणभूषिताम् ।
हेमशृङ्गीं रौप्यखुरां वासोभिर्वेष्टितां नरः ॥
नवधान्यैः समायुक्तामेकैकं द्रोणपञ्चकम् ।
सहिरण्यां तु तां दद्याद्ब्राह्मणाय कुटुम्बिने ॥
अलोलुपाय शान्ताय धर्मज्ञाय विशेषतः ।
होमश्च पूर्ववत् कार्यः समिदाज्यचरूत्कटः ॥

'पूर्ववदिति' रूप्यवृषभदानवदित्यर्थः ।

तस्मै हुतव्रतो दद्यात् पूजितायाङ्गुलीयकैः ।
गां कृष्णां कृष्णरूपाय मन्त्रेणानेन रोगवान् ॥
देवकीपुत्र चाणूरकंसारिष्टविनाशन ।
नाशय ग्रहणीं कृष्ण गोपीजनमनोत्सव ॥

दानमन्त्रः ।

कृतेनानेन दानेन ग्रहणीशान्तिमृच्छति ।
तस्मादेतत् तु कर्त्तव्यं ग्रहणीरोगिणा सदा ॥

इति ग्रहणीहरधेनुदानविधिः ।

तथा ।

धेनुं पयस्विनां दाता लोहितां हेमशृङ्गिकाम् ।
तथा रूप्यखुरां रक्तवस्त्रेण समलङ्कृताम् ॥

ब्राह्मणायाग्निवर्णाय दद्यात् सत्कृत्य मानवः ।
पलेन वा पलार्धेन तदर्धेनाथ वा पुनः ॥
सुवर्णेन युतां शुभ्रां यद्वा स्वविभवेन तु ।
द्विजोत्तमाय श्रेष्ठाय सर्वशास्त्रार्थवेदिने ॥
धेनुं तामतिसंहृष्टो मन्त्रेणानेन भक्तितः ।
गावो मे हृदये सन्तु गावो मे सन्तु पृष्ठतः ॥
देवानां यातु सुरभी कृपयाऽसृग्दरं मम ।

दानमन्त्रः ।

विनाशयत्यदो दानमपि दीर्घमसृग्दरम् ।
तेनेदं यत्नतः कुर्यादसृग्दरगदार्दितः ॥

इत्यसृग्दरनाशनधेनुदानविधिः ।

## अथ वैतरणीगोदानम् । आह व्यासः ।

आसन्नमृत्युना देया गौः सवत्सा तु पूर्ववत् ।
तदभावे तु गौरेव नरकोद्धरणाय वै ॥

'पूर्ववत्' सुवर्णशृङ्गिकाविधिना ।

तदा यदि न शक्नोति दातुं वैतरणीं तु गाम् ।
शक्तोऽन्योऽरुक् तदा दद्याच्छ्रेयो दद्यान्मृतस्य च ॥

'अरुक्' रोगरहितः ।

## अथ दानमन्त्रः ।

यमद्वारे महाघोरे* कृष्णा वैतरणी नदी ।
तां तर्त्तुं गां ददाम्येतां तुभ्यं वैतरणीमिति ॥

## ब्रह्मवैवर्त्ते । युधिष्ठिर उवाच ।

यमद्वारे महाघोरे या सा वैतरणी नदी ।

---

* तप्ता इति क्वचित् पाठः ।

किंरूपा किंप्रमाणा सा कथं सा गर्हिता किल ॥
कथं तस्याः प्रमुच्यन्ते केषां वासस्तु सन्ततम् ।
केषां तथाऽनुकूला सा एतद्विस्तरतो वद ॥

मार्कण्डेय उवाच ।

या सा वैतरणी नाम यमद्वारे महानदी ।
तस्याः प्रमाणं रूपं च शृणु सर्वभयावहम् ॥
शतयोजनविस्तीर्णा पृथुत्वे सा महासरित् ।
अगाधाऽनन्तरूपा सा दृष्टमात्राद्भयावहा ॥
पूयशोणिततोया सा मांसकर्दमनिर्मिता ।
कृमिभिः सङ्कुलं भूयो वज्रतुण्डैरयोमुखैः ॥
शिशुमारैश्च* मकरैर्वज्रकर्त्तरीसंयुतैः ।
अन्यैश्च जलजैर्घोरैर्युक्ता सा मर्मभेदिभिः ॥
पतन्ति तत्र वै मर्त्याः क्रन्दमानाः सुदारुणाः ।
हा भ्रातः पुत्र तातेति प्रलपन्तो मुहुर्मुहुः ॥
चिरमन्तर्निमज्जन्ति ग्लानिं गच्छन्ति देहिनः ।
चतुर्विधैः प्राणिगणैर्द्रष्टव्या सा महानदी ॥
तरन्ति तस्या दानेन अन्यथा तु पतन्ति ते ।
धार्मिका† दानशीलाश्च तां तरन्ति नरोत्तम ॥
सानुकूला भवेद्येन नदी वैतरणी नृणाम् ।
तच्छृणुष्व नरव्याघ्र कथ्यमानं युधिष्ठिर ॥
अयने विषुवे पुण्ये व्यतीपाते दिनक्षये ।
अन्येषु पुण्यकालेषु दीयते दानमादरात् ॥

---

* शिशुमार इति अम्बुसंभूतः शिरस इति ख्यातो जभेन्तुदः ।
† कामिका इति न॰ प्र॰ पु॰ पाठः ।

पाटलामथ वा कृष्णां कुर्याद्वैतरणीं शुभाम् ।
सुवर्णशृङ्गीं रौप्यखुरां कांस्यपात्रसुदोहनाम् ॥
कृष्णवस्त्रयुगच्छन्नां सप्तधान्यसमन्विताम् ।
कार्पासद्रोणशिखरे आसीनां ताम्रभाजने ॥
यमं हैमं प्रकुर्याद्वै लोहदण्डसमन्वितम् ।
महामहिषमारूढमूढपाशं करे परे ॥
इक्षुदण्डमयं बद्धा उडूपं पट्टबन्धनैः ।
उडूपोपरि तां धेनुं सूर्यदेहसमुद्भवाम् ॥
कृत्वा प्रकाशयेद्विद्वान् छत्रोपानहसंयुताम् ।

सप्तधान्यानि द्रोणश्च परिभाषायां व्याख्यातानि । 'उडूपं' चुट्रनौका ।

इममुच्चारयेन्मन्त्रं संगृह्योदकमण्डलम् ।
यमद्वारे महाघोरे दृष्ट्वा वैतरणीं नदीम् ॥
तर्त्तुकामो ददाम्येनां तुभ्यं वैतरणीं च गाम् ।

अधिवासनमन्त्रः ।

ॐ विष्णुरूप द्विजश्रेष्ठ भूदेव पङ्क्तिपावन ।
सदक्षिणा मया तुभ्यं दत्ता वैतरणी नदी ॥

दानमन्त्रः ।

धर्मराजं च विप्रं च धेनुं वैतरणीं तथा ।
सर्वं प्रदक्षिणीकृत्य ब्राह्मणाय निवेदयेत् ॥
पुच्छं संगृह्य तद्धेनोरग्रे कृत्वा च ब्राह्मणम् ।
धेनुके त्वं प्रतीक्षस्व यमद्वारे महालये ॥
उत्तितीर्षुरहं देवि वैतरण्यै नमो नमः ।

अनुव्रजनमन्त्रः ।

अनुव्रजेच्च गच्छन्तं सर्वं तस्य गृहे नयेत् ।

एवं कृते महीपाल सा सरित् सुखदा भवेत् ॥
तरते च तया धेन्वा सा सरिज्जलवाहिनी ।
सर्वाह्लादानमाप्नोति ये दिव्या ये च मानुषाः ॥
रोगी तु रोगनिर्मुक्तः तथैवोपरमेत् स्मृतिः ।
इतीदमुक्तं तव धर्मसूनोः पुण्यं मया वैतरणीप्रदानम् ।
शृणोति भक्त्या पठतीह सम्यक् स याति विष्णोः पदमप्रमेयम् ॥

इति वैतरणीधेनुदानविधिः ।

## अथोभयतोमुखीदानम् । स्कन्दपुराणे* ।

प्रसूयमानां यो गां च दद्यादुभयतोमुखीम् ।
यथोक्तेन विधानेन स जातिस्मरतां लभेत् ॥

## नन्दिपुराणे ।

यश्चोभयमुखीं दद्याद्गां विप्रे वेदवादिनि ।
देवाय वाऽप्यभीष्टाय स कुलान्येकविंशतिम् ॥
समुद्धृत्य नरस्तिष्ठेन्नरकाद्ब्रह्मणोऽन्तिके ।
युगानि रोमतुल्यानि यदि श्रद्धापरो नरः ॥

## याज्ञवल्क्यः ।

सवत्सरोमतुल्यानि युगान्युभयतोमुखीम् ।
दत्त्वा स्वर्गमवाप्नोति पूर्वेण विधिना ददत् ॥

'पूर्वेण' 'विधिना' हेमशृङ्गी शफै रौप्यैरित्यादिना प्रत्यक्षधेनूक्तेन ।

## विष्णुः ।

अथ प्रसूयमाना गौः पृथिवी भवति । तामलङ्कृत्य ससुवर्णां विप्राय दत्त्वा पृथिवीदानफलमाप्नोति ।

---

* स्कन्दपुराणे इति न. प्र. पुस्तके नोपलभ्यते ।

अत्र गाथा भवति ।

सवत्सरोमतुल्यानि युगान्युभयतोमुखीम् ।
दत्त्वा स्वर्गमवाप्नोति श्रद्दधानः समाहितः ॥

महाभारते ।

यावदर्धप्रसूता गौस्तावत् सा पृथिवी स्मृता ।
पृथिवी तेन दत्ता स्यात् तादृशीं गां ददाति यः ॥

देवलः ।

यावद्वत्समुखा योनौ तथा यद्गर्भनिष्कृतिः ।
यावन्न जायते धेनुस्तावद्भूः सचराचरा ॥
अलङ्कृत्योक्तविधिना सुवर्णत्रिपलान्विता ।
दातव्या द्विपला मध्या पलाढ्या कन्यसा मता ॥
दत्त्वेमां पुरुषः स्वर्गे वसत्यमरपूजितः ।
गोवत्सरोमतुल्यानि युगानीप्सितभोगभाक् ॥

मत्स्यपुराणे ।

रुक्मशृङ्गीं रौप्यखुरां मुक्तालाङ्गूलभूषिताम् ।
कांस्योपदोहनां राजन् सवत्सां द्विजपुङ्गवे ॥
प्रसूयमानां यो दद्याद्धेनुं द्रविणसंयुताम् ।
द्रविणमत्र दक्षिणारूपं तच्च भूरिदक्षिणा इत्यग्रेऽभिधानादनल्पं प्रदेयम् ।
यावद्वत्सो योनिगतो यावद्गर्भं न मुञ्चति ।
तावद्गौः पृथिवी ज्ञेया सशैलवनकानना ॥
प्रसूयमानां यो दद्याद्धेनुं द्रविणसंयुताम् ।
ससमुद्रगुहा भूमिः सशैलवनकानना ॥
चतुरन्ता भवेद्दत्ता पृथिवी नात्र संशयः ।
यावन्ति धेनुरोमाणि वत्सस्य च नराधिप ॥

तावत्संख्यान् युगगणान् देवलोके महीयते ।
पितॄन् पितामहाँश्चैव तथैव प्रपितामहान् ॥
उद्धरिष्यत्यसन्देहो नरकाद्भूरिदक्षिणः ।
घृतक्षीरवहाः कुल्याः दधिपायसकर्दमाः ॥
यत्र तत्र गतिस्तस्य भवेच्चेप्सितकामदा ।
गोलोकः सुलभस्तस्य ब्रह्मलोकस्य पार्थिव ॥
स्त्रियश्च तं चन्द्रसमानवक्त्राः प्रतप्तजाम्बूनदतुल्यवर्णाः ।
महानितम्बस्तनमध्यवृत्ता*भजन्त्यजस्रं नलिनाभनेत्राः ॥

## वराहपुराणे ।

सुवर्णशृङ्गीं यः कृत्वा रौप्ययुक्तां खुरेऽथ वा ।
ब्राह्मणस्य करे दत्त्वा सुवर्णं रौप्यमेव वा ॥
कपिलायास्तदा पुच्छं ब्राह्मणस्य करे न्यसेत् ।
उदकं च करे दत्त्वा वाचयेच्छ्रद्धयाऽन्वितः ॥
ससमुद्रवना तेन सशैलवनकानना ।
रत्नपूर्णा भवेद्दत्ता पृथिवी नात्र संशयः ॥
पृथिवीदानतुल्येन दानेनैतेन मानवः ।
तारितैर्याति पितृभिर्विष्ण्वाख्यं पदमव्ययम् ॥
ब्रह्मस्वहारको गोघ्नो भ्रूणहा पाकभेदकः ।
महापातकयुक्तोऽपि वञ्चको ब्रह्मदूषकः ॥
निन्दको ब्राह्मणानां च तेषां कर्माभिदूषकः ।
एवं पातकयुक्तोऽपि गवां दानेन शुद्धयति ॥
यश्चोभयमुखीं दद्यात् प्रभूतकनकावृताम् ।

---

* नम्रा इति क्वचित् पाठः ।

तद्दिने पायसाहारः पयसा वाऽपि वाहयेत् ॥
सुवर्णस्य सहस्रेण तदर्धेनापि तामिति ।
तस्याप्यर्धं शतं वाऽथ पञ्चाशच्च ततोऽर्धकम् ॥
यथाशक्त्या प्रदातव्यं वित्तशाठ्यविवर्जितम् ।
इमां गृहाणोभयमुखीं भवाँस्त्राता ममास्तु वै ॥
मम वंशविशुद्धस्य सदा स्वस्तिकरी भव ।
इरावती धेनुमती च जप्त्वा देवस्योनात् तदनन्तरम् ॥
प्रतिगृह्णामि त्वां धेनुं कुटुम्बार्थे विशेषतः ।
स्वस्ति भवतु ते नित्यं रुद्रमातर्नमो नमः ॥
द्यौस्ते प्रतिददामि पृथिवी ते प्रतिगृह्णामि ।
क इदं कस्माद्ददेति जपेन्मन्त्रं वसुन्धरे ॥
विसृजेद्ब्राह्मणं देवि गां च तस्य गृहं नयेत् ।

## उभयशिरसं दद्यादित्यनुवृत्तौ च्यवनः ।

तस्याः प्रदानकालाः । प्रसवकालो नान्यं कालं प्रतीक्षते । व्यतीपातविषुवायनषडशीतिमुखविष्णुपदीग्रहणान्ताः सर्व एव पुण्यकालाः । तदैव यत्र चार्धप्रसूतायां तत्र स्नातो ब्राह्मणं ब्रूयात् । श्रुतशीलसत्यशौचवृत्तजातिक्रियाद्यैर्गुणैरुपेतं च कालेन प्रणिपत्य ब्रूयात् । अहमतीवार्त्तो भीतो* ऽस्मादगाधादपारात् संसारार्णवात् समुत्तारयामि दशावरान् दशपरानात्मानं च । स्वामिन् भवन्तं दानपात्रमासाद्य । स चानुग्रहबुद्ध्या नार्थलिप्सया गृह्णीत । दाता च तामनुमन्त्रयेत् । त्वं महीमवनिं विश्वधेनुः । क इदं कस्माद इति गृहीतायां दक्षिणेन पाणिना वत्समाकर्षयेत् । गर्भे तु सत्त्वेषामवेदमिति जपेत् । निष्क्रान्तेऽग्निमुपसमाधाय देवान् पितॄन् नदीः पर्वतान् वनस्पतीनुदधीन् नागानोषधीस्तर्पयस्तैस्तैर्मन्त्रैस्तेषां मन्त्र-

---

* अहमतीवार्त्तोऽतीत इति न॰ प्र॰ पु॰ पाठः ।

पदानि भवन्ति । ये देवासो दिव्येकादशस्थाः । उशन्तस्त्वा निधीमहि । इमं मे गङ्गे यमुने सरस्वति । अद्रिभिः सुतोमतिभिश्च । नोहिते वनस्पते शतवत्सो विरोह समुद्रज्येष्ठाः सलिलस्य मध्यादहिरिव भोगैः पर्येति राहुम् । मधुवाता ऋतायत इति मन्त्राः । तदनु पार्थिवीभिः पृथिवीं तर्पयेद्बलैर्द्यावापृथिवी पूर्वचित्तं ये मही द्यौः पृथिवी च नः उर्वे पृथ्वी बहुले दरे अन्ते गौरीर्मिमाय सलिलानि तक्षतीत्यादिभिश्चतुरशीत्याज्याहुतीर्जुहोति । ब्राह्मणान् भोजयेत् स्वस्त्ययनं वाचयीत । अथास्य कर्मणो व्युष्टिमुदाहरन्ति । अभक्ष्यभक्ष्यमपेयपायिनं ब्रह्मघ्नं पितृघ्नं सद्य एव पुनाति । उपाध्यायिनीं सुतां मित्रभार्यां मातरं मातृष्वसारं मातुलानीं भगिनीं भागिनेयीं शिष्यजायां धात्रीमन्यामप्यगम्यां गत्वोभयशिरसं सपरिकरां ब्राह्मणाय दद्यात् । परिकरोऽस्याः सुवर्णं रूप्यं रत्नादि क्षेत्राणि ग्रामादि वा धान्यानि वस्त्राणि लवणाद्याश्चन्दनाद्या गन्धाः शतं गवां तदर्धमर्धं वा सर्वस्वं वा सह तया ब्राह्मणाय दद्यान्महापातकमुक्तये विमुक्तये ।

इत्युभयतोमुखीदानविधिः ।

## अथ गोदानप्रसङ्गेन वृषभदानमप्यभिधीयते ।

## तत्र स्कन्दपुराणे ।

उत्पाद्य सस्यानि तृणं चरन्ति तदेव भूयः सकलं वहन्ति ।
न भारखिन्नाः प्रवदन्ति किञ्चिदहो वृषैर्जीवति जीवलोकः ॥

## ब्रह्मपुराणे ।

पुरा निर्मितवान् ब्रह्मा वृषभं धर्मरूपिणम् ।
श्वेतवर्णं चतुष्पादं सत्त्वैकगुणधारणात् ॥
धर्म इत्याह धर्मः स धर्मेण विधृताः प्रजाः ।
प्रजा धरत्ययं भूमौ धर्ममूर्त्तिर्वृषो यतः ॥
अतो वृषभदानेन दत्तं स्यात् सचराचरम् ।

कृत्वा तत्पार्श्वतस्तत्र छत्रोपानहकम्बलम् ॥
वृषं संपूज्य पुष्पाद्यैर्वित्तशाठ्याहते नरः ।
श्रद्धया चैव यो दद्यात् तं न मुञ्चति धर्मराट् ॥
सर्वसस्यैः सुखैश्चैव दातारं योजयत्यसौ ।

आदित्यपुराणे ।

यो वै ददात्यनड्वाहं सुशीलं साधुवाहिनम् ।
उभयोः पार्श्वयोर्दत्त्वा छत्रोपानहकम्बलम् ॥
शीलवेदाङ्गसम्पन्ने हृष्टे शिष्टे द्विजे नरः ।
पुष्ये च जन्मनक्षत्रे अयने विषुवेषु च ॥
दत्त्वा तस्य अनड्वाहं सर्वरत्नैरलङ्कृतम् ।
दत्त्वा तस्य अनड्वाहं तस्मिन् स्थाने महामुने ॥
क्षुत्पिपासार्दितस्यापि अग्रतः प्रतिपद्यते ।
दत्त्वा प्रजापतेर्लोकान् विशोकः प्रतिपद्यते—इति ॥

कण्ठं प्रलम्बगलकम्बलम् ।

तथा ।

अनड्वाहं ब्राह्मणायाऽथ धुर्यं दत्त्वा युवानं बलिनं विनीतम् ।
हलस्य वोढारमनन्तवीर्यं प्राप्नोति लोकान् दशधेनुदस्य ॥

स्कन्दपुराणे ।

निवेद्य सद्गुणोपेतमनड्वाहं शिवाश्रये ।
दशधेनुप्रदानस्य फलं शोभनमाप्नुयात् ॥

बृहस्पतिः ।

वेदव्रती स्याद्वृषभप्रदाने वेदावाप्तिर्गोयुगस्य प्रदाने ।

देवलः ।

वृषयुग्मं वृषं वाऽपि दत्त्वा गच्छेत् सुरालयम् ।

भुङ्क्ते मन्वन्तरं भोगान् द्विगुणान् युग्मलाङ्गली ॥
अनड्वाहौ तु यो दद्याद्‌द्विजे सीरेण संयुतौ।
अलङ्कृत्य यथाशक्त्या सुवाहौ शुभलक्षणौ ॥
सर्वपापविशुद्धात्मा सर्वकामसमन्वितः।
वर्षाणि वसति स्वर्गे रोमसंख्याप्रमाणतः ॥
यो ददाति बलीवर्दमुक्तेन विधिना शुभम्।
अव्यङ्गं गोप्रदानाच्च भुङ्क्ते दशगुणं फलम् ॥

महाभारते।

युवानमिन्द्रियोपेतं शतेन सह यूथपम्।
गवेन्द्रं ब्राह्मणेन्द्राय भूरिशृङ्गमलङ्कृतम् ॥
ऋषभं ये प्रयच्छन्ति श्रोत्रियाय परन्तप।
ऐश्वर्याण्यभिजायन्ते जायमानेष्वतः पुनः ॥

'शतेन' स्त्रीगवीनामिति शेषः। 'भूरिशृङ्गं' सुवर्णशृङ्गम्।

यमः।

दान्तं धुरन्धुरं दत्त्वा छत्रोपानहसंयुतम्।
दशधेनुप्रदानाच्च यत् फलं तत् समश्नुते ॥

भविष्योत्तरे। युधिष्ठिर उवाच।

युष्मद्वाक्यामृतमिदं शृण्वानोऽहं जनार्दन।
न तृप्तिमधिगच्छामि जातं कौतूहलं हि मे ॥
गोपतिः किल गोविन्दस्त्रिषुलोकेषु विश्रुतः।
गोवृषस्य प्रदानेन त्रैलोक्यमभिनन्दति ॥
तन्मे वृषभदानस्य फलं वै कथयाच्युत।

श्रीकृष्ण उवाच।

वृषदानफलं दिव्यं शृणुष्व कथयामि ते।

पवित्रं पावनं चैव सर्वदानोत्तमं तथा ॥
दशधेनुसमोऽनड्वानेकश्चैव धुरन्धरः ।
दशधेनुप्रदानाद्धि वृष एको विशिष्यते ॥
वृषभश्चापि पुष्टाङ्गो ह्यरोगः पाण्डुनन्दन ।
युवा भद्रः सुशीलश्च सर्वदोषविवर्जितः ॥
धुरन्धरः स्थापयति एक एव कुलं महत् ।
त्राता भवति संसारे नात्र कार्या विचारणा ॥
अलङ्कृत्य वृषं शान्तं पुण्येऽह्नि समुपस्थिते ।
रौप्यलाङ्गूलसंयुक्तं ब्राह्मणाय निवेदयेत् ॥
मन्त्रेणानेन राजेन्द्र तं शृणुष्व वदामि ते ।
धर्मस्त्वं वृषरूपेण जगदानन्दकारकः ॥
अष्टमूर्त्तेरधिष्ठानमतः पाहि सनातनः ।
दत्त्वैवं दक्षिणायुक्तं प्रणिपत्य विसर्जयेत् ॥
सप्तजन्मकृतं पापं वाग्मनःकायकर्मणा ।
तत्सर्वं विलयं याति गोदानसुकृतेन वै ॥
यानं वृषभसंयुक्तं दीप्यमानं सुशोभितम् ।
आरुह्य कामगं दिव्यं स्वर्लोकमधिरोहति ॥
यावन्ति तस्य रोमाणि गोवृषस्य महीपते ।
तावद्वर्षसहस्राणि गवां लोके महीयते ॥
गोलोकादवतीर्णस्तु इह लोके द्विजायते* ।
सत्रयाजी महातेजाः सर्वब्राह्मणपूजितः ॥

ओजस्विनं भरसहं दृढकन्धरं च यच्छन्ति ये वृषमशेषगुणोपपन्नम् ।

---

* द्विजो भवेदिति क्वचित् पाठः ।

दत्तेन यद्भवति गोदशकेन पुण्यं सत्यं भवन्ति भुवि तत्फलभागिनस्ते ॥

इति वृषदानविधिः ।

## सनत्कुमार उवाच ।

हिरण्यवृषदानं च कथयामि समासतः ।
वृषरूपं हिरण्येन सहस्रेणाऽथ कारयेत् ॥
तदर्धेनाऽथ वा धीमाँस्तदर्धार्धेन वा पुनः ।
अष्टोत्तरशतेनापि वृषभं धर्मरूपिणम् ॥

अत्र तु पात्रपरिमाणविशेषस्य हिरण्यस्य सहस्रादिसंख्यया व्यवच्छेदः कर्त्तुं न शक्यत इति पूर्वप्रक्रान्तनिष्कशब्देनाकाङ्क्षा पूरणीया । लिङ्गपुराणोक्तदानेषु निष्कैरेव व्यवहारदर्शनाच्च ।

ललाटे कारयेत् पुण्ड्रमर्धचन्द्रं कलाकृतिम् ।
स्फटिकेन तु कर्त्तव्याः खुराश्च रजतेन च ॥

'पुण्ड्रं' तिलकं स्फटिकम् । खुरा रजतेन विधेयाः ।

ग्रीवां तु पद्मरागेण ककुद्गोमेदकेन च ।
ग्रीवायां घण्टावलयं रत्नचित्रं तु कारयेत् ॥
वृषाङ्कं कारयेत् तत्र किङ्किणीकृतपन्नगम् ।
पूर्वोक्तदेशकाले च वेदिकोपरिमण्डले ॥

'वृषाङ्को' महेश्वरः ।

## तन्मूर्त्तिलक्षणमाह विश्वकर्मा ।

त्रिनेत्रस्तु चतुर्बाहुर्जटामण्डलमण्डितः ।
शूलखट्वाङ्गवरदाभयपाणिर्महेश्वरः—इति ॥

'पूर्वोक्तदेशकाले' इत्यत्र देशकालकुण्डमण्डपवेदिकादि लिङ्गपुराणोक्तं तुलापुरुषदानविहितं वेदितव्यम् ।

वृषं च स्थापयेत् तत्र पश्चिमामुखमग्रतः ।

ईश्वरं पूजयेद्भक्त्या वृषारूढं वृषध्वजम् ॥
वृषेन्द्रं पूज्य गायत्र्या नमस्कृत्य समाहितः ।

ॐ तीक्ष्णशृङ्गाय विद्महे धर्मपादाय धीमहि । तन्नो वृषः प्रचोदयात् ।

इति वृषगायत्री ।

मन्त्रेणानेन संपूज्यो वृषो धर्मविवृद्धये ।
होतव्यं च घृताद्यैश्च यथाविभवविस्तरम् ॥
वृषः संपूज्य दातव्यो ब्राह्मणेभ्यः शिवाय च ।
दक्षिणा चैव दातव्या यथावित्तानुसारतः ॥
एतद्यः कुरुते भक्त्या वृषदानमनुत्तमम् ।
शिवस्यानुचरो भूत्वा सुचिरं तत्र मोदते ॥

प्रत्यग्मुखं च वृषभं शिवाग्रतः स्थापयेत् । शिवस्य तत्पश्चिमे स्थापनात् ।

तदुक्तं वातुले ।

वृषाङ्के परितः कार्यं किङ्किणीवलयं शुभम् ।
ईश्वरं पूजयेत् पश्चात् पश्चिमां दिशमास्थितम् ॥
पूजयित्वा विधानेन वृषयागं तु कारयेत्–इति ।

शिवाय चेति चकारः समुच्चये ।

कामिके त्वेकाग्निपक्षोऽपि ।

समिदाज्यचरूपेतमेकमग्निमथापि वा–इति ।

दक्षिणादिकं प्राग्वत् ।

इति लिङ्गपुराणोक्तो हिरण्मयवृषदानविधिः ।

अम्बरीष उवाच ।

यत् सूर्येण समाख्यातं दानं सर्वसुखावहम् ।
ईश्वराणां च निःस्वानां तन्मे व्याख्यातुमर्हसि ॥

वशिष्ठ उवाच ।

येनेश्वरो दरिद्रो वा करोति विधिना नृप ।
दानं सर्वगुणोपेतं तच्छृणुष्व यथा तथा ॥
भारादौ त्रिपलानां च वृषं कृत्वा विधानतः ।
युतं धेन्वाऽथ वा दद्याच्छक्तितो नृपसत्तम ॥
या मया धेनवः प्रोक्ता वृषास्तावन्त एव हि ।
हरये ता नियोज्याः स्युर्हराय च तथा वृषाः ॥
सर्वाभावात् ततो राजन् तिलपात्राणि नित्यशः ।
सर्वपापविनाशाय दीयन्ते नृपसत्तम ॥
गोमयेन समालिप्ते पट्टवस्त्रसमावृते ।
वृषं हेममयं तत्र रौप्यं वा रत्नसंयुतम् ॥
तस्य नीलमये शृङ्गे मौक्तिके चक्षुषी रदाः ।
द्वात्रिंशच्छुभवस्त्राणि विद्रुमौष्ठौ च नासिका ॥
मरकतं विनिर्दिष्टं कर्णौ वै हरिताश्मके ।
पद्मरागस्य वै पादाः खुरा रौप्यमयाः शुभाः* ॥
राजतानि च रोमाणि क्षौमवस्त्रेण कम्बलम् ।
पादेन पुच्छमुद्दिष्टं सर्वेषामप्ययं विधिः ॥
वृषणौ स्फटिकस्यापि लिङ्गे मणिः प्रकीर्त्तितः ।
यथा धेनुस्तथाऽनड्वान् सुवर्णस्य तु कारयेत् ॥
अभीष्टदेवतापूजां कुर्वीत तदनन्तरम् ।
मन्त्रेणानेन राजेन्द्र तं द्विजाय निवेदयेत् ॥
यो वृषो यज्ञदानेऽभूच्छतानीकस्य निष्कलः ।
जातरूपमयः सोऽयं तारिता मां न संशयः ॥

---

* स्मृता इति पुस्तकान्तरे ।

एतस्य विभवाद्दानं भक्त्या यः प्रतिपादयेत् ।
पृथुले वाप्यशक्ते वा तदनन्तफलं स्मृतम् ॥
निःस्वो वाप्येवमेवं हि कृत्वा दानमतन्द्रितः ।
तत्फलं समवाप्नोति स्वल्पदानान्न संशयः ॥

इति वह्निपुराणोक्तो हेमवृषदानविधिः ।

सनत्कुमार उवाच ।

आषाढपौर्णमास्यां तु कार्त्तिके वाऽथ फाल्गुने ।
श्रद्दधानैर्जितक्रोधैर्देयमेतद्यथाविधि ॥
जाम्बूनदस्य शुद्धस्य पलत्रिंशतिभि (?) स्तथा ।
तदर्धमर्धेन तथा यथाशक्त्या पलैस्त्रिभिः ॥
द्वाभ्यामेकेन वा कार्यो वृषः सर्वाङ्गशोभनः ।
पलादूनो न कर्त्तव्यो दुःखशोकभयावहः ॥
मण्डपं कारयेद्दिव्यं परार्ध्यपट्टनिर्मितम् ।
तन्मध्ये तण्डुलैः शुक्लैर्मण्डलं कारयेच्छुभम् ॥
ततः प्रभाते विमले समुत्थाय जितेन्द्रियः ।
शुक्लाम्बरधरः स्नातः शुक्लमाल्यानुलेपनः ॥
कृतनित्यक्रियः शुक्लमालारत्नविभूषितः ।
नरो वा यदि वा नारी दिव्यभोगाभिलाषिणी ॥
सितवस्त्रयुगच्छन्नं स्थापयित्वा ततो वृषम् ।
सौवर्णं मण्डपे तस्मिन् सुवर्णैर्बहुभिश्चितम् ॥
चन्दनागुरुकर्पूरैः सुमनोभिस्तथा सितैः* ।
संपूजयेत् ततः सम्यग्मन्त्रैः पौराणसंभवैः ॥
नमस्ते जगदाधार प्रियः पुण्यकृतामसि ।

* व्रतैरिति न० प्र० पु० पाठः ।

त्वद्विहीने जगत्यस्मिन् न कश्चिच्छुभमश्नुते ॥
नमस्ते धर्मराजाय वृषरूपधराय वै ।
त्वं मामुद्धर देवेश दुर्गसंसारसागरात् ॥
यशः कीर्त्तिर्धनं धान्यं यदन्यदपि संस्थितम् ।
तत् तत् प्रयच्छ देवेश परत्र च शुभां गतिम् ॥
इति संपूज्य विधिवत् तं देवं वृषरूपिणम् ।
नैवेद्यं संस्तरेत् तत्र हविषा निर्मितं शुभम् ॥
कालोद्भवं मूलफलं सर्वं देवसमन्ततः ।
हविषाऽन्नेन भुञ्जीत भोजयित्वा ततो द्विजान् ॥
सायाह्ने तु ततः कुर्यात् पुष्पगृहमनुत्तमम् ।
सितपुष्पैः शुभैर्गन्धैर्लुभ्यन्मधुकराकुलैः ॥
फलमूलानि चान्यानि दीपाः शुक्लदशान्विताः ।
घृतपूर्णास्तु कर्त्तव्याः संप्रद्योतितमण्डपाः ॥
रात्रौ जागरणं कार्यं देवदेवस्य सन्निधौ ।
वारमुख्याः समानाय्य गान्धर्वान् श्रुतिसौख्यदान् ॥
गीतवादित्रशब्देन ब्रह्मघोषरवेण च ।
नर्मालापैश्च नृत्यैश्च गमयेत् तां निशां ततः ॥
अरुणोदयवेलायां समुत्थाय जितेन्द्रियः ।
पूजयित्वा द्विजाँस्तत्र गोहिरण्यैर्नरोत्तम ॥
वृषरूपं ततो धर्मं प्रीयतां वृषभध्वजः ।
इत्युच्चार्य परं मन्त्रमाचार्याय निवेदयेत् ॥
दत्त्वा दानमिदं सम्यग्विधिनाऽनेन पार्थिवः ।
कुर्याद्दिग्विजयं विप्रो वेदकर्म समाचरेत्* ॥

---

* समारभेदिति पुस्तकान्तरे ।

वैश्यः समुद्रगमनं शूद्रः कर्म यथेप्सितम् ।
फाल्गुन्यामथ वा दद्याद्दानमेतन्नरोत्तमः ॥
रौद्रं कर्म विनिर्दिष्टं ब्रह्मणा शङ्करस्य हि ।

इति गारुडपुराणोक्तः सुवर्णवृषदानविधिः ।

## अथ रूप्यवृषदानम् ।

अथ कुष्ठहरं वक्ष्ये वृषदानमनुत्तमम् ।
यत् कार्यं कुष्ठरोगार्त्तैः शरीरसुखकारकम् ॥
पलैस्त्रिभिस्तु कुर्वीत द्वाभ्यामेकेन वा पुनः ।
राजतं वृषभं शुभ्रं हेमशृङ्गखुरं तथा ॥
महेश्वरेणोमया च कुर्वीत तमधिष्ठितम् ।
सौवर्णे प्रतिमे द्वे च पूर्वोक्तेन क्रमेण तु ॥
यथाविभवमानेन वित्तशाठ्यं न कारयेत् ।
पलाष्टके कांस्यपात्रे स्थापयेत् तं विचक्षणः ॥
श्वेतपुष्पैरक्षताभिः श्वेतवस्त्रैरलङ्कृतम् ।
ब्राह्मणं विद्यासंपन्नं स्वाचारं संयतेन्द्रियम् ॥
सर्वशास्त्रप्रवक्तारं प्रतिग्रहपराङ्मुखम् ।
दान्तं कुलीनं धर्मज्ञमनुद्वेगकरं नृणाम् ॥
क्रोधलोभविहीनं च सर्वशास्त्रार्थकोविदम् ।
गृहमाहूय भक्त्या तं यथाविधि समर्चयेत् ॥
केयूरकटकैर्वस्त्रैर्माल्यैश्चैवाङ्गुलीयकैः ।
होमं च पूर्ववत् कुर्यान्मन्त्रैर्माहेश्वरैस्तथा ॥
उदङ्मुखोपविष्टाय महादेवस्य सन्निधौ ।
प्राङ्मुखो व्याधितो दद्यान्मन्त्रेणानेन धर्मवित् ॥
अष्टमूर्त्तिर्महेशानः कृपया वृषभध्वजः ।

श्वेतमौदुम्बरं सर्वमथ वा श्वित्रमेव च ॥
त्वग्दोषजनितं यच्च मण्डलान्यथ वाऽनघ ।
सर्वं कर्मविपाकोत्थं पार्वतीनाथ सर्वग ॥
कुष्ठहा भव सर्वेश रक्ष मां पार्वतीपते ।

इति वायुपुराणोक्तो रूप्यवृषदानविधिः ।

आह बौधायनः ।

शुक्लपक्षस्य चाष्टम्यां द्वादश्यामथ वा पुनः ।
पलेन कुर्याद्वृषभं सान्द्रलोमसुराजतम् ॥
हेमशृङ्गं सुवर्णाक्षं रत्नपुष्पशुभाननम् ।
महेश्वरेणोमया च सौवर्णेन ह्यधिष्ठितम् ॥
अथो विभवतस्तत्र परिमाणं विधीयते ।

उमामहेश्वररूपमत्र निरन्तरोक्तवृषदानवदवधेयम् ।

पलाष्टके ताम्रपात्रे वस्त्रेणावेष्ट्य भक्तितः ।
देवस्यैकं वृषस्यैकं पार्वत्याश्चैकमेव हि ॥
श्वेतपुष्पैरक्षताभिः कुङ्कुमागुरुचन्दनैः ।
पूजयेन्मूलमन्त्रेण तिलहोमं च कारयेत् ॥
अष्टोत्तरशतं चाज्यमिश्रेण चार्यकेण तु ।
आचार्यो वित्तसंपन्नः स्वाचारः संयतेन्द्रियः ॥
सर्वशास्त्रार्थवक्ता च शान्तो च दान्तस्तथैव च ।
धर्मप्रवीणो धिषणस्त्वनुद्वेगकरो नृणाम् ॥
वृषदानप्रयोगज्ञो हरोमाभ्यामधिष्ठितम् ।
वृषभं घण्टिकोपेतं दद्याद्ग्रैवेयभूषितम् ॥
उदङ्मुखोपविष्टाय महादेवस्य सन्निधौ ।
प्राङ्मुखो व्याधितो भक्त्या मन्त्रेणानेन संयतः ॥

अष्टमूर्त्ते महेशान कृपया वृषभध्वज ।
उदुम्बरं वाऽऽजिनं वा दण्ड*मण्डलकं तथा ॥
त्वग्दोषजनितं यच्च पूर्वकर्मविपाकिनः ।
इह कर्मोद्भवं वाऽपि मातृदोषेण वा पुनः ॥
पितृदोषेण वा सर्वं रक्तदोषोद्भवं तथा ।
विनाशय शरीरोत्थं पार्वतीप्रिय शङ्कर ॥
वृषभस्य प्रदानेन उभाभ्यामधिष्ठितस्य हि ।

दानमन्त्रः ।

ब्राह्मणान् भोजयेच्चापि भक्त्या परमया युतः ।
कृतेनानेन कुष्ठानि व्रजन्ति विलयं ध्रुवम् ॥
तस्मात् कुष्ठाभिभूतानां करणीयमिदं जगुः ।

इत्यपररौप्यवृषप्रदानविधिः ।

## गरुडपुराणे ।

पलाष्टकेन रौप्येण कृत्वा वृषभमुत्तमम् ।
मुक्ताफलैरलङ्कुर्यात् पद्मरागैः सुशोभनैः ॥
सुवर्णतिलकोपेतं चारुचामरभूषितम् ।
गत्वा शिवालयं सम्यक् पूजां कृत्वा शिवे ततः ॥
रुद्राध्यायं जपित्वा तु सषडङ्गरहस्यकम् ।
होमश्च शिवमन्त्रेण तिलाज्येन विधीयते ॥
अथाहूय द्विजवरं वेदवेदाङ्गपारगम् ।
वस्त्रालङ्कारमाल्याद्यैः पूजयित्वा शिवं ततः ॥
उमापते त्रिलोकेश जगत्कारणकारणम् ।
स्ववाहनप्रदानेन प्रीतो भव नमोऽस्तु ते ॥

* दद्रमिति न॰ प्र॰ पु॰ पाठः ।

मन्त्रेणानेन तं दद्याद्धेमदक्षिणयाऽन्वितम् ।
दानस्यास्य प्रदानेन शिवलोके महीयते ॥

इति तृतीयरूप्यवृषदानविधिः ।

## स्कन्दपुराणे ।

रौप्यानडुहदानेन नरो यानेन गच्छति ।
अक्षयाँल्लभते लोकानिन्द्रेण सह मोदते ॥
त्रिंशत्पलात् समारभ्य पलत्रितयमन्ततः ।
वृषं रूप्यमयं कृत्वा सर्वरत्नैरलङ्कृतम् ॥
क्षौमवस्त्रपरिच्छन्नं धान्यविन्यासभूषितम् ।
यथोक्तकाले पात्राय पवित्रायोपपादयेत् ॥
एवं कृत्वा नरो दानं सर्वान् कामानवाप्नुयात् ।
दानमन्त्रमिमं प्राज्ञो दानकाले समुच्चरेत् ॥
धर्मस्त्वं वृषरूपेण जगदानन्दकारकः ।
अष्टमूर्त्तेरधिष्ठानमतः पाहि सनातनः ॥
एवं ददाति यो भक्त्या कलधौतमयं वृषम् ।
सर्वपापविनिर्मुक्तो देववद्दिवि मोदते ॥

इति चतुर्थरूप्यवृषदानविधिः ।

## अथ भूमिदानाख्यमतिदानमारभ्यते ।

## तत्र महाभारते । भीष्म उवाच ।

अतिदानेषु सर्वेषु पृथिवीदानमुच्यते ।
अचला ह्यक्षया भूमिर्दोग्धुकामानत्तमान् ॥
दोग्धि वासांसि रत्नानि पशून् व्रीहियवाँस्तथा ।
भूमिदः सर्वभूतेषु शाश्वतीरेधते समाः ॥
यावद्भूमेरायुरिति तावद्भूमिद एधते ।

न भूमिदानादस्तीह परं किञ्चिद्युधिष्ठिर ॥
भूमिमेव ददुः पूर्वं ये भूमिं भुञ्जतेऽधुना ।
स्वकर्मणोपजीवन्ति नरा इह परत्र च ॥
य एतां दक्षिणां दद्यात् पृथिवीं पृथिवीपतिः ।
पुनश्च जननं प्राप्य स भवेत् पृथिवीपतिः ॥
संग्रामे वा तनुं जह्याद्दद्याद्वा* पृथिवीमिमाम् ।
इत्येतां क्षत्रबन्धूनां वदन्ति परमाशिषम् ॥
पुनाति दत्ता पृथिवी दातारमिति सत्तम† ।
अपि पापसमाचारं ब्रह्मघ्नमपि वाऽनृतम् ॥
सैव पापात् तारयति सैव पापात् प्रमुञ्चति ।
अपि पापकृतां राज्ञां प्रतिगृह्णन्ति साधवः ॥
पृथिवीं नान्यदिच्छन्ति पावनं ह्येतदुत्तमम् ।
नामास्याः प्रियदत्तेति गुह्यं देव्याः सनातनम् ॥
दानं वाऽप्यथ वाऽदानं नामास्याः परमं शिवम् ।
यः साधोर्भूमिमादत्ते न भूमिं विन्दते हि सः ॥
भूमिं दत्त्वा तु साधुभ्यो विन्दते भूमिमेव हि ।
यस्य विप्रास्तु शंसन्ति साधोर्भूमिं सदैव हि ॥
न तस्य शत्रवो राज्ञः प्रशासन्ति वसुन्धराम् ।
यत् किञ्चित् कुरुते पापं पुरुषो वृत्तिकर्षितः ॥
अपि गोचर्ममात्रेण भूमिदानेन पूयते ।
येऽपि संकीर्णकर्माणो राजानो रौद्रकर्मिणः ॥
तेभ्यः पवित्रमाख्येयं भूमिदानमनुत्तमम् ।

---

* जह्याद्वेति वा पाठः ।

† शुश्रुमेति न॰ प्र॰ पु॰ पाठः ।

अल्पान्तर*मिदं शश्वत् पुराणा मेनिरे जनाः ॥
यो यजेताश्वमेधेन दद्याद्वा साधवे महीम् ।
सुवर्णं रजतं वस्त्रं मणिमुक्तावसूनि च ॥
सर्वमेतन्महीपाल ददाति वसुधां ददत् ।
सागरान् सरितः शैलान् काननानि च सर्वशः ॥
सर्वमेतन्नरश्रेष्ठ ददाति वसुधां ददत् ।
ओषधीः क्षीरसम्पन्ना नगान् पुष्पफलान्वितान् ॥
काननान्युपशैलाँश्च ददाति वसुधां ददत् ।
अग्निष्टोमप्रभृतिभिरिष्ट्वा च स्वाप्तदक्षिणैः ॥
न तत् फलमवाप्नोति भूमिदानाद्यदश्नुते ।
तपो यज्ञः श्रुतं शीलमलोभः सत्यवादिता ॥
गुरुदैवतपूजा च नातिवर्त्तन्ति भूमिदम् ।
भर्त्तुर्निःश्रेयसे युक्तास्त्यक्तात्मानो रणे हताः ॥
ब्रह्मलोकगताः सन्तु नातिक्रामन्ति भूमिदम् ।
यथा जनित्री क्षीरेण स्वपुत्रं भरते सदा ॥
अनुगृह्णाति दातारं तथा सर्वरसैर्मही ।
मृत्योर्वै किङ्करो दण्डस्तापो वह्नेः सुदारुणः ॥
घोराश्च वारुणाः पाशा नोपसर्पन्ति भूमिदम् ।
पितॄँश्च पितृलोकस्थान् दिवलोकेऽथ देवताः ॥
संतर्पयति शान्तात्मा यो ददाति वसुन्धराम् ।
क्लिश्यमानाय चात्यर्थं वृत्तिग्लानाय सीदते ॥
भूमिं वृत्तिकरीं दत्त्वा सत्री भवति मानवः ।
यथा धावति गौर्वत्सं क्षरन्ती सततं पयः ॥

---

* आभ्यन्तरमिति न॰ प्र॰ पु॰ पाठः ।

एवमेव महाभाग भूमिर्भरति भूमिदम् ।
फालकृष्टां महीं दत्त्वा सवीजां सफलामपि ॥
उद्यानं शरणं वाऽपि तथा भवति कामदम् ।
यथा चन्द्रमसो वृद्धिरहन्यहनि जायते ॥
तथा भूमिकृतं दानं सस्ये सस्ये विवर्धते ।
अत्र गाथां भूमिकृतां कीर्त्तयन्ति पुराविदः ॥
यां श्रुत्वा जामदग्न्येन दत्ता भूः कश्यपाय वै ।
नृपा ददति मामेव मां दत्त्वा मामवाप्स्यथ ॥
अस्मिन् लोके परे चैव ततश्चाऽऽजनने पुनः ।
य इमां व्याहृतिं देव ब्राह्मणो ब्रह्मसंस्थिताम् ॥
श्राद्धस्य क्रियमाणस्य ब्रह्मभूयं स गच्छति ।
कृत्यया वाऽभिशस्तानां दुरिष्टशमनं महत् ॥
प्रायश्चित्तं महीं दत्त्वा पुनात्युभयतो दश ।
यो ब्राह्मण इमं वेद* वेदवादं तथैव च ॥
प्रकृतिः सर्वभूतानां भूमिर्वै शाश्वती मता ।
अभिषिच्यैव नृपतिं श्रावयेदिममागमम्† ॥
यथा श्रुत्वा महीं दद्यान्नादद्यात् साधुतश्च ताम् ।
स कुलीनः स पुरुषः स बन्धुः स च पुण्यकृत् ॥
स च दाता स विक्रान्तो यो ददाति वसुन्धराम् ।
आदित्या इव दीप्यन्ते तेजसा भुवि मानवाः ॥
ददन्ति वसुधां स्फीतां ये वेदविदुषि द्विजे ।
यथा वीजानि रोहन्ति प्रकीर्णानि महीतले ॥

---

* देव इति न॰ प्र॰ पु॰ पाठः ।
† दिव्यमागतमिति न॰ प्र॰ पु॰ पाठः ।

तथा कामाः प्ररोहन्ति भूमिदानसमार्जिताः ।
आदित्यो वरुणो विष्णुः ब्रह्मा सोमो हुताशनः ॥
शूलपाणिश्च भगवानभिनन्दन्ति भूमिदम् ।
सौवर्णा यत्र प्रासादा वसोर्धाराश्च कामदाः ॥
गन्धर्वाप्सरसो यत्र तत्र गच्छन्ति भूमिदाः ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥
बृहस्पतेश्च संवादमिन्द्रस्य च युधिष्ठिर ।
इष्ट्वा क्रतुशतेनाऽथ महता दक्षिणावता ॥
मघवान् वाग्मिनां श्रेष्ठं पप्रच्छेदं बृहस्पतिम् ।

इन्द्र उवाच ।

भगवन् केन दानेन स्वर्गतः सुखमेधते ।
यदक्षय्यमहार्यं च तद्ब्रूहि वदतां वर ॥
इत्युक्तः स सुरेन्द्रेण ततो देवपुरोहितः ।
बृहस्पतिर्बृहत्तेजाः प्रत्युवाच पुरन्दरम् ॥

बृहस्पतिरुवाच ।

सुवर्णदानं गोदानं भूमिदानं च वृत्रहन् ।
ददाति यो महाप्राज्ञः सर्वपापैः प्रमुच्यते ॥
न भूमिदानाद्देवेन्द्र परं किञ्चिदिति प्रभो ।
वरिष्ठमभिपश्यामि यथा प्राहुर्मनीषिणः ॥
पञ्च पूर्वादिपुरुषाः षट् च ये वसुधां गताः ।
एकादश दद्द्भूमिं परित्रातीह मानवः ॥
रत्नोपकीर्णां वसुधां यो ददाति पुरन्दर ।
स मुक्तः सर्वकलुषैः स्वर्गलोके महीयते ॥
महीं स्फीतां दद्द्राजा सर्वकामगुणान्विताम् ।

राजाधिराजो भवति तद्धानमनुत्तमम् ॥
सर्वकामसमायुक्तां काश्यपीं यः प्रयच्छति ।
सर्वभूतानि मन्यन्ते मां ददातीति वासव ॥
सर्वकामदुघां भूमिं सर्वकामपुरोगमाम् ।
ददातीह सहस्राक्ष स स्वर्गं याति मानवः ॥
मधुसर्पिःप्रवाहिन्यः पयोदधिवहास्तथा ।
सरितस्तर्पयन्तीह सुरेन्द्र वसुधाप्रदम् ॥
भूमिप्रदाननृपतिर्मुच्यते सर्वकिल्बिषात् ।
न हि भूमिप्रदानेन दानमन्यद्विशिष्यते ॥
पुण्यां स्वदुरसां भूमिं यो ददाति पुरन्दर ।
न तस्य लोकाः क्षीयन्ते भूमिदानगुणार्जिताः ॥
सर्वथा पार्थिवेनेह सततं भूतिमिच्छता ।
भूर्देया विधिवच्छक्र पात्रे सुखमभीप्सता ॥
अपि कृत्वा नरः पापं भूमिं दत्त्वा द्विजातये ।
समुत्सृजति तत्पापं जीर्णां त्वचमिवोरगः ॥
सागराः सरितः शैलास्तीर्थानि विविधानि च ।
एतानि भूमिदानस्य कलां नार्हन्ति षोडशीम् ॥
तस्मात् प्राग्वैव मेधावी दद्याद्विप्राय पार्थिव ।
न भूमिपतिना भूमिरधिष्ठेया कथञ्चन ॥
अग्निष्टोमप्रभृतिभिरिष्ट्वा यज्ञैः सदक्षिणैः ।
न तत् फलमवाप्नोति भूमिदानाद्यदश्नुते ॥
दाता दशानुगृह्णाति दश हन्ति तथा क्षिपन् ।
पूर्वदत्तां हरन् भूमिं नरकायोपगच्छति ॥
न ददाति प्रतिश्रुत्य दत्त्वा वा हरते तु यः ।

तौ च द्वौ वारुणैः पाशैस्तप्येते मृत्युशासनात् ॥
विन्ध्याटवीष्वतोयासु शुष्ककोटरवासिनः ।
कृष्णसर्पास्तु जायन्ते ये हरन्ति वसुन्धराम् ॥
पतन्त्यश्रूणि रुदतां दीनानामवसीदताम् ।
ब्राह्मणानां हृते क्षेत्रे हन्युस्त्रिपुरुषं कुलम् ॥
आहिताग्निं समादाय कृशभृत्यं प्रियातिथिम् ।
वसुधां ये प्रयच्छन्ति नोपसर्पन्ति ते यमम् ॥

तथा ।

इक्षुभिः सततां भूमिं यवगोधूमशालिनीम् ।
गोष्ठावहनसंपूर्णां बहुवीर्यसमार्जिताम् ॥
बीजगर्भां ददद्भूमिं सर्वरत्नपरिच्छदाम् ।
अक्षयान् लभते लोकान् भूमिसत्रं हि तस्य तत् ॥
विधूय कल्मषं सर्वं राजा स्यात् संमतः सताम् ।
लोके महीयते सद्भिर्यो ददाति वसुन्धराम् ॥
यथाऽप्सु पतितः शक्र स्नेहबिन्दुः प्रसर्पति ।
तथा भूमिकृतं दानं सस्ये सस्येऽभिवर्धते ॥
नृत्यगीतपरा नार्यो दिव्यमालाविभूषिताः ।
उपतिष्ठन्ति देवेन्द्र सदा भूमिप्रदं नरम् ॥
मोदते च सुखं स्वर्गे देवगन्धर्वपूजितः ।
यो ददाति महीं सम्यग्विधिनेह द्विजातये ॥
शतमप्सरसां चैव दिव्यमालं विभूषितम् ।
उपतिष्ठन्ति देवेन्द्र ब्रह्मलोके धराप्रदम् ॥
उपतिष्ठन्ति भूतानि सदा भूमिप्रदं नरम् ।
शङ्खं भद्रासनं छत्रं धराऽश्वा वरवारणाः ॥

भूमिदानस्य पुण्यानि हिरण्यनिचयास्तथा ।
आज्ञा सदाऽप्रतिहता जयशब्दो भवत्यथ ॥
भूमिदानस्य पुष्पाणि* फलं स्वर्गः पुरन्दर ।
हिरण्यपुष्पाश्चौषध्यः कुशकाञ्चनशाद्वलाः ॥
अमृतप्रसवां भूमिं प्राप्नोति पुरुषो ददत् ।
नास्ति भूमिसमं दानं नास्ति यज्ञसमो गुरुः ॥
नास्ति सत्यपरो धर्मो नास्ति दानसमो निधिः ।
एतदाङ्गिरसो श्रुत्वा वासवो वसुधामिमाम् ॥
वसुरत्नसमाकीर्णां ददावाङ्गिरसे तदा ।
य इदं श्रावयेच्छ्राद्धे भूमिदानस्य संस्तवम् ॥
न तस्य रक्षसां भागो नासुराणां भवत्युत ।
अक्षयं च भवेद्दत्तं पितृभ्यश्च न संशयः ॥

देवलः ।

श्रेष्ठाच्छ्रेष्ठतरं प्रोक्तं भूमिदानं द्विजातिभिः ।
तद्दत्वा पुरुषः स्वर्गे पूज्यते त्रिदशोत्तमैः ॥
वाञ्छन्ति पितरोऽप्येवं स्वर्गलोके व्यवस्थिताः ।
यद्यस्मत्कुलजः कश्चित् भवत्यवनिदानकृत् ॥
नरकस्था मरुल्लोके स्वर्गस्थाः परमं पदम् ।
यथा वयमतीता ये व्रजामस्तत्प्रभावतः ॥
किमत्र चित्रं दातारं यत् समुद्धरते धरा ।
प्रतिग्रहग्रहीतारमपि तारयति द्विजम् ॥
न तद्यज्ञैर्व्रतैर्दानैर्दातृभिः फलमाप्यते ।
अपि यद्दत्तया भूम्या दण्डत्रितयमात्रया ॥

---

* पुण्यानीति न० प्र० पु० पाठः ।

यद्दानं दीयते किञ्चित् परत्र स्यादिहैव हि ।
भूदानेन पुनः सर्वदानानां प्राप्यते फलम् ॥
ते धन्यास्ते सुकृतिनः कृतार्थास्ते न संशयः ।
सत्पात्राय प्रदत्तं यैर्भूदानं विधिना नरैः ॥

विष्णुधर्मोत्तरे । हंस उवाच ।

हस्तमात्रं तु यो दद्याद्भुवः पुरुषसत्तमः ।
तेनैव ध्रुवमायाति भूमिदानफलं नरः ॥
गोचर्ममात्रां तां दत्त्वा वसूनां लोकमाप्नुयात् ।
शाकभूमिं नरो दत्त्वा लोकमाङ्गिरसं लभेत् ॥
आरामभूमिं दत्त्वा च मारुतं लोकमाप्नुयात् ।
जलाशयार्थं यो दद्याद्वारुणं लोकमाप्नुयात् ॥
यस्य देवस्य वेश्मार्थं तस्य देवस्य सोऽश्नुते ।
उद्यानभूमिं दत्त्वा च गन्धर्वैः सह मोदते ॥
रत्नाकरभुवं दत्त्वा शक्रलोके महीयते ।
अन्येषामाकरभुवं लोकानां यः प्रयच्छति ॥
तस्यापि गतिरुद्दिष्टा लोके हौताशने द्विजाः ।
धान्याकरभुवं दत्त्वा नागपृष्ठे महीयते ॥
अञ्जनाकरभूमिं च यः प्रयच्छति वै द्विजाः ।
पितृभिर्यमलोकस्थः पूज्यतेऽसौ नरोत्तमः ॥
लवणाकरभूमिं च सोमलोके महीयते ।
ओषधाकरभूमिं च अश्वलोके महीयते ॥
शिम्बीशस्यप्ररोहां तु भुवं दत्त्वा नरोत्तमः ।
साध्यानां लोकमाप्नोति नात्र कार्या विचारणा ॥
इन्धनाकरभूमिं च वह्निलोके महीयते ।

सर्वदानभुवं दत्त्वा रुद्रलोके महीयते ॥
केदारभूमिं धर्मज्ञो यः प्रयच्छति धर्मतः ।
महत् पुण्यमवाप्नोति ब्रह्मलोकं च गच्छति ॥
इक्षुभूमिं नरो दत्त्वा शालिभूमिमथापि वा ।
सोमलोकमवाप्नोति सर्वकामाँश्च विन्दति ॥
गुल्मपुष्पलताकीर्णां यो भुवं संप्रयच्छति ।
विमाने नन्दने सोऽथ क्रीडत्यप्सरसां गणैः ॥
पुष्पदं फलदं वृक्षं दधतीं पृथिवीं ददत् ।
स्वर्गलोकपरिभ्रष्टो नगराधिपतिर्भवेत् ॥
ब्राह्मणाय गृहं दत्त्वा वसूनां* लोकमश्नुते ।
सारामभूमिदो विप्रः क्रीडते नन्दने वने ॥
ग्रामप्रदः स्यान्नृपतिः सम्राट् नगरदो भवेत् ।
समग्रवसुधेशः स्याच्चक्रवर्त्ती च राज्यदः ॥
स्वदत्तां परदत्तां वा यो हरेच्च वसुन्धराम् ।
अप्येकाङ्गुलमात्रां वा प्रमादाज्ञानमोहितः ॥
बहून्यब्दसहस्राणि धर्मेऽपि पुरुषोत्तमः ।
विष्ठायां क्रिमितामेति पितृभिः सहितस्तथा ॥
स्वे राष्ट्रे परराष्ट्रे वा देवब्राह्मणसात् कृताम् ।
चिरं नरकमाप्नोति हृत्वा भूमिपतिर्भुवम् ॥
भूमिं कृत्वा तु यः कुर्याद्देवब्राह्मणसान्नरः ।
स्वर्गलोकमवाप्नोति पुरुषोऽपि सुदारुणः ॥
षष्टिर्वर्षसहस्राणि स्वर्गे वसति भूमिदः ।
आच्छेत्ता चानुमन्ता च तावन्ति नरकं वसेत् ॥

---

* वायूनामिति पाठान्तरम् ।

पक्वसस्यां वसुमतीं योऽलङ्कृत्य प्रयच्छति ।
कामगेन विमानेन ब्रह्मलोकं स गच्छति ॥

भविष्यत्पुराणे ।

निवर्त्तनसहस्राढ्यां सर्वसस्यप्ररोहिणीम् ।
दद्याद्भूमिं फलोपेतां भूमिदानं तदुच्यते ॥
एकच्छत्रां महीं कृत्वा द्विजेभ्यः प्रतिपादयेत् ।
संपूर्णां यो नृपः कश्चित् भूमिदानं तदुच्यते ॥

कूर्मपुराणे ।

गोचर्ममात्रं भूखण्डमधिकं वा स्वशक्तितः ।
त्रिधा सदक्षिणं कृत्वा दत्त्वा शिवपुरं व्रजेत् ॥

'त्रिधा सदक्षिणमिति' पूर्वोक्तैकद्वित्रिसुवर्णैः सहदक्षिणमित्यर्थः ।

बृहस्पतिः ।

अपि गोचर्ममात्रेण* सम्यग्दत्तेन मानवः ।
धौतपापो विशुद्धात्मा स्वर्गलोके महीयते ॥
दशहस्तेन दण्डेन त्रिंशद्दण्डा निवर्त्तनम् ।
दश तान्येव गोचर्म ब्राह्मणेभ्यो ददाति यः ॥
यत् किञ्चित् कुरुते पापं पुरुषो लोभमोहितः ।
तत् सर्वं भूमिदानेन क्षिप्रमेव विनश्यति ॥

कात्यायनः ।

मुच्यते ब्रह्महा गोघ्नः पितृघ्नो गुरुतल्पगः ।
भूमिं सर्वगुणोपेतां दत्त्वा पापात् प्रमुच्यते ॥

---

* गोकर्णमात्रेणेति पुस्तकान्तरे ।

वृद्धवशिष्ठः ।

दशहस्तेन दण्डेन दशहस्तान् समन्ततः ।
पञ्च चाभ्यधिकान् दद्यादेतद्गोचर्म कथ्यते ॥

मत्स्यपुराणे ।

सप्तहस्तेन दण्डेन त्रिंशद्दण्डा निवर्त्तनम् ।
त्रिभागहीनं गोचर्ममानमाह प्रजापतिः ॥
मानेनानेन यो दद्यान्निवर्त्तनशतं बुधः ।
विधिनाऽनेन तस्याशु क्षीयते पापसंहतिः ॥
तदर्धमथ वा दद्यादपि गोचर्ममात्रकम् ।
भवनस्थानमात्रां गां सोऽपि पापात् प्रमुच्यते ॥

तथा ।

यत् किञ्चित् कुरुते पापं जन्मप्रभृति मानवः ।
अपि गोचर्ममात्रेण भूमिदानेन शुद्ध्यति ॥
गवां शतं वृषश्चैको यत्र तिष्ठेदयन्त्रितः ।
तद्धि गोचर्ममात्रं तु प्राहुर्वेदविदो जनाः ॥

अत्र चैतेषु गोचर्मप्रकारेषु उत्तममध्यमाधमभावेन व्यवस्था वेदितव्या । सुवर्णं चात्र दक्षिणा ।

यदाह माण्डव्यः ।

न हि भूमेः परं वस्तु गोः सुवर्णाच्च किञ्चन ।
अतो भुवि गवि प्राज्ञैः सुवर्णं दक्षिणा मता ॥

भूमिदानमन्त्रस्तु मत्स्यपुराणे ।

तथा भूमिप्रदानस्य कलां नार्हन्ति षोडशीम् ।
दानान्यन्यानि मे शान्तिर्भूमिदानाद्भवत्विह ॥

अत्रैवं प्रयोगः ।

ॐ अद्यामुकस्मिन् कालेऽमुकस्मिन् देशेऽमुकसगोत्रायामुकप्रवरायामुकशर्मणेऽमुकसगोत्रोऽहममुकप्रवरोऽमुकशर्मा इमां भूमिं प्रियदत्तां विष्णुदैवताममुककामस्तुभ्यमहं संप्रददे न मम–इति सपुष्पं कुशतिलोदकं ब्राह्मणहस्ते निक्षिपेत्। तेन च मनसा भूमिं प्रदक्षिणीकृत्य प्रतिग्रहः कार्यः। भूमिः समीपे चेत् साक्षात् प्रदक्षिणीकुर्यात्।

ॐ अद्यामुकसगोत्रायेत्यादि एतद्भूमिदानप्रतिष्ठामेतत् सुवर्णं दक्षिणां तुभ्यमहं संप्रददे न मम–इति ।

विश्वामित्रः ।

गोचर्ममात्रां यः पृथ्वीं ब्राह्मणाय प्रयच्छति ।
सर्वदः स तु विज्ञेयः शक्रवद्दिवि मोदते ॥
ग्रामं वा नगरं वाऽपि विप्रेभ्यो यः प्रयच्छति ।
क्षेत्रं वा सस्यसम्पन्नं सर्वपापैः प्रमुच्यते ॥

बृहस्पतिः ।

आस्फोटयन्ति पितरः प्रगल्भन्ति पितामहाः ।
भूमिदोऽस्मत्कुले जातः सोऽस्माकं तारयिष्यति ॥

नन्दिपुराणे ।

दत्वा च भूमिं पुरुषः सश्रेयां सस्यमेदिनीम्* ।
सुमेध्यां रम्यसंस्थानां फलवृक्षमनोरमाम् ॥
अनूषरामनाबाधां पात्रे बहुगुणान्विते ।
अप्येकपुरुषाधारां दत्वा भूमिं महात्मने ॥
दश कल्पानि वसति स्वर्गे विगतपातकः ।

---

* सस्यदायिनीमिति पुस्तकान्तरे पाठः ।

महाभारते ।

शीतवातातपसहां गृहभूमिं सुसंस्कृताम् ।
प्रदाय सुरलोकस्थः पुण्यान्तेऽपि न चाल्यते ॥

तथा ।

प्रादेशमात्रां भूमिं तु यो दद्यादनुपस्कृताम् ।
न स सीदति कृच्छ्रेण न च दुर्गाण्यपाश्नुते ॥
मुदितो राजते प्राज्ञः शक्रेण सह नन्दति ।
यावन्ति लाङ्गलमुखेन रजांसि भूमे-
र्भासां पतेर्दुहितुरङ्गजरोमकाणि ।
तावन्ति शङ्करपुरे स युगानि तिष्ठेद्-
भूमिप्रदानमिह यः कुरुते मनुष्यः ॥
गन्धर्वकिन्नरसुरासुरसिद्धसङ्घै-
राधूतचामरमुपेत्य महद्विमानम् ।
संपूज्यते पितृपितामहबन्धुयुक्तः
शम्भोः पुरं व्रजति चामरनायकः स्यात् ॥
स्वदत्तां परदत्तां वा यो हरेच्च वसुन्धराम् ।
स विष्ठायां कृमिर्भूत्वा पितृभिः* सह मज्जति ॥

इति भूमिदानविधिः ।

तत्र शिवधर्मे ।

यः शिवाय हलोपेतां सर्वसस्यप्ररोहिणीम् ।
मह्नीं महीपतिर्दद्यात् तस्य पुण्यफलं शृणु ॥
यावद्दण्डा भवेद्भूमिर्मीयमाना समन्ततः ।

---

* कृमिभिरिति न० प्र० पु० पाठः ।

स तावत्कल्पसङ्ख्यानं रुद्रलोके महीयते ॥
एवं सर्वत्र विज्ञेयं फलं दण्डप्रमाणतः ।
ग्रामं खेटं पुरं क्षेत्रं विषयादि निवेदयेत् ॥
सर्वसस्यजलोपेतं सर्वबाधाविवर्जितम् ।
ग्रामं शिवाय यो दद्यात् तस्य पुण्यफलं शृणु ॥
सर्वतीर्थेषु यत् पुण्यं ग्रामदानेन यत् फलम् ।
सूर्यकोटिप्रतीकाशैर्दिव्यस्त्रीकोटिसंयुतः ॥
संयुक्तः कोटिशोऽनेकैः सर्वकामसमन्वितैः ।
विमानैर्ग्रामदानेन त्रिः सप्तकुलसंयुतः ॥
यथेष्टमैश्वरे लोके क्रीडते कालमक्षयम् ।
पुण्यं नगरदानस्य ग्रामदानाच्छताधिकम् ॥
देशदानेन चात्यन्त्यं न शक्यं तत् प्रकीर्त्तितुम् ।
रत्नान्नपानगोश्वाद्यं सर्वं भूमौ प्रजायते ॥
तस्माद्भूमिप्रदानेन नरो भवति सर्वदः ।

इति शिवभूमिदानविधिः ।

## वराहपुराणे ।

विष्णवे विषयं ग्रामं ग्रामार्धमपि शक्तितः ।
दत्वा क्रीडति वैकुण्ठोपकण्ठेषु निरत्ययम् ॥
राजराजेश्वरः श्रीमानरोगः सुभगः सुखी ।
विद्यानां पारदश्चैव जायते कीर्त्तिमानपि ॥
निवर्त्तनसहस्रं यो विष्णवे विनिवेदयेत् ।
सर्वगीर्वाणदेवेषु* स क्रीडति युगावधि ॥

---

* वेदेष्विति क्वचित् पाठः ।

निवर्त्तनशतेनापि यः प्रीणयति केशवम् ।
शतयोजनविस्तीर्णे स राजा भूतले भवेत् ॥
अपि गोचर्ममात्रां यो ददाति हरये भुवम् ।
सप्तजन्मानि राजेन्द्र स श्रीमानभिजायते ॥
विष्णवे भोगमुद्दिश्य क्षेत्रं वा गृहमेव वा ।
यो ददाति स पुण्यात्मा सर्वपापैः प्रमुच्यते ॥

इति विष्णवे भूमिदानम् ।

भविष्यत्पुराणे ।

यः सूर्याय फलोपेतां सर्वसस्यप्ररोहिणीम् ।
महीं महीपतिर्दद्यात् तस्य पुण्यफलं शृणु ॥
भूभागाश्चैव यावन्तो भूतले भान्ति सत्तम ।
तावद्युगसहस्राणि स्वर्गलोके* महीयते ॥
एवं सर्वत्र विज्ञेयं फलं द्रव्यानुसारतः ।
ग्रामखेटपुरक्षेत्रविषयादिनिवेदने ॥
सर्वसस्यफलोपेतं सर्वशत्रुविवर्जितम् ।
ग्रामं सूर्याय यो दद्यात् तस्य पुण्यफलं शृणु ॥
सर्वतीर्थेषु यत् पुण्यं सर्वव्रतेषु यत् फलम् ।
सर्वदानेषु यत् पुण्यं ग्रामदानेन तल्लभेत् ॥
सूर्यकोटिप्रतीकाशैर्दिव्यस्त्रीकोटिसंकुलैः ।
नानारत्नसमाकीर्णैर्नानाकामसमन्वितैः ॥
विमानैर्ग्रामदानेन त्रिः सप्तकुलसंवृतः ।
यथेष्टं सर्वलोके तु क्रीडते कालमक्षयम् ॥

---

* सूर्यलोके इति क्वचित् पाठः ।

पुण्यं नगरदानस्य ग्रामदानशतद्वयम् ।
देशदाने तदाऽनन्तं फलमाहुर्मनीषिणः ॥

इति भानुभूमिदानम् ।

## अथ विद्यादानाख्यमतिदानमारभ्यते ।

### तत्रादित्यपुराणे ।

त्रीणि तुल्यप्रदानानि त्रीणि तुल्यफलानि च ।
सर्वकामदुघा नूनं गावः पृथ्वी सरस्वती ॥

### नन्दिपुराणे ।

यस्तु पुण्यपरो मर्त्त्यो जिगीषुः कीर्त्तिसाधकः ।
सविधानेन वै दद्याद्विद्यां विविधकामदाम् ॥
नित्यं विद्याप्रदानं वै सर्वकामगुणाधिकम् ।
यतेत पात्रे संत्यक्तुं रहस्यं चैतदुत्तमम् ॥
उद्दिश्य देवतां दत्तं प्रदानं यत्र कुत्र चित् ।
तस्याः समस्तपुण्यस्य फलं केन निरूप्यते ॥

### गारुडपुराणे ।

दानानामुत्तमं दानं विद्यादानं विदुर्बुधाः ।
आहुः समस्तविद्यानां श्रियमेवाधिदैवतम् ॥
यथा वरिष्ठो देवानां विष्णुः कारणपूरुषः ।
यथा च योषित्प्रवरा कमला पङ्कजालया ॥
आहुर्बलवतां* श्रेष्ठो यथा ज्योतिष्मतां रविः ।
जलाशयानां प्रवरो यथाऽयं सरितां पतिः ॥
तथा विद्याप्रदः श्रेष्ठो गरीयाँश्च गरीयसाम् ।

---

* वायुर्बलवतामिति क्वचित् पाठः ।

पुण्यश्चापि स सर्वत्र यश्च विद्यां प्रयच्छति ॥
इहामुत्र सुखक्षेममाहुर्विद्याधनं धनम् ।
विद्ययाऽमलया युक्तो विमुक्तिं याति संयमी ॥
विद्यया च सुखं गच्छेद्विद्यया च परां गतिम् ।
विद्या प्रतिष्ठा भूतानां विद्यायोनिश्च देवता ॥
तस्माद्विद्याप्रदो लोके सर्वदः प्रोच्यते बुधैः ।

बृहस्पतिः ।

सहस्रमेव धेनूनां शतं चानडुहा समम् ।
दशानडुत्समं यानं दशयानसमो हयः ॥
दशवाजिसमा कन्या भूमिदानं च तत्समम् ।
भूमिदानात् समं नास्ति विद्यादानं ततोऽधिकम् ॥

विष्णुधर्मोत्तरे ।

विद्या कामदुघा धेनुर्विद्या चक्षुरनुत्तमम् ।
विद्यादानात् परं दानं न भूतं न भविष्यति ॥
विद्यावान् सर्वकामानां भाजनं पुरुषो भवेत् ।
तस्माद्विद्या हि ददता सर्वं दत्तं भवेदिह ॥
पराध्यापनशक्तो हि पुरुषस्तु यदश्नुते ।
तपस्तत्परमं तस्य ब्रह्मलोकसमं स्मृतम् ॥
दानानामुत्तमं लोके तपसश्च तथोत्तमम् ।
विद्यादानं महाभाग सर्वकामफलप्रदम् ॥

देवीपुराणे ।

विद्याविवेकबोधेन शुभाशुभविचारणात् ।
विन्दते सर्वकामाप्तिं यस्माद्विद्या परा मता ॥
विद्यादानात् परं दानं त्रैलोक्येऽपि न विद्यते ।

येन दत्तेन चाप्नोति शिवं परमकारणम् ॥

तथा ।

सिद्धान्तमोक्षशास्त्राणि वेदाः स्वर्गादिसाधकाः ।
वेदाङ्गानीतिहासाश्च देया धर्मविवृद्धये ॥
गारुडं बालतन्त्रं च भूततन्त्राणि भैरव ।
शास्त्राणां पाठनाद्दानान्मातरः फलदा नृणाम् ॥
ज्यौतिषं वैद्यशास्त्राणि कलाः काव्यं शुभागमाः ।
दानादारोग्यमाप्नोति गान्धर्वं लभते पदम्* ॥
विद्यया वर्त्तते लोको धर्माधर्मं च विन्दति ।
विद्या तस्मात् सदा देया दृष्टादृष्टफलार्थिभिः ॥

विष्णुधर्मोत्तरे ।

धर्मशास्त्रप्रदानेन धर्मेण सह मोदते ।
सिद्धान्तानां प्रदानेन मोक्षं प्राप्नोति वैदिकम्† ॥
शास्त्राणि दत्त्वा चान्यानि नरः स्वर्गे महीयते ।

नन्दिपुराणे ।

विद्याश्चतुर्दश प्रोक्ताः क्रमेण तु यथास्थिति ।
षडङ्गाश्चतुरो वेदा धर्मशास्त्रं पुरातनम् ॥
मीमांसा तर्कमपि च एता विद्याश्चतुर्दश ।

धर्मशास्त्रं स्मृतयः । पुरातनं पुराणम् ।

आसामेवान्तरोत्पन्नाः परा विद्याः सहस्रशः ।
आयुर्वेदः शस्यवेदो बहुभेदः प्रकीर्त्तितः ॥

शस्यवेदः कृषिशास्त्रम् ।

---

* फलमिति क्व चित् पाठः ।

† मोक्षमाप्नोत्यसंशयमिति क्व चित् पुस्तके ।

सर्वात्मा चात्मविद्या च संसारभयनाशिनी ।
सर्वदुःखान्तकरणी सर्वपापप्रणाशनी ॥
एता विद्याः समाख्याता बहुभेदोपभेदजाः ।
कलाविद्यास्तथा चान्याः शिल्पविद्यास्तथा पराः ॥

शिल्पविद्या प्रतिमादिनिर्माणशास्त्रम् ।

सर्वा एता महाभागाः सर्वाः सर्वार्थसाधकाः ।
एताश्च तारतम्येन विशिष्टफलसाधिकाः ॥
आत्मविद्या प्रधाना तु तथाऽऽयुर्वेदसंहिता ।
धर्माधर्मप्रणयिनी कलाः शिल्पार्थसाधिकाः ॥
शस्यविद्या च वितता एता विद्या महाफलाः ।
धर्माधर्मप्रणयिनी धर्माधर्मप्रसाधिका ॥
ययैको जीवति प्राणी कयाऽपि किल कुत्र चित् ।
अप्रधानाऽपि सा विद्या कुलानां शतमुद्धरेत् ॥

अप्रधाना अवान्तरविद्या ।

याऽपि साऽप्यवबोधत्वाद्विद्या वै यत्र कुत्र चित् ।
प्रयास्यत्यक्षयाँल्लोकान् विधिना वाऽविधानतः ॥

अवबोधत्वात् अवबोधहेतुत्वात् । प्रयास्यतीत्यन्तर्भावितो णयर्थः । तेन प्रापयिष्यतीत्यर्थः ।

शिल्पविद्यां नरो दत्त्वा यान्ति वै ब्रह्मणोऽन्तिकम् ।
कलाविद्यां नरो दत्त्वा वैष्णवं लोकमाप्नुयात् ॥
कल्पमेकं न सन्देहः स्वर्गभोगसमन्वितः ।
शस्यविद्यां नरो दत्त्वा तृप्तिमान् कामसंयुतः ॥
प्रजापतिपुरं गच्छेन्नरकात् तारयेत् पितॄन् ।
आयुर्वेदं नरो दत्त्वा लोकान् प्राप्नोति निर्मलान् ॥

अश्विनोर्दिव्यकामाद्यान् दिव्यमन्वन्तरं नरः ।
तर्कविद्यां नरो दत्त्वा वारुणं लोकमाप्नुयात्* ॥
मीमांसां तु बुधे दत्त्वा शाक्रमिन्दुपुरे वसेत् ।
धर्मशास्त्रं नरो दत्त्वा स्वर्गलोके महीयते ॥
दशमन्वन्तरान् मर्त्त्यस्तारयेन्नरकात् पितॄन् ।
वेदविद्यां नरो दत्त्वा स्वर्गलोकत्रयं वसेत् ॥
आत्मविद्यां च यो दद्यात् तस्य सङ्ख्या न शक्यते ।
पुण्यस्य गदितुं सम्यगपि वर्षशतायुतैः ॥
एतावच्छक्यते वक्तुं यत् कल्पायुतमुत्तमम् ।
सत्यलोके वसेन्मर्त्त्यो यत्र ब्रह्मा वसेत् प्रभुः ॥
अप्येकं नीरुजीकृत्य जन्तुं यादृशतादृशम् ।
आयुर्वेदप्रभावेण किं न दत्तं भवेद्भुवि ॥
शस्यवेदप्रसादेन संपन्नाः शस्यशालयः ।
किं न नाम कृतं तत्र पुण्यं भवति शाश्वतम् ॥
मीमांसाशास्त्रमाहात्म्यं बुद्ध्वा वै वेदनिर्णयम् ।
किं न नाम शुभं दातुर्यज्ञकर्मप्रवर्त्तनात् ॥
आत्मविद्या च पौराणी धर्मशास्त्रात्मिका च या ।
एता विद्यास्त्रयीमुख्याः सर्वदानक्रियाफलैः ॥
धर्मशास्त्रं नरो बुद्ध्वा यत्किञ्चिद्धर्ममाश्रयेत् ।
तस्य धर्मं शतगुणं धर्मशास्त्रप्रदस्य च ॥
पुराणाख्यानविद्वांसः पितृदेवार्चने रताः ।
लोकान् सर्वान् कामपूर्णान् यान्ति सर्वशुभोदयान् ॥
पुराणविद्यादातारस्त्वनन्तफलभागिनः ।

---

* स्वर्गं कल्पत्रयमिति क्वचित् पाठः ।

आत्मविद्याप्रदातारो नरा धर्मसमाश्रयात् ॥
न पुनर्योनिनिरयं प्रविशन्ति बुधत्ययम् ।
उत्तीर्णाः सर्वपापेभ्यः सपुत्रपशुबान्धवाः ॥
मुच्यन्ते निरयैर्घोरैरसङ्ख्यैर्यातनात्मकैः ।

तथा ।

श्लोकं प्रहेलिकां गाथामन्यथा वा सुभाषितम् ।
दत्त्वा प्रीतिकरं याति लोकमप्सरसां शुभम् ॥

वाराहपुराणे ।

रामायणं भारतं च दत्त्वा स्वर्गे महीयते ।
पुराणं तर्कशास्त्रं च छन्दोऽलङ्कारलक्षणम् ॥
वेदमीमांसिकां दत्त्वा शिवधर्मं च वै नृप ।
सप्तद्वीपपृथिव्यां च राजराजो भवेत् तु सः ॥
पाणिनीयं निरुक्तादि वेदाङ्गं स्मृतयस्तथा ।
दत्त्वा ज्ञानमवाप्नोति वेदान्तं च विशेषतः ॥
नित्यं देयानि राजेन्द्र गावः पृथ्वी सरस्वती ।

इति विद्यादानप्रशंसा ।

अथ वेददानं तावन्निरूप्यते ।

आदित्यपुराणे ।

सर्वेषामेव दानानां ब्रह्मदानं विशिष्यते ।
कार्यं न गोमहीवासतिलकाञ्चनसर्पिषाम् ॥

ब्रह्मदानं वेददानम् ।

याज्ञवल्क्यः ।

सर्वधर्ममयं ब्रह्म प्रदानेभ्योऽधिकं यतः ।
तद्ददत् समवाप्नोति ब्रह्मलोकमविच्युतः ॥

## महाभारते ।

योऽ ब्रूयाच्चापि शिष्याय धर्म्यां ब्राह्मीं सरस्वतीम् ।
पृथिवीगोप्रदानाभ्यां स तुल्यं फलमश्नुते ॥

ब्राह्मीं वेदार्थानुगमाम् ।

## तथा ।

अधीत्यापि च यो वेदान् न्यायविद्भ्यः प्रयच्छति ।
गुरुकर्मप्रशस्तोऽयं सोऽपि स्वर्गे महीयते ॥

## विष्णुधर्मोत्तरे ।

वेददानादवाप्नोति सर्वयज्ञफलं नरः ।
उपवेदप्रदानेन गन्धर्वैः सह मोदते ॥
वेदाङ्गानां च दानेन शक्रलोकमवाप्नुयात् ।

## गारुडपुराणे ।

विद्यानां च परा विद्या ब्रह्मविद्या समीरिता ।
अतस्तद्दानतो राजन् सर्वदानफलं भवेत् ॥
आयुःसमस्तविद्यानां वेदविद्यामनुत्तमाम् ।
अतस्तद्दातुरस्त्येव लाभः स्वर्गापवर्गयोः ॥

## देवीपुराणे ।

वेद एव द्विजातीनां साधनं श्रेयसः परम् ।
अतः स्वाध्यापनाभ्यासात् परं ब्रह्माधिगच्छति ॥
तमेव शीलयेत् प्राज्ञः शिष्येभ्यस्तं प्रदापयेत् ।
तदभ्यासप्रदानाभ्यां तत् किं यन्नाधिगच्छति ॥
अङ्गोपाङ्गसमायुक्तं यो वेदं वेद कृत्स्नशः ।
न स लिप्यति पापेन दद्न्मोक्षमवाप्नुयात् ॥

तथा । मनुरुवाच ।

किं वेदरूपं मानं च उपाङ्गसङ्ख्याभेदतः ।
अङ्गानि चैव वेदानां तन्मे ब्रूहि सनातन ॥

ब्रह्मोवाच ।

ॐकारप्रभवा वेदा गायत्री वेदसम्भवा ।
षडङ्गास्ते समाख्याताः सहोपाङ्गास्तथैव च ॥
छन्दोलक्षणसंयुक्ता मातृकागर्भजाः स्मृताः ।
एक एव भवेद्वेदश्चतुर्वेदः पुनः कृतः ॥
शाखार्थमल्पयुक्तानां* ग्रहणायातिविस्तरात् ।
संविभक्ता मया वत्स ऋग्यजुःसामाथर्वकाः ॥
तत्र भेदास्तु ऋग्वेदे दश चैव प्रकीर्त्तिताः ।
आस्तयाः†साङ्ख्यचर्चाश्च आवकाश्चर्चकास्तथा ॥
आरणीया वक्रमावाः षट् क्रमाः षडनुक्रमाः ।
दण्डाश्चेति समासेन पुनरेकैव पारणा ॥
शाखाश्च त्रिविधा भूप शाकलायाष्क्रमाण्डुकाः ।
तेषामध्ययनं प्रोक्तं मण्डलानि च सप्ततिः ॥
चर्चानां परिसङ्ख्या तु चतुर्विंशच्छतानि च ।
ऋचां दशसहस्राणि ऋचां पञ्च शतानि च ॥
ऋचामशीतिः पादश्च एतत् पारणमुच्यते ।
ऋग्वेदे तु भवेत् सङ्ख्या यजुर्वेदस्य श्रूयताम् ॥
षडशीतिर्विभेदेन मया भिन्नाः शिवाज्ञया ।

---

* शाखार्थमल्पसत्त्वानामिति न· प्र· पु· पाठः ।

† च्यम्लया इति क्व चित् पाठः ।

दशधा *चरकास्तत्र करका हारिद्रवीयाः ॥
कठाः प्राच्यकठाश्चैव कपिष्ठलकठास्तथा ।
†नारायणीयाः श्वेताश्च श्वेताश्वतरमैत्रायणाः ॥
पुनः सप्त विभेदेन मैत्रायण्यः प्रकीर्त्तिताः ।
मानवा दुन्दुभा वाराहाश्छागेया हारिद्रवीयाः ॥
श्यामाः ‡श्यामायनीयाश्च तेषामध्ययनमुच्यते ।
अष्टादशसहस्राणि पाठा वेदविदोऽविदन् ॥
द्विगुणाः पदपारीयास्त्रिगुणाः क्रमपारगाः ।
षडङ्गानि यदाऽधीते स षडङ्गविदुच्यते ॥
शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्यौतिषम् ।
षडङ्गानि भवन्त्येतान्युपाङ्गानि शृणुष्व भोः ॥
प्रतिपदमनुपदं छन्दोभाषासमन्वितम् ।
मीमांसा न्यायतर्कश्च उपाङ्गाः परिकीर्त्तिताः ॥
परिशिष्टाश्च सङ्ख्याता अष्टादश शृणुष्व तान् ।
§यूपलक्षणं छागलक्षणं प्रतिष्ठानुवाकसङ्ख्याचरणव्यूहश्राद्धकल्प-

---

* चरकाणां द्वादश भेदाः चरकाः, आह्वरकाः, कठाः, प्राच्यकठाः कपिष्ठलकठाः, औपमन्यवाः, आष्टककठाः, चारायणीयाः, पारायणीयाः, वार्त्तान्तवेयाः, श्वेताश्वतराः (श्वेताश्वेततरा वा), मैत्रायणीयाः—इत्युपलभ्यते द्रष्टव्यो वाचस्पत्ये वेदशब्दः ।

† पारयणीयाः—इति न॰ प्र॰ पु॰ पा॰ ।

‡ छागेयाः, श्यामायनीयाः, इत्यत्र चैकेयः श्यामारणीया॰ इत्युपलभ्यते द्र॰ वाच॰ वेदशब्दः ।

§ उपज्योतिषम्, साङ्गलक्षणम्, प्रतिज्ञानवाक्यम्, परिसङ्ख्याचरणम् श्राद्धकल्पः, प्रवराध्यायः, शस्त्रम्, क्रतुः, सङ्ख्यानः, आगमः, यज्ञपार्श्वः, होत्रकम् (पारप्यानुहोत्रकं वा), पशवः, उक्थानि, कूर्मलक्षणम्—इति परिशिष्टाः द्र॰ वाच॰ वेदशब्दे ।

सूक्तानि परिषदमृग्यजुषमिष्टकापूरणं प्रवराध्यायोञ्छशास्त्रं क्रतुसङ्ख्या निगमाः यज्ञपार्श्वं होतृकम् ।

व्रतं च प्रसवोत्थानं कूर्मलक्षणसंयुतम् ।
कथिताः परिशिष्टास्तु द्व्यूनविंशतिसङ्ख्यया ॥
कठानां पुनर्यान्याहुश्चत्वारिंशच्चतुर्युतान् ।
प्राच्योदीच्या निरुह्याश्च वाजसनेयास्तु *पञ्च च ।
दश भेदविभिन्नाश्च द्रष्टव्या मुनिपुङ्गव ॥
जाबाला बौधेयाः काण्वा माध्यन्दिनाश्च शापेयाः ।
सुपायिनः कपालाख्याः पौण्ड्रवत्सावटिकाः ॥
परमारविकाः पराशरा ऋच्छ्या वैधायनीयाः ।
आयोध्या आयोधेयाश्च तेषामध्ययनानि च ॥
द्विसहस्रे शतन्यूने वेदे वाजसनेयके ।
ऋग्गणीयं प्रसङ्ख्यातस्ततोऽन्यानि यजूंषि च ॥
यतत्प्रमाणं यजुषां हि केवलम् ।
सखिलं सशुक्रियं परिसङ्ख्यातं ब्राह्मणम् ।
चतुर्गुणं तु जानीयात् तैत्तिरीया द्विधा पुनः ॥
†औचेयाः खाण्डिकेयाश्च खण्डिकाः पञ्चधा पुनः ।
‡कालेया बौधायनीया हिरण्यकेशास्तथैव च ॥
भारद्वाजापस्तम्बाश्च तेषां भेदाः प्रकीर्त्तिताः ।

---

* जाबालाः औधेयाः, काण्वाः माध्यन्दिनाः, शातातपीयाः, तापायनीयाः कापालाः, पौण्ड्रवत्साः, आवटिकाः, पामावटिकाः ( परमावटिका वा ), पाराशरीय वैनेयाः, औधेयाः, गालवाः, वैजवापाः, कात्यायनीयाः इति भेदाः द्र० वाच० वेदशब्दे

† औख्याः–इति वाचस्पत्ये ।

‡ आपस्तम्बी, बौधायनी. सत्याषाढी, हिरण्यकेशी, औधेयी–इति वाचस० ।

अध्ययनं सौतिकं चैव प्रवचनीयं तथाऽपरम् ॥
सामवेदस्तु विस्तीर्णः सहस्रभेदशः पुरा ।
अनध्यायेष्वधीयन्ते तदा इन्द्रेण धीमता ॥
वज्रेण निहताः शेषास्तान् वक्ष्ये शृणु सत्तम ।
राणायनीयाः कौथुमास्तत्र भेदान् पुनः शृणु ॥
राणायनीयाः सप्तैव सुग्राह्यास्तपतां वर ।
कालवेया महाकालवेया लाङ्गलवैद्युताः ॥
कौथुमानामपि सप्त असुरा वानरायणाः ।
प्रजालावैनभृत्याश्च परियोग्याः परिकायणाः ॥
अध्ययनमपि तेषां तु यथावत् कथितं शृणु ।
अष्टौ सामसहस्राणि सामानि च चतुर्दश ॥
अष्टौ शतानि नवतीः दश सवालखिल्यकाः ।
ससुपर्णाश्च प्रख्याश्च एतं सामगणं विदुः ॥
अथो अथर्ववेदस्य नव भेदा भवन्ति हि ।
*पिप्पलादा नर्मदाश्च भूतायनाः कातयस्तथा ॥
जज्वला ब्रह्मवेदाश्च शौनकी कुनखी तथा ।
वेदऋषिश्चौरविद्या तेषामध्ययनं शृणु ॥

पञ्चकल्पा भवन्ति ।

नक्षत्रकल्पो वैतानः संहिताविधिराङ्गिरसम् ।
शान्तिकल्पश्च अथर्वणो भवन्ति ह ॥
सर्वेषामेव वेदानामुपवेदान् शृणुष्व तान् ।
ऋग्वेदस्यायुर्वेदो यजुर्वेदे धनुस्तथा ॥

---

* पैप्पलाः, दान्ताः, प्रदान्ताः, स्नाताः, स्रोताः, ब्रह्मदावलाः, शौनकी, वेददर्शती, चरणविद्याः इति वाचस्प० ।

सामवेदस्य गान्धर्वं अर्थशास्त्राण्यथर्वणः ।
ऋग्वेदस्यात्रेयं गोत्रं सोमं देवं विदुर्बुधाः ॥
काश्यपं च यजुर्वेदं रुद्रदेवं तु तं विदुः ।
सामवेदोऽपि गोत्रेण भारद्वाजं पुरन्दरम् ॥
अधिदैवं विजानायात् वैतानं तु अथर्वणे ।
ब्रह्मदेवं विजानीयाद्रूपाण्यस्मत् शृणुध्व भोः ॥
ऋग्वेदः पद्मपत्राक्षः प्रलम्बजठरः शुचिः ।
भक्तग्रीवः कुञ्चितकेशश्मश्रुः प्रमाणेनापि वितस्तिः ॥
पञ्चराजतो मौक्तिकजोऽथ पूज्यो वरप्रदो* भक्तियुतो द्विजाय ।
यजुर्वेदः पिङ्गलाक्षः कृशमध्य†स्थूलगलकपोलस्ताम्रायतवर्णः ॥
कृष्णचरणः प्रसादेन पददीर्घत्वेन ।
चित्रे लिङ्गेऽथ वा पूज्यः सर्वकामानवाप्नुयात् ।
सामवेदो नित्यस्रग्वी सुव्रतः शुचिः ।
शुचिवासाः क्षमी दान्तश्च महादण्डी काचरणनयनः ।
आदित्यवर्णो वर्णेन षडरत्निमात्रः ।
ताम्रे वाऽथ मणौ देवः पूजितः शुभदो भवेत् ॥
अथर्ववेदस्तीक्ष्णदण्डः कामरूपी विश्वात्मा विकृतक्रूर ऊर्ध्वज्वालः ।
क्षुद्रकर्मा शास्त्रकृती स्थायी नीलोत्पलवर्णो वर्णेन स्वदारतुष्टः ।
परस्त्रीष्ववशः पद्मरागे वाऽथ रुद्राक्षे प्रपूजयेत् ।
सर्वकामानवाप्नोति अथर्वविहितानि च ॥
य एतं नामरूपं तु गोत्रवेदप्रमाणजम् ।
वर्णं वर्णं च यो विद्यात् स पुण्यफलभाग्भवेत् ॥

---

* वरप्रदः इति न॰ प्र॰ पु॰ पा॰ ।

† प्रकृगलकपोल इति न॰ प्र॰ पु॰ पा॰ ।

गारुडपुराणे ।

अथ दानविधिं वक्ष्ये रहस्यं परमं मतम् ।
यं विधाय नरो घोरान्निरयान्नोपसर्पति ॥
आम्नायरूपाणि विधाय सम्यक् हैमानि पूर्वोदितलक्षणानि ।
विशुद्धमानामणिभूषितानि ऋगादिवेदक्रमतो निवेश्य ॥

ऋग्वेदादिलक्षणं महाभूतघटदाने दर्शितम् ।

वासांसि देयानि यथाक्रमेण पीतानि शुक्लान्यथ लोहितानि ।
नीलानि चैवं कुसुमानि दत्त्वा संपूज्य गन्धाक्षतधूपदीपैः ॥
आमोदिमोदकयुतं घृतपायसं च
सक्षौद्रमन्नमयपूपघृतं क्रमेण ।
तेभ्यो निवेद्य प्रथितं विधिवत् प्रणम्य
सम्यक् प्रदक्षिणविधिं विदधीत विद्वान् ॥
तेषां पूजाविधिः कार्यो गायत्र्या धीमतां वरः ।
व्याहृत्य व्याहृतीः कुर्यादावाहनविसर्जने ॥
मन्त्रैरेतैस्ततः कुर्यादमीषामनुमन्त्रणम् ।
ऋग्वेद पद्मपत्राक्ष रक्ष रक्ष क्षिपाशुभम् ॥
शरणं त्वां प्रपन्नोऽस्मि देहि मे हितमद्भुतम् ।
यजुर्वेद नमस्तेऽस्तु लोकत्राणपरायणः ॥
त्वत्प्रसादेन मे क्षेमाः निखिलाः सन्तु सन्ततम् ।
सामवेद महाबाहो त्वं हि साक्षादधोक्षजः ॥
प्रसादसुमुखो भूत्वा कृपयाऽनुगृहाण माम् ।
अथर्वन् सर्वभूतानां त्वदायत्ते हिताहिते ॥
शान्तिं कुरुष्व देवेश पुष्टिमिष्टां प्रयच्छत ।
इति संप्रार्थ्य देवेशान् विप्रेभ्यः प्रतिपादयेत् ॥

प्रदद्यादेकमेकस्मिन् सुवर्णत्रिपलान्वितम् ।
दद्यादेकपलोपेतमेकैकमिह दुर्बलः ॥
अथ स्वशक्तितो वाऽपि दानमेषां विधीयते ।
एतदेव प्रमाणं स्यात् तेषां मूर्त्तिविनिर्मितौ ॥
अनधीतवतो वेदान् वेददानविधिस्त्वयम् ।
सदाध्ययनयुक्तस्य शिष्याध्यापकमेव हि ॥
स्वयं शुचिः शुचीन् विप्रान् प्रातःस्नातो यतेन्द्रियः ।
दर्भानादाय पाणौ तु पाठयेत् तान् तथाविधान् ॥
अनध्यायान् परिहरन् नीचानश्रावयन्नपि ।
एवं विधानतो यस्तु ऋचमेकां प्रयच्छति ॥
त्रिर्वित्तपूर्णसंपूर्णा तेन दत्ता मही भवेत् ।
न तत् कल्पसहस्रेण गदितुं शक्यते फलम् ॥
यद्वेददानादाप्नोति स्वल्पादपि महामते ।
यावन्ति वेदगीतानि पुण्यवेदव्रतानि च ॥
तावन्ति वेददानेन प्राप्नुयाद्भक्तिभावितः ।
उपाध्यायस्य यो वृत्तिं दत्त्वाऽध्यापयते जनम् ॥
किं न दत्तं भवेत् तेन धर्मकामार्थदर्शितम् ।
छात्राणां भोजनाभ्यङ्गं वस्त्रं भिक्षामथापि वा ॥
दत्त्वा प्राप्नोति पुरुषः सर्वकामान् न संशयः ।
विवेकी जीवितं दीर्घं धर्मकामार्थमाप्नुयात् ॥
सर्वमेव भवेद्दत्तं छात्राणां भोजने कृते ।

वह्निपुराणे ।

प्रातरुत्थाय यो वेदान् वेदाङ्गमपि पाठयेत् ।
पृथिवीदानतुल्यं स्यात् फलं तस्य नृपोत्तम ॥

यमः ।

य इमां पृथिवीं दद्यात् सर्वरत्नोपशोभिताम् ।
दद्याच्छास्त्रं च विप्राणां तद्धचैतानि च तत्समम् ॥

तत्सर्वरत्नोपशोभितं पृथिवीदानम् । एतानि पूर्वोक्तानि दानानि तदुभयं विद्यादानसममित्यर्थः ।

शास्त्रं चक्षुर्हि लोकानां स्वर्गमार्गप्रकाशकम् ।
शास्त्रेण धार्यते नूनं त्रैलोक्यं सचराचरम् ॥
यो वृत्तिं पठमानानां करोत्यनुदिनं नृप ।
स यज्ञफलमादत्ते दानाच्छादनभोजनैः ॥

भविष्यत्पुराणे ।

अपुत्रो लभते पुत्रान् निर्धनो धनमाप्नुयात् ।
अविद्वान् विद्यां प्राप्नोति दुःखी दुःखात् प्रमुच्यते ॥
सदाऽध्ययनयुक्तस्तु परे ब्रह्मणि लीयते ।

इति वेददानविधिः ।

अथ शास्त्रदानं तत्र नन्दिपुराणे ।

शास्त्रे यस्माज्जगत् सर्वं संश्रितं च शुभाशुभम् ।
तस्माच्छास्त्रं प्रयत्नेन दातव्यं शुभकर्मणे ॥
योजनानां सहस्रेऽपि वर्षकोटिशतेन च ।
सद्यस्तिरोहितं वस्तु शास्त्रं दर्शयितुं क्षमम् ॥
अतः शास्त्रात् परं नास्ति त्रिषु लोकेषु किञ्चन ।
संसारनिविडध्वान्ततरणिस्तत् प्रकीर्त्तितम् ॥
दद्यादेतत् प्रयोगेण नरः सन्ततमादृतः ।
किं न दत्तं भवेत् तेन शास्त्ररत्नं ददाति यः ॥

तत्र सकलशास्त्रप्रधानतया धर्मशास्त्रप्रदानमेव तावदुच्यते । नन्दिपुराणे ।

श्रुतिः स्मृतिश्च विप्राणां चक्षुषी द्वे प्रकीर्त्तिते ।
काणस्तत्रैकया हीनो द्वाभ्यामन्धः प्रकीर्त्तितः ॥

तथा ।

धर्मशास्त्रं नरो दत्त्वा नाकपृष्ठे महीयते ।
दशमन्वन्तरान् मर्त्यस्तारयेन्नरकात् पितॄन् ॥
आत्मविद्या च पौराणी धर्मशास्त्रात्मिका च या ।
तिस्रो विद्या इमा मुख्याः सर्वदानक्रियाफले ॥
धर्मशास्त्रं नरो बुद्ध्वा यत् किञ्चिद्धर्ममाश्रयेत् ।
तस्य धर्मः शतगुणो धर्मशास्त्रप्रदस्य च ॥
अतः सदा बुधैर्ज्ञेयं* धर्मशास्त्रं विचक्षणैः ।
न तस्य पुण्यसङ्ख्यानं ब्रह्माऽपि गदितुं क्षमः ॥

अग्निपुराणे ।

कपिलानां सहस्रेण सम्यग्दत्तेन यत् फलम् ।
तद्राजन् सकलं लेभे धर्मशास्त्रप्रदायकः ॥

तत्र धर्मशास्त्रप्रणेतृकथनद्वारा तदनुक्रममाहतुः शङ्खलिखितौ ।

स्मृतयो धर्मशास्त्राणि तेषां प्रणेतारो मनुर्विष्णुर्यमदक्षाङ्गिरोऽत्रि-बृहस्पत्युशनआपस्तम्बवशिष्ठकात्यायनपराशरव्यासशङ्खलिखितसंवर्त्त-गौतमशातातपहारीतयाज्ञवल्क्यप्रचेतसादयः ।

आदिशब्दाच्च बुधदेवलसोमप्रजापतिवृद्धशातातपपैठीनसिच्छागलेयच्यवनमरीचिवत्सपारस्करपुलस्त्यपुलहक्रतु–ऋष्यशृङ्गात्रेयाणां ग्रहणम् ।

---

* देयमिति वा पाठः ।

आह पैठीनसिः ।

तेषां मन्वङ्गिरोव्यासगौतमा लिखितो यमः ।
वशिष्ठदक्षसंवर्त्तशातातपपराशराः ॥
विष्ण्वापस्तम्बहारीताः शङ्खः कात्यायनो गुरुः ।
प्रचेता नारदो योगी बौधायनपितामहौ ॥
सुमन्तुः काश्यपो बभ्रुः पैठीनो व्याघ्र एव च ।
सत्यव्रतो भरद्वाजो गार्ग्यः कार्ष्णाजिनिस्तथा ॥
जावालिर्जमदग्निश्च लौगाक्षिर्ब्रह्मसम्भवः ।
इति धर्मप्रणेतारः षड्त्रिंशदृषयः स्मृताः ॥

भविष्यत्पुराणे ।

षड्त्रिंशदतिरिक्ताः स्मृतयः सन्तीति दर्शितम् ।
अष्टादशपुराणेषु यानि वाक्यानि पुत्रक ॥
तान्यालोच्य महावाहो तथा स्मृत्यन्तरेषु च ।
मन्वादिस्मृतयो याश्च षड्त्रिंशत् परिकीर्त्तिताः ॥
तासां वाक्यानि क्रमशः समालोच्य ब्रवीमि ते—इति ।

आह मनुः ।

विष्णुः पराशरो दक्षः संवर्त्तव्यासहारिताः ।
शातातपो वशिष्ठश्च यमापस्तम्बगौतमाः ॥
देवलः शङ्खलिखितौ भरद्वाजोशनोऽत्रयः ।
शौनको याज्ञवल्क्यश्च दशाष्टौ स्मृतिकारिणः ॥

तथा ।

भार्गवीनारदीया च वार्हस्पत्याङ्गिरस्यपि ।
स्वायम्भुवस्य शास्त्रस्य चतस्रः संहिता मताः ॥

अङ्गिराः ।

जावालिर्नाचिकेतश्च स्कन्दो लौगाक्षिकश्यपौ ।
व्यासः सनत्कुमारश्च शरभूर्जनकस्तथा ॥
व्याघ्रः कात्यायनश्चैव जातूकर्ण्यः कपिञ्जलः ।
बौधायनः कणादश्च विश्वामित्रस्तथैव च ॥
उपस्मृतय इत्येताः प्रवदन्ति मनीषिणः ।

यमः ।

एतैर्यानि प्रणीतानि धर्मशास्त्राणि वै पुरा ।
तान्येवातिप्रमाणानि न हन्तव्यानि हेतुभिः ॥

स्कन्दपुराणे ।

स्मृतयो धर्ममूलं हि धर्मः सर्वार्थसाधनम् ।
अतः स्मृतिषु दत्तासु सर्वदानफलं लभेत् ॥
एकमेव समुद्धृत्य प्राणिनं दुःखसागरात् ।
अनन्तफलमाप्नोति किं पुनर्ज्ञानदो बहून् ॥
किमतः स हि धर्मोऽस्ति किं वा ज्ञानं तथाविधम् ।
अन्यद्वा तत् किमस्तीह यद्वा स्मृतिषु दृश्यते ॥
अतस्तासु प्रदत्तासु ज्ञानवानभिजायते ।
पारं प्राप्य च शास्त्राणां ब्रह्मलोके महीयते ॥

इति स्मृतिदानम् ।

अथ पुराणदानं तत्र नारदीये ।

वेदाः प्रतिष्ठिता देवि पुराणैर्नात्र संशयः ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥
इतिहासपुराणैश्च कृतोऽयं निश्चलः पुरा ।
यत्र दृष्टं हि वेदेषु तद्दृष्टं स्मृतिभिः किल ॥

उभाभ्यां यत्र दृष्टं हि तत् पुराणेषु गीयते ।

मत्स्यपुराणे ।

पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् ।
अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ॥
पुराणमेकमेवासीदस्मिन् कल्पान्तरेऽनघ ।
त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ॥
निर्दग्धेषु च लोकेषु वाजिरूपेण वै मया ।
अङ्गानि चतुरो वेदाः पुराणन्यायविस्तराः ॥
मीमांसा धर्मशास्त्राणि परिगृह्यात्मसात् कृतम् ।
मत्स्यरूपेण च पुनः कल्पादावुदकार्णवे ॥
अशेषमेतत् कथितमुदकान्तर्गतेन च ।
श्रुत्वा जगाद च मुनीन् प्रतिवेदश्चतुर्मुखः ॥
प्रवृत्तिः सर्वशास्त्राणां पुराणस्याभवत् ततः ।
कालेन ग्रहणं दृष्ट्वा पुराणस्य ततो नृप ॥
व्यासरूपमहं कृत्वा संहरामि युगे युगे* ।
चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा ॥
तदष्टादशधा कृत्वा भूर्लोकेऽस्मिन् प्रभाष्यते ।
अद्यापि देवलोके तत् शतकोटिप्रविस्तरम् ॥
तदर्थोऽत्र† चतुर्लक्षं संक्षेपेण निवेदितः‡ ।
पुराणानि दशाष्टौ च साम्प्रतं तदिहोच्यते ॥
नामतस्तानि वक्ष्यामि शृणुध्वमृषिसत्तमाः ।

* संभवामि युगे युगे इति क्व चित् पाठः ।
† यद्यथात्रेति क्व चित् पाठः ।
‡ निर्वर्णित इति न० प्र० पु० पाठः ।

वाराहपुराणे ।

ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ।
तथा-न्यन्नारदीयं च मार्कण्डेयं च सप्तमम् ॥
आग्नेयमष्टमं प्रोक्तं भविष्यन्नवमं तथा ।
दशमं ब्रह्मवैवर्त्तं लिङ्गमेकादशं तथा ॥
वाराहं द्वादशं प्रोक्तं स्कान्दं चात्र त्रयोदशम् ।
चतुर्दशं वामनं च कौर्मं ऽञ्चदशं तथा ॥
मात्स्यं च गारुडं चैव ब्रह्माण्डमष्टादशं तथा* ।

कालिकापुराणे ।

शैवं यद्वायुना प्रोक्तं वैरिञ्चिं वैष्णवं तथा ।
यदिदं कालिकाख्यं च मूलं भागवतं स्मृतम् ॥
सौरं च नारदीयं च मार्कण्डेयं च वह्निजम् ।
वामनं कौर्मं मात्स्यं च सप्तदशं च गारुडम् ॥
ब्रह्माण्डमष्टादशं ज्ञेयं पुराणं च न संशयः ।

सौरपुराणे ।

यदुक्तं भानुना पूर्वं पुत्राय मनवे द्विजाः ।
तदहं संप्रवक्ष्यामि शृणुध्वं वदतो मम ॥
सर्गश्च प्रतिसर्गश्च वंशमन्वन्तराणि च ।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥
यत् तत्रोपपुराणानां खिलत्वाल्लक्षणं स्मृतम् ।
ब्राह्मं पुराणं तत्राद्यं संहिताभ्यां विभूषितम् ॥
श्लोकानां दशसाहस्रं नानापुण्यकथायुतम् ।

---

* ब्रह्माण्डं च ततः परमिति क्वचित् पाठः ।

पाद्मं द्वितीयं कथितं तृतीयं वैष्णवं स्मृतम् ॥
चतुर्थं वायुना प्रोक्तं वायवीयमिति स्मृतम् ।
ततो भागद्वयं प्रोक्तं* भागद्वयविभूषितम् ॥
चतुर्भिः पर्वभिः प्रोक्तं भविष्यं तदनन्तरम् ।
मार्कण्डेयमथाग्नेयं नारदीयमतः परम् ॥
दशमं ब्रह्मवैवर्त्तं लिङ्गमेकादशं स्मृतम् ।
भागद्वयेन लिङ्गं च ततो वाराहमुत्तमम् ॥
संयुक्तमष्टभिः खण्डः स्कान्दं चैवात्र विस्तरम् ।
ततस्तु वामनं कौर्मं भागद्वयविराजितम् ॥
मात्स्यं च गारुडं प्रोक्तं ब्रह्माण्डं च ततः परम् ।
भागद्वयेन कथितं ब्रह्माण्डमभिसंज्ञितम् ॥
खिलान्युपपुराणानि यानि चोक्तानि सूरिभिः ।
इदं ब्रह्मपुराणस्य खिलं सौरमनुत्तमम् ॥
संहिताद्वयसंयुक्तं पुण्यं शिवकथाश्रयम् ।
आद्या सनत्कुमारोक्ता द्वितीया सूर्यभाषिता ॥

## कूर्मपुराणे ।

अन्यान्युपपुराणानि मुनिभिः कथितानि तु ।
आद्यं सनत्कुमारोक्तं नारसिंहमतः परम् ॥
तृतीयं नारदमुद्दिष्टं कुमारेण तु भाषितम् ।
चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम् ॥
दुर्वाससोक्तमाश्चर्यं नारदोक्तमतः परम् ।
कापिलं मानवं चैव तथैवोशनसेरितम् ॥

* ततो भागवतं प्रोक्तमिति पुस्तकान्तरे पाठः ।

ब्रह्माण्डं वारुणं चाथ कालिकाह्वयमेव च ।
माहेश्वरं तथा साम्बं सौरं सर्वार्थसञ्चयम् ॥
पराशरोक्तं प्रवरं तथा भागवतं* द्वयम् ।
इदमष्टादशं प्रोक्तं पुराणं कौर्मसंज्ञितम् ॥
चतुर्धा संस्थितं पुण्यं संहितानां प्रभेदतः ।

मत्स्यपुराणे ।

पाद्मे पुराणे या प्रोक्ता नरसिंहोपवर्णना ।
तत्राष्टादशसाहस्रं नारसिंहमिहोच्यते ॥
नन्दाया यत्र माहात्म्यं कार्त्तिकेयेन वर्ण्यते ।
नन्दीपुराणं तल्लोकैर्व्याख्यातमिति कीर्त्त्यते ॥
यत्र साम्बं पुरस्कृत्य भविष्यति कथानकम् ।
प्रोच्यते तत् पुनर्लोके साम्बमेव मुनिव्रताः ॥
एवमादित्यसंज्ञं च तत्रैव परिपठ्यते ।
अष्टादशभ्यस्तु पृथक् पुराणं यत् प्रदृश्यते ॥
विजानीध्वं† द्विजश्रेष्ठास्तदेतेभ्यो विनिर्मितम् ।
पञ्चाङ्गवत् पुराणं स्यादाख्यानमितरत् स्मृतम् ॥
सर्गश्च प्रतिसर्गश्च वंशमन्वन्तराणि च ।
वंशानुचरितं चेति पुराणं पञ्चलक्षणम् ॥
ब्रह्मविष्ण्वर्करुद्राणां माहात्म्यं भुवनस्य च ।
ससंहारं प्रदृश्येत पुराणं पञ्चवर्णता ॥
धर्मश्चार्थश्च कामश्च मोक्षश्च परिकीर्त्त्यते ।
सर्वेष्वपि पुराणेषु तद्विरुद्धे च यत् फलम् ॥

---

* विनिर्गतमिति क्व चित् पाठः ।

† भागवताह्वयम्–इति न॰ प्र॰ पु॰ पाठः ।

सात्त्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः ।
राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः ॥
तद्वदग्नेश्च माहात्म्यं तामसेषु शिवस्य च ।
संकीर्णेषु सरस्वत्याः पितॄणां च निगद्यते ॥

तथा ।

अष्टादश पुराणानि कृत्वा सत्यवतीसुतः ।
भारताख्यानमखिलं चक्रे तदुपबृंहितम् ॥
लक्षणैकेन तत् प्रोक्तं वेदार्थपरिबृंहितम् ।
वाल्मीकिनाऽपि यत् प्रोक्तं* रामायणाख्यमुत्तमम् ॥
ब्रह्मणाऽभिहितं यच्च शतकोटिप्रविस्तरात् ।
आहृत्य नारदेनैव वाल्मीकाय पुनः पुनः ॥
वाल्मीकिना च लोकेषु धर्मकामार्थसाधनम् ।
एवं सपादाः पञ्चैते लक्ष्यास्तेषु प्रकीर्त्तिताः ॥

मत्स्यपुराणे ऋषय ऊचुः ।

पुराणसङ्ख्यामाचक्ष्व सूत विस्तरतः क्रमात् ।
दानं धर्ममशेषं च यथावदनुपूर्वशः ॥

सूत उवाच ।

इममेव पुरा प्रश्नं नोदितः पुरुषोत्तमः ।
यदुवाच स विश्वात्मा मुनयस्तन्निबोधत ॥
पुराणानि दशाष्टौ च साम्प्रतं तदिहोच्यते ।
नामतस्तानि वक्ष्यामि शृणुध्वमृषिसत्तमाः ॥
ब्रह्मणाऽभिहितं पूर्वं यावन्मात्रं मरीचये ।
ब्राह्मं तद्दशसाहस्रं पुराणं परिकीर्त्यते ॥

---

* रामोपाख्यानमुत्तमम्—इति· न· प्र· पु· पाठः ।

लिखित्वा तच्च यो दद्याज्जलधेनुसमन्वितम् ।
वैशाख्यां पौर्णमास्यां तु ब्रह्मलोके महीयते ॥
एतदेव यदा पद्ममभूद्धैरण्मयं जगत् ।
तद्वृत्तान्ताश्रयं तद्वत् पाद्ममित्युच्यते बुधैः ॥
पाद्मं तत् पञ्चपञ्चाशत्साहस्राणीह पठ्यते ।
तत् पुराणं च यो दद्यात् सुवर्णकमलान्वितम् ॥
ज्यैष्ठे मासि तिलैर्युक्तं सोऽश्वमेधफलं लभेत् ।
वाराहकल्पवृत्तान्तमधिकृत्य पराशरः ॥
यत्राह धर्मानखिलाँस्तद्युक्तं वैष्णवं विदुः ।
तदाषाढे च यो दद्याद्घृतधेनुसमन्वितम् ॥
पौर्णमास्यां विपूतात्मा स पदं याति वारुणम् ।
त्रयोविंशतिसाहस्रं तत् पुराणं विदुर्बुधाः ॥
श्वेतकल्पप्रसङ्गेन धर्मान् वायुरिहाब्रवीत् ।
यत्र तद्वायवीयं स्याद्रुद्रमाहात्म्यसंयुतम् ॥
चतुर्विंशत्सहस्राणि पुराणं तदिहोच्यते ।
श्रावण्यां श्रावणे मासि गुडधेनुसमन्वितम् ॥
यो दद्याद्धिसंयुक्तं ब्राह्मणाय कुटुम्बिने ।
शिवलोके स पूतात्मा कल्पमेकं वसेन्नरः ॥
यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः ।
वृत्रासुरवधोपेतं तद्भागवतमुच्यते ॥
सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः ।
तद्वृत्तान्तोद्भवं लोके तद्भागवतमुच्यते ॥
लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम् ।
पौर्णमास्यां प्रौष्ठपद्यां स याति परमं पदम् ॥

अष्टादशसहस्राणि पुराणं तत् प्रकीर्त्तितम् ।
यत्राह नारदो धर्मान् बृहत्कल्पाश्रितांस्त्विह ॥
पञ्चविंशत्सहस्राणि नारदीयं तदुच्यते ।
तदिदं पञ्चदश्यां तु यो दद्याद्धेमसंयुतम् ॥
उत्तमां सिद्धिमाप्नोति पुनरावृत्तिदुर्लभम् ।
यत्राधिकृत्य शकुनीन् धर्माधर्मविचारणम् ॥
पुराणं नवसाहस्रं मार्कण्डेयमिहोच्यते ।
परिलिख्य च यो दद्यात् सौवर्णकरिसंयुतम् ॥
कार्त्तिक्यां पौण्डरीकस्य यज्ञस्य फलभाग्भवेत् ।
यत् तदीशानकल्पस्य वृत्तान्तमधिकृत्य च ॥
वशिष्ठायाग्निना प्रोक्तमाग्नेयं तत् प्रचक्षते ।
लिखापयित्वा यो दद्याद्धेमपद्मसमन्वितम्* ॥
मार्गशीर्षे विधानेन तिलधेन्वाऽन्वितं तथा ।
एतत् षोडशसाहस्रं सर्वक्रतुफलप्रदम् ॥
यत्राधिकृत्य माहात्म्यमादित्यस्य चतुर्मुखः ।
अघोरकल्पवृत्तान्तप्रसङ्गेन जगत्पतिः ॥
नवमे कथयामास भूतग्रामस्य लक्षणम् ।
चतुर्दशसहस्राणि तथा पञ्चशतानि च ॥
भविष्यचरितप्रायं भविष्यत् तदिहोच्यते ।
तत् पौषे मासि यो दद्यात् पौर्णमास्यां विमत्सरः ॥
गुडकुम्भसमायुक्तमग्निष्टोमफलं लभेत् ।
रथन्तरस्य कल्पस्य वृत्तान्तमधिकृत्य च ॥
सावर्णिना नारदाय कृष्णमाहात्म्यसंयुतम् ।

---

* हेमशृङ्गसमन्वितमिति क्व चित् पाठः ।

यत्र ब्रह्मवराहस्य चरितं वर्ण्यते मुहुः ॥
तदष्टादशसाहस्रं ब्रह्मवैवर्त्तमुच्यते ।
पुराणं ब्रह्मवैवर्त्तं यो दद्यान्माघमासि च ॥
पौर्णमास्यां सभवनं ब्रह्मलोके महीयते ।
यत्राग्निलिङ्गमध्यस्थः प्राह देवीं महेश्वरः ॥
धर्मार्थकाममोक्षार्थमाग्नेयमधिकृत्य च ।
कल्पं तल्लैङ्गमित्युक्तं पुराणं ब्रह्मणा स्वयम् ॥
तदेकादशसाहस्रं फाल्गुन्यां यः प्रयच्छति ।
तिलधेनुसमायुक्तं स याति शिवसात्मताम् ॥
महावराहस्य पुनर्माहात्म्यमधिकृत्य च ।
मानवस्य प्रसङ्गेन कल्पस्य मुनिसत्तम ॥
चतुर्विंशत्सहस्राणि तत् पुराणमिहोच्यते ।
विष्णुनाऽभिहितं क्षोण्यै तद्वाराहमिहोच्यते ॥
काञ्चनं गरुडं कृत्वा तिलधेनुसमन्वितम् ।
पौर्णमास्यां मधौ दत्त्वा ब्राह्मणाय कुटुम्बिने ॥
वराहस्य प्रसादेन* पदमाप्नोति वैष्णवम् ।
यत्र माहेश्वरान् धर्मानधिकृत्य च षण्मुखः ॥
कल्पे तत्पुरुषे वृत्ते चरितैरुपबृंहितम् ।
स्कान्दं नाम पुराणं तदेकाशीतिर्निगद्यते ॥
सहस्राणि शतं चैकमिति मर्त्येषु पठ्यते ।
परिलिख्य च यो दद्याद्धेमशूलसमन्वितम् ॥
शैवं च पदमाप्नोति मकरोपगमे रवेः ।
त्रिविक्रमस्य माहात्म्यमधिकृत्य चतुर्मुखः ॥

---

* प्रदानेनेति क्वचित् पाठः ।

त्रिवर्गमभ्यधात् तत्र वामनं परिकीर्त्तितम् ।
पुराणं दशसाहस्रं कूर्मकल्पानुगं शिवम् ॥
यच्छरद्विषुवे दद्याद्वैष्णवं यात्यसौ पदम् ।
यत्र धर्मार्थकामानां मोक्षस्य च रसातले ॥
माहात्म्यं कथयामास कूर्मरूपी जनार्दनः ।
इन्द्रद्युम्नप्रसङ्गेन ऋषीणां शक्रसन्निधौ ॥
सप्तदशसहस्राणि लक्ष्मीकल्पानुषङ्गिकम् ।
यो दद्यादयने कुम्भं हेमकूर्मसमन्वितम् ॥
गोसहस्रप्रदानस्य स फलं प्राप्नुयान्नरः ।
श्रुतीनां यत्र कल्पादौ प्रवृत्त्यर्थं जनार्दनः ॥
मत्स्यरूपी च मनवे नरसिंहोपवर्णनम् ।
अधिकृत्याब्रवीत् सप्तकल्पवृत्तं मुनिव्रताः ॥
तन्माहात्म्यमिति जानीध्वं सहस्राणि चतुर्दश ।
विषुवे हेममत्स्येन धेन्वा चैव समन्वितम् ॥
यो दद्यात् पृथिवी तेन दत्ता भवति वाऽखिला ।
यदा च गारुडे कल्पे विश्वाण्डाद्गरुडोद्भवम् ॥
अधिकृत्याब्रवीत् कृष्णो गारुडं तदिहोच्यते ।
तदष्टादश चैकं च सहस्राणीह पठ्यते ॥
सौवर्णहंसमिथुनसंयुक्तं विषुवे नरः ।
यो ददाति परां सिद्धिमाप्नोति शिवसन्निधिम् ॥
ब्रह्मा ब्रह्माण्डमाहात्म्यमधिकृत्याब्रवीत् पुनः ।
तच्च द्वादशसाहस्रं ब्रह्माण्डं द्विशताधिकम् ॥
भविष्याणां च कल्पानां श्रूयते यत्र विस्तरः ।
तद्ब्रह्माण्डपुराणं तु ब्रह्मणा समुदाहृतम् ॥

यो दद्याच्च व्यतीपाते पञ्चोर्णयुगसंयुतम् ।
राजसूयसहस्रस्य फलमाप्नोति मानवः ॥
हेमधेन्वा युतं तच्च ब्रह्मलोकफलप्रदम् ।

सौरपुराणे तदेव पुराणमधिकृत्याह ।

इयं पुण्यतमा ख्याता संहिता पापनाशिनी ।
वैवस्वताय मनवे कथिता रविणा पुरा ॥
दानमस्य पुराणस्य दानानामुत्तमं द्विजाः ।
यो दद्याच्छिवभक्ताय ब्राह्मणाय तपस्विने ॥
यानि दानानि लोकेषु प्रसिद्धानि द्विजोत्तमाः ।
सर्वेषां फलमाप्नोति चतुर्दश्यां न संशयः ॥
अन्यान्युपपुराणानि सहिरण्यानि पर्वणि ।
लिखित्वा यः प्रयच्छेत् तु स विद्यापारगो भवेत् ॥
शिवधर्मादिशास्त्राणि यः प्रयच्छति पुण्यधीः ।
सोऽनन्तफलमाप्नोति शिवधर्मप्रकाशनात् ॥

ब्रह्मपुराणे ।

धर्मार्थकाममोक्षाणां सारं भारतमुच्यते ।
तदेकस्य प्रदानेन वेदशास्त्रप्रदो भवेत् ॥
रामायणं लिखित्वा तु यः समग्रं प्रयच्छति ।
तस्य प्रसन्ना भवति पद्यबन्धैः सरस्वती ॥

वह्निपुराणे ।

पुराणं भारतं वाऽपि रामायणमथापि वा ।
दत्त्वा यत् फलमाप्नोति न तत् सर्वैर्महामखैः ॥

कूर्मपुराणे तदेव पुराणमधिकृत्याह ।

ब्राह्मी पौराणिकी चेयं संहिता पापनाशिनी ।

लिखित्वेमां च यो दद्याद्वैशाखे मासि सुव्रत ॥
विप्राय वेदविदुषे तस्य पुण्यं निबोधत ।
सर्वपापविनिर्मुक्तः सर्वैश्वर्यसमन्वितः ॥
भुक्त्वा तु विपुलान् भोगान् विद्यावान् धनवान् भवेत् ।

इति पुराणदानविधिः ।

## अथ पुराणश्रवणदानम् ।

## तत्र महाभारते ।

अतः परं प्रवक्ष्यामि यानि देयानि भारत ।
वाच्यमाने तु विप्रेभ्यो राजन् पर्वणि पर्वणि ॥
स्वस्तिवाच्यं विधायादौ ततः कार्यं प्रवर्त्तते ।
समाप्ते पर्वणि ततः स्वशक्त्या तर्पयेद्द्विजान् ॥
आदौ तु वाचकं पूज्य रसगन्धसमन्वितम् ।
विधिवद्भोजयेद्राजन् मधुपायसमुत्तमम् ॥
ततो मूलफलप्रायं पायसं मधुसर्पिषी ।
आस्तिके भोजयेद्राजन् दद्याच्चैव गुडोदनम् ॥
अथ धूपैश्च पूपैश्च मोदकैश्च समन्वितम् ।
सभापर्वणि राजेन्द्र हविष्यं भोजयेद्द्विजान् ॥
आरण्यकैर्मूलफलस्तर्पयेच्च द्विजोत्तमान् ।
आरण्यपर्वण्यासाद्य जलकुम्भान् प्रदापयेत् ॥
तर्पणानि च मुख्यानि धान्यमूलफलानि च ।
सर्वकामगुणोपेतो विप्रेभ्योऽन्नं प्रदापयेत् ॥
विराटपर्वणि तथा वासांसि विविधानि च ।
उद्योगे भरतश्रेष्ठ सर्वकामसमन्वितः ॥
भोजनं भोजयेद्विप्रान् गन्धमाल्यैरलङ्कृतान् ।

भीष्मपर्वणि राजेन्द्र दत्त्वा पानमनुत्तमम् ॥
ततः सर्वगुणोपेतमन्नं दद्यात् सुसंस्कृतम् ।
द्रोणपर्वणि विप्रेभ्यो भोजनं परमार्जितम् ॥
शराश्च देया राजेन्द्र चापान्यसिवरास्तथा ।
कर्णपर्वण्यपि तथा भोजनं सार्वकामिकम् ॥
विप्रेभ्यः संस्कृतं सम्यगूदद्यात् संयतमानसः ।
शल्यपर्वणि राजेन्द्र मोदकैः सगुडोदनैः ॥
सपूपैस्तर्पणैश्चैव सर्वमन्नं प्रदापयेत् ।
गदापर्वण्यपि तथा मुद्गमिश्रं प्रदापयेत् ॥
स्त्रीपर्वणि तथा रत्नैस्तर्पयेद्विधिवद्द्विजान् ।
कृतोदनं पुरस्तात् तु पेषीके दापयेत् पुनः ॥
ततः सर्वगुणोपेतमन्नं दद्यात् सुसंस्कृतम् ।
शान्तिपर्वणि च तथा हविष्यं भोजयेद्द्विजान् ॥
आश्वमेधिकमासाद्य भोजनं सार्वकामिकम् ।
तथाऽऽश्रमनिवासे तु हविषा भोजयेद्द्विजान् ॥
मौशले सार्वगुणिकं गन्धमाल्यानुलेपनम् ।
हरिवंशे तथा पार्थ पायसं चारुभोजनम् ॥
पारणे पारणे राजन् यथावद्भरतर्षभ ।
समाप्य सर्वां प्रयतः संहितां शास्त्रकोविदः ॥
शुभे देशे निवेश्याथ क्षौमवस्त्रादिसंवृतम् ।
शुक्लाम्बरधरस्तत्र शुचिर्भूत्वा स्वलङ्कृतः ॥
अर्चयेत् तु यथान्यायं गन्धमाल्यैः पृथक् पृथक् ।
संहितापुस्तकान्यारात् प्रयतः सुसमाहितः ॥
भक्ष्यैर्भोज्यैश्च पेयैश्च कौतुकैर्विविधैः शुभैः ।

हिरण्यं च सुवर्णं च दक्षिणां तत्र दापयेत् ॥
देवताः कीर्त्तयेत् सर्वा नरनारायणौ तथा ।
ततो गन्धैश्च माल्यैश्च स्वलङ्कृत्य द्विजोत्तमान् ॥
तर्पयेद्विविधैः कामैर्दानै रत्नादिकैस्तथा ।
भुक्तवत्सु च विप्रेषु यथावत् सम्प्रवारयेत् ॥
वाचकं भरतश्रेष्ठ भोजयित्वा स्वलङ्कृतम् ।
ब्राह्मणेषु प्ररूढेषु प्रसन्नास्तस्य देवताः ॥
वाचके परितुष्टे तु शुभा प्रीतिरनुत्तमा ।
ततो विवरणं कार्यं संहितानां भरतर्षभ ॥
इतिहाससमं श्रुत्वा यथावदनुपूर्वशः ।
संयतात्मा शुचिर्भूत्वा पारं गत्वा तु भारते ॥
तेषां श्राद्धानि *देयानि श्रुत्वा भारत भारतम् ।
ब्राह्मणेभ्यो यथाशक्ति भक्त्या च भरतर्षभ ॥
महादानानि देयानि यानानि विविधानि च ।
गावः कांस्योपदोहाश्च कन्याश्च सुमनोहराः ॥
सर्वकामगुणोपेता यानानि विविधानि च ।
भवनानि विचित्राणि भूमिवासांसि काञ्चनम् ॥
वाहनानि च देयानि हृद्या मत्ताश्च वारणाः ।
शयनं शिविकाश्चैव स्यन्दनाश्च स्वलङ्कृताः ॥
यद्यद्गृहे वरं किञ्चित् किञ्चिदस्ति महद्वसु ।
तत्र देयं द्विजातिभ्य आत्मा दासाश्च सूनवः ॥
श्रद्धया परया हृद्याः क्रमशः पाठपारगाः ।
शक्तितः सुमना भूत्वा सुश्रुतश्च विमत्सरः ॥

---

* श्रद्धायुक्तानि वस्तूनीति ।

एवं करोति यो विद्वान् दानं पर्वप्रतिष्ठितम् ।
सर्वयज्ञफलं प्राप्य स देवैः सह मोदते ॥
यश्चानेन प्रकारेण भारतं श्रावयेन्नरः ।
तद्विद्यादानमाहात्म्याल्लोकानुद्धरति ह्यसौ ॥

इति पुराणश्रवणदानविधिः ।

## अथ सर्वशास्त्रसाधारणदानविधिः ।

### तत्र देवीपुराणे ।

विद्यादानं प्रवक्ष्यामि येन तुष्यन्ति मातरः ।
लिख्यते दीयते येन विधिना तं शृणु प्रभो ॥

### तथा ।

शृण्वतां जायते भक्तिस्ततो गुरुमुपासते ।
स च विद्यागमान् वक्ति विद्यायुष्ट्वाश्रितो नृप ॥
श्रीताडपत्रके सञ्चे समे पत्रसुसञ्चिते ।
विचित्रकञ्चिकापार्श्वे चर्मणा संपुटीकृते ॥
रक्तेन वाऽथ कृष्णेन मृदुना रञ्जितेन च ।
दृढसूत्रनिवद्धेन एवंविधिकृतेन च ॥
यस्तु द्वादशसाहस्रीं संहितामुपलेखयेत् ।
ददाति चाभियुक्ताय स याति परमां गतिम् ॥
पूर्वोत्तरप्लवे देशे सर्ववाधाविवर्जिते ।
गोमयेन शुभेनैव कुर्यान्मण्डलकं बुधः ॥
धनुर्हस्तप्रमाणेन शुभं च चतुरस्रकम् ।
तस्य मध्ये लिखेत् पद्मं सितरक्तासितादिभिः ॥
सर्वर्त्तुकामजैः पुष्पैर्भूषयेत् तूसर्वतो दिशम् ।

वितानं प्रापयेन्मूर्ध्नि शुभं चित्रविचित्रितम् ॥
पार्श्वतोऽसितवस्त्रैश्च सम्यक् शोभां प्रकल्पयेत् ।
कन्दुकैरर्धचन्द्रैश्च दर्पणैश्चामरैस्तथा ॥
घण्टाकिङ्किणिशब्दैश्च सर्वतश्चोपकल्पयेत् ।
तस्य मध्ये न्यसेद्यन्त्रं नागदन्तमयं शुभम् ॥
अधः किञ्चिन्निबद्धं तु ऊर्ध्वतोऽपि सुसंयुतम् ।
शोभितं दृढबन्धेन बद्धं सूत्रेण बुद्धिमान् ॥
तस्योर्ध्वं विन्यसेद्विद्वान् पुस्तकं लिखितं शुभम् ।
आलेख्यमपि तत्रैव पूजयेद्विधिना ततः ॥
निरुदकैस्तथा पुष्पैः कृमिकीटविवर्जितैः ।
चन्दनेन सदर्पेण भस्मना वाऽवधूलयेत् ॥

'सदर्पेण' मृगमदसहितेन ।

धूपश्च गुग्गुलुर्देयस्तुरुष्कागुरुमिश्रितः ।
दीपमाला तथा चाग्रे नैवेद्यं विविधं पुनः ॥
खाद्यं पेयं सितं लेह्यं चोष्यं वा विनिवेदयेत् ।
पूजयेच्च दिशां पालान् लोकपालान् यथाक्रमम् ॥
कन्याः स्त्रियश्च सम्पूज्य मातरः कल्पयेच्च वा ।
पुस्तकं देवदेवीश्च विप्राणां दक्षिणा तथा ॥
स्वशक्त्या चैव दातव्या नृपः पौराँश्च पूजयेत् ।
तथा सम्पूजयेद्वत्स लेखकं शास्त्रपारगम् ॥
छन्दोलक्षणतत्त्वज्ञं सत्कविं मधुरस्वरम् ।
प्रणष्टं स्मरति ग्रन्थं श्रेष्ठं पुस्तकलेखकम् ॥
नातिसन्ततिविच्छिन्नैर्न च श्लक्ष्णैर्न कर्कशैः ।
नन्दिनागरकैर्वर्णैर्लेखयेच्छिवपुस्तकम् ॥

प्रारभ्य पञ्च वै श्लोकान् पुनः शान्तिं तु कारयेत् ।
रात्रौ जागरणं कुर्यात् सर्वप्रेक्षां प्रकल्पयेत् ॥
नटचारणनग्नैश्च देव्याः कथनसम्भवैः ।

'सर्वप्रेक्षां' सर्वप्रकारप्रेक्षणकम् ।

प्रत्यूषे पूजयेल्लोकाँस्ततः सर्वान् विसर्जयेत् ।
एकान्ते सुमनस्केन विशुद्धेन दिने दिने ॥
निष्पाद्य विधिनाऽनेन स्वृक्षे च शुभवासरे ।

'स्वृक्षे' शुभनक्षत्रे ।

ततः पूर्वोक्तविधिना पुनः पूजां प्रकल्पयेत् ।
तथा विद्याविमानं तु सप्तपञ्चत्रिभूमिकम् ॥
विचित्रवस्त्रशोभाढ्यं शुभलक्षणलक्षितम् ।
कारयेत् सर्वतोभद्रं किङ्किणीरवकान्वितम् ॥
दर्पणैरर्धचन्द्रैश्च घण्टाचामरमण्डितम् ।
तस्मिन् धूपं समुत्क्षिप्य सुगन्धचन्दनागुरुम् ॥
तुरुष्कं* गुग्गुलं वत्स शर्करामधुमिश्रितम् ।
पूजयेत् पूर्ववत् सर्वान् कन्यास्त्रीद्विजदुःखितान् ॥
तथा तत् पुस्तकं वत्स विन्यसेद्विधिपूर्वकम् ।
एवं कृत्वा यथा विद्याः प्रीयन्तां मातरो मम ॥
यस्यैव सक्तं तच्छास्त्रं तं पुस्तं परिकल्पयेत् ।

'यस्यैव सक्तं' यस्यैव देवस्य सक्तं सम्बन्धि। 'तत् पुस्तं' पुस्तकं तं देवं परिकल्प्य समर्पयेदित्यर्थः ।

तथा तपस्विनः पूज्याः सर्वशास्त्रार्थपारगाः ।
शिवव्रतधरा मुख्या विष्णुधर्मपरायणाः ॥

---

* अगुरुमिति क्व चित् पुस्तके पाठः ।

महता जनसङ्घेन रथस्थं दृढवाहनैः ।
युवभिश्चाभितैः नेयं यस्य देवस्य चागमम् ॥
सामान्यं सर्वतीर्थेषु* मातृणां भवनेषु च ।
तस्मिन् पूजां तथा कृत्वा देवदेवस्य शूलिनः ॥
समर्पयेत् प्रणम्येशं प्रीयन्तां मातरो मम ।
सदाऽध्ययनयुक्ताय विद्यादानरताय च ॥
विद्यासंग्रहयुक्ताय कृतशास्त्रश्रमाय च ।
तेनैव वर्त्तते यस्तु तस्य तं विनिवेदयेत् ॥
जगद्धिताय वै शान्तिं सन्धाय वाचयेत् तथा ।
तेन तोयेन दातारं मूर्ध्नि सम्यङ्निषेचयेत् ॥
शिवं वन्दे ततः शब्दमुच्चार्य जगतस्तथा ।
एवङ्कृते महाशान्तिर्देशस्य नगरस्य च ॥
जायते नात्र सन्देहः सर्वा बाधाः शमन्ति च ।
अनेन विधिना यस्तु विद्यादानं प्रयच्छति ॥
स भवेत् सर्वलोकानां दर्शनादघनाशनः ।
मृतोऽपि गच्छति स्थानं ब्रह्मविष्णुनमस्कृतम् ॥
सप्त पूर्वापरान् वंशानात्मनः सर्वमेव च ।
उद्धृत्य पापकलिलाद्विष्णुलोके महीयते ॥
यावन्ति पत्रसङ्ख्यानि अक्षराणि भवन्ति हि ।
तावत् स विष्णुलोकेषु क्रीडते विविधैः सुखैः ॥
ततः क्षितिं समायातो देव्या भक्तिपरो भवेद् ।
समस्तभोगसम्पन्नो विदुषां जायते कुले ॥

---

* शिवतीर्थेष्विति क्वचित् पाठः ।

नन्दिपुराणे ।

यदेतत् पुण्यमाख्यातं विद्यादानस्य साम्प्रतम् ।
देशकालविधिश्रद्धापात्रयोगाद्यथा बुधः ॥
प्राप्नोति कोटिगुणितं फलं विद्याप्रदानतः ।
गुरुमाराध्य यत्नेन विद्याव्याख्यानपारगम् ॥
शक्त्या भक्त्या प्रणामेन विद्यादानं समारभेत् ।

तथा ।

विद्या च मुख्या दानानां गुरुतोऽस्य विधिं बुधः ।
श्रुत्वा विद्यां च विधिवत् श्रद्धया भावितात्मना ॥
सत्पात्रेभ्यस्तु तां दद्याद्विशेषाद्गुणशालिषु ।
उपयोग्यं च यद्यस्य तत् तस्य प्रतिपादयेत् ॥
सुरालयेषु लिङ्गेषु यथाविभवविस्तरैः ।
दातव्यास्तु प्रयत्नेन महापुण्यफलार्थिभिः ॥
शुभे नक्षत्रदिवसे शुभे वाऽपि दिनग्रहे ।
लेखयेत् पूज्य देवेशान् रुद्रब्रह्मजनार्दनान् ॥
पूर्वं दिग्विजितो भूत्वा लिपिज्ञो लेखकोत्तमः ।
निरोधिहस्तबाहुश्च मषीपात्रावधारणात् ॥
एकान्तश्चोपकरणं यस्यासौ लेखकोत्तमः ।
विद्याधारं प्रकुर्वीत हेमरूप्यमयं शुभम् ॥
नागदन्तमयं वाऽपि शुभदारुमयं तथा ।
मनोज्ञमगुरुं रम्यं श्लक्ष्णयन्त्रप्रयोगजम् ॥
सङ्कोचपत्रसंयुक्तं विकासेन समन्वितम् ।

'नागदन्तमयं' हस्तिदन्तनिर्मितमित्यर्थः ।

तत्र विद्यां विनिहितां कुर्यात् पुस्तकसंस्थिताम् ।

कुर्याच्च पुस्तकं तस्य लिखेद्द्व्यङ्गुलविस्तृतम् ॥
शुभं श्लक्ष्णं च रम्यं च कृष्णं मेचकितं च वा ।
अथ वा रक्तपद्माभं मेचकालङ्कृतं शुभम् ॥
कार्पाससूत्रग्रथितं नानागन्धाधिवासितम् ।

'मेचकालङ्कृतं' मयूरार्धचन्द्रालङ्कृतम् ।

मषीभिश्चाप्यनेकाभिश्चतुर्वर्णाभिरेव च ।
दृढस्तम्भनयुक्ताभिर्मेचकैश्चाप्यनेकशः ॥

'स्तम्भनं' मषीस्थैर्यहेतु ।

लेखनीभिश्च दिव्याभिर्हैमचित्राभिरेव च ।
बहिश्च वर्णं कुर्वीत पुस्तकस्य मनोरमम् ॥
पीतै रक्तैः कषायैर्वा सुनिबद्धं विचित्रितम् ।
रम्यं लघु सुविस्तीर्णं निर्ग्रन्थि ग्रन्थिसंयुतम् ॥
विद्याधारं ततो यत्नसंस्थितं पूर्वपुस्तकम् ।
गृहे मनोरमे गुप्ते सुधालेपितभित्तिके ॥
नानारागाङ्कुरोपेते शुद्धविम्बमनोरमे ।
धूपामोदमनोज्ञे तु वितानकपरिस्तृते ॥
लेखको बुद्धिमान् स्नातः शुक्लपुष्पाम्बरोज्ज्वलः ।
सुवर्णमुक्ताकेयूरो मुद्रिकाशोभिताङ्गुलिः ॥
सुसमिद्ध मषीभाण्डे लेखनीशास्त्रसंयुते ।
आरभेत् तूर्यघोषेण पूजां देवान् पितॄँस्तथा ॥
ब्राह्मणान् स्वस्ति वाचयादौ शास्त्रं च श्रावयेद्बुधः ।
श्लोकपञ्चकमादौ तु दशकं वाऽपि लेखयेत् ॥
ततो नक्षत्रयोगेन द्वितीयेऽहनि तल्लिखेत् ।
तादृशेनैव विधिना पुण्याहैः शुभसंयुतैः ॥

ततः समाप्ते शास्त्रे तु पुनः पुण्याहसंयुतम् ।
कुर्यात् तदहोरात्रे च पानभोजनवस्तुभिः ॥
उभयं वाऽपि तल्लेख्यं समीकुर्याच्च वाचकम् ।

'उभयं लेख्यं' वाचयन् समीकुर्यादित्यर्थः ।

ऊनाधिकैश्च संयुक्तं वर्णैर्मात्रादिभिस्तथा ॥
अनुस्वारविसर्गैश्च युक्तायुक्तैर्विचारयेत् ।
शास्त्रं प्रकृतया युक्त्या पुनरुक्त्याऽवशोधयेत् ॥
ऊनार्थोक्त्याऽप्रसङ्गं च शब्दयोग्यतया तथा ।
सूत्रान्तरार्थबोधेन प्रश्नोत्तरविवेकतः ॥
असूत्रत्वाच्च शास्त्रस्य समुदायार्थबोधतः ।
प्रक्रान्तसूचनोद्देशैर्गदितैश्चोदितैरपि ॥
बह्वर्थानां च शब्दानां योग्यासत्तिं परीक्ष्य तु ।
सर्वशास्त्रावबोधेन कारकाद्यैरविप्लुतैः ॥
क्व चिच्च शब्दं वर्ज्यैव प्रकृतार्थं निरूपयेत् ।
छन्दसां चापि बुद्ध्वा तं वृत्तसंयोगमीप्सितम् ॥
एवं विधां तु मेधावी शास्त्रं सत्कृत्य कृत्स्नशः ।
श्रद्धाद्भिभवैर्दिव्यैः सुरायतनवेश्मसु ॥
व्यक्तादेशलिपिन्यासं व्यक्तं नागरमुच्यते ।
अव्यक्तदेशलिपिं न्यासव्यक्तां तद्देशसारिणीम् ॥

'लिपि' न्यासः पत्रेऽक्षरनिर्माणम् ।

तथा

आरोप्य याने रत्नाढ्ये शुभवस्त्रपरिष्कृते ।
घण्टाचामरशोभाढ्ये रत्नदण्डातपत्रिणि ॥
गजवाजिरथस्थं वा महाशोभासमन्वितम् ।

पुरतो गीतनृत्येन नानावाद्यरवेण च ॥
मङ्गलैर्वेदनिर्घोषैर्देवाय विनिवेदयेत् ।
नानारूपोपहारैश्च सम्पूज्य तु दिवौकसः ॥
दत्त्वा च पुस्तकं तत्र पितॄणां धर्ममुद्दिशेत् ।
बान्धवानां च दद्यानामनन्तफलमिच्छताम् ॥
ततो दत्त्वा विधानेन तां विद्यां शिवमन्दिरे ।
ततश्च भक्षयेद्विप्रान् रुद्रभक्ताँश्च मानवान् ॥
यथाशक्ति च कर्त्तव्या उत्सवाः स्वेषु वेश्मसु ।
राज्ञा तु नगरे कार्या ग्रामे ग्रामाधिपैस्तथा ॥
गृहे गृहस्थैः कर्त्तव्य उत्सवो बन्धुभिः सह ।
स्नातैः शुक्लैः समालब्धैः स्रग्विभिः सुसमाहितैः ॥
प्रीतियुक्तैस्ततः श्राव्यं शास्त्रं श्रद्धासमन्वितैः ।
वाचकं भक्षयेत् तत्र यथाविभवविस्तृतः ॥
गुरुं च भक्त्या मतिमान् यथाशक्ति क्षमायया ।
ततः पुष्पैश्च धूपैश्च श्रावकान् सम्प्रपूजयेत् ॥
वाचको ब्राह्मणः प्राज्ञः श्रुतशास्त्रो महामनाः ।
अभ्यस्ताक्षरविन्यासो वृत्तशास्त्रविशारदः ॥
शब्दार्थवित् प्रगल्भश्च विनीतो मेधया युतः ।
गीतज्ञो वाक्यसुश्राव्यस्वरो नाविलभाषकः ॥
गुरुश्च धर्मवान् प्राज्ञः श्रुतशास्त्रो विमत्सरः ।
विप्रः प्रकृतिसंशुद्धः शुचिः स्मितमुखः सदा ॥
सुवृत्तो वृत्तशास्त्रज्ञः शब्दशास्त्रविशारदः* ।

---

* सर्वशास्त्रविशारद इति क्व चित् पुस्तके पाठः ।

अभ्यस्तशास्त्रसन्दोहः प्रकृतार्थप्रवर्त्तकः ॥

'वृत्तशास्त्रज्ञः' छन्दःशास्त्रवित् । 'प्रकृतार्थप्रवर्त्तकः' प्रस्तुतार्थाभिधायी नाम प्रक्रमकृतव्याख्यापौर्वापर्यार्थाविष्टधीः ।

अध्यायसर्गविच्छेदविभक्त्यर्थप्रयोजकः ।
शास्त्रार्थपदविद्धीमान् पदश्लोकार्थबोधकः ॥
समुदायप्रकीर्णार्थमुख्यशास्त्रानुषङ्गजम् ।
अनक्षरं च हृद्गस्तु व्यपदिश्यार्थबोधकः ॥
प्रक्रान्तादिस्वशास्त्रार्थविभागपरिनिष्ठितः ।
काष्ठाभिमानगूढार्थभङ्गेन च विरोधकः ॥
अद्वेयवागनालस्यः श्रोतृवृत्तप्रबोधकः ।
संस्कारैः संस्कृतां विद्यां प्राकृतैः प्राकृतामपि ॥
आलापमात्रैर्व्याख्यानैर्यश्च शिष्यान् प्रबोधयेत् ।
दशाभिधानविन्यासैर्बोधयेच्चापि यो गुरुः ॥
स गुरुः स पिता माता स तु चिन्तामणिः स्मृतः ।
यः शास्त्रोपायमाख्याय नरकेभ्यः समुद्धरेत् ॥
कस्तेन सदृशो लोके बान्धवो भुवि विद्यते ।
यस्य वाग्रश्मिवृन्देन हृदयान्मथ्यते तमः ॥
महासंसाररजनीभवं सोऽर्को महाद्युतिः ।
गौद्धतेनास्य पारुष्ये न च वैलोम्यमावहेत् ॥
न चास्य व्याधिदुःखेषु मलेष्वप्रीतिरुद्भवेत् ।
प्रसादयेत् तु कुपितं दुःखमग्नं समुद्धरेत् ॥
रोगेभ्यश्चापि यत्नेन परित्राणेन चोद्धरेत् ।
एवं व्याख्यां शुभां श्रुत्वा गुरुवक्त्रान्नरोत्तमः ॥
विधेयं चिन्तयेद्यस्तु परत्र हितकारणात् ।

शृणुयात् श्रद्धया युक्तः प्रयतोऽभिमुखो गुरोः ॥
अनन्यसत्कथाक्षेपी निष्प्रमादो ह्यतन्द्रितः ।
बुबुध्य संशये जाते पृच्छेद्वाक्यमुदीरयेत् ॥
गुरुणा चोक्तमेकान्ते श्रद्धावान् वाक्यमाश्रयेत् ॥
एतत्कृतं स्वयं कुर्यात् ससमिद्ब्रह्मयज्ञलान्वितः ।

-ःकृतं गुरुचेष्टितम् ।

अप्रस्तुतकथाक्षेपं यः कुर्यादग्रतो गुरोः ॥
स ब्रह्महत्यामाप्नोति गुरुवाक्येष्वनिश्चयः ।
यश्च श्रुत्वाऽन्यतः शास्त्रं संस्कारं प्राप्य वाऽशुभम् ॥
अन्यस्य जनयेत् कीर्त्तिं स गुरोर्ब्रह्महा भवेत् ।
विस्मारयेच्च व्यामोहाद्योऽपि शास्त्रार्थमुत्तमम् ॥
स याति नरकं घोरमक्षयं भीमदर्शनम् ।
यस्तु बुद्ध्वा नरः शास्त्रं किञ्चित् कुर्यात् शुभाशुभम् ॥
भवेच्छतगुणं तद्धि विज्ञानेभ्यो रतस्य च ।
एवं विधानतो वाच्यं वाचकेन विपश्चिता ॥
तपः समात्मकं सर्वं स्वर्गादिफलसाधकम् ।
शनैर्विबोध्य वै वाच्यमध्यात्मादि च यद्भवेत् ॥
क्रुद्धोक्तियुद्धसंक्षोभं धारावर्त्तेन वाचयेत् ।

धारावर्त्तेन वेगेन ।

सरागं ललितैर्वाक्यैर्वाचयेद्बद्धसङ्गमे ॥
नानावृत्तानुरूपेण लालित्येन च वाचयेत् ।
सर्गाध्याये समाप्ते च कथापर्यन्त एव वा ॥
प्रश्नःब्दशब्दसंयोगे कुर्यादिति विरामणम् ।
समाप्ते वाचके भीष्म ब्रूयादेवं विचक्षणः ॥

अवधार्य जगच्छान्तिमन्ते शान्त्युदकं सृजेत् ।
सुश्रुतं सुश्रुतं ब्रूयादस्तु व्याख्यातमित्यदः ॥
लोकः प्रवर्त्ततां धर्मे राजा वाऽस्तु सदा जयी ।
धर्मवान् धनसंपन्नो गुरुश्चात्र निरामयः ॥
इति प्रोच्य यथा जातं गन्तव्यं च विभावितैः ।
शिष्यैः परस्परं शास्त्रं चिन्तनीयं विचक्षणैः ॥
कथावस्तुप्रसङ्गेन नानाव्याख्यानभावनैः ।
युक्तिभिश्च चरेद्व्याख्याचिह्नैश्चापि स्वयंकृतैः ॥
एवं दिने दिने व्याख्यां शृणुयान्नियतो नरः ।

समग्रशास्त्रश्रवणेन पुंसः श्रद्धाप्रधानं भवतीह चेतः ॥
रागं च शास्त्रात्मकमभ्युपैति दोषाश्च नाशं निमिषेण यान्ति ।
यथाकथञ्चित् शृणुयान्न शास्त्रमश्रद्धया चेष्टितधर्मसङ्गः ॥
ततः समाप्तावथ शास्त्रसर्गे कथोदये चापि विनीतबुद्धिः ।
शक्त्याऽर्चयेद् द्वादशकल्पमेवं गुरुं च भक्त्या पितृवत् त्रिकार्थी ॥

एष विद्याप्रदानस्य प्रधानो विधिरुच्यते ।
अनेनैव विधानेन ब्राह्मणे शीलशालिनि ॥
प्रबोधयतिधीयुक्ते युक्तज्ञे वेदवादिनि ।
विन्यसेत् तु शुभं शास्त्रं महापुण्यजिगीषया ॥
धनैर्वा विपुलैर्दक्षैर्गुरुं कृत्वा सुतर्पितम् ।
अध्यापयेच्छुभान् शिष्यानभिजातान् सुमेधसः ॥
एवं विद्याप्रदानं तु सर्वदानोत्तमं स्मृतम् ॥
सर्वदा सर्ववर्णानां नरकप्लवमुत्तमम् ।
अनेन विधिना दत्त्वा विद्यां पुण्यपरो नरः ॥
यत् फलं चाश्वमेधानां शतस्य सुकृतस्य च ।

राजसूयसहस्रस्य सम्यगिष्टस्य यत् फलम् ॥
तत् फलं लभते मर्त्यो विद्यादानेन भाग्यवान् ।
सर्वसस्यसुसंपूर्णां सर्वरत्नोपशोभिताम् ॥
ब्राह्मणेभ्यो महीं दत्त्वा ग्रहणे चन्द्रसूर्ययोः ।
यत् फलं लभते मर्त्यो विद्यादानेन तत् फलम् ॥
यावदक्षरसङ्ख्यानं विद्यते शास्त्रसंश्रये ।
तावद्वर्षसहस्राणि स्वर्गे विद्याप्रदो भवेत् ॥
यावत्यः पङ्क्तयस्तत्र पुस्तकेऽक्षरसंश्रिताः ।
यावच्च पत्रसङ्ख्यानं पुस्तके विद्यते शुभम् ॥
तावद्युगसहस्राणि सकुलो मोदते दिवि ।
तावतो नरकात् कुल्यानुद्धृत्य नयते दिवि ॥
यावच्च पातकं तेन कृतं जन्मशतैरपि ।
तत्सर्वं नश्यते तस्य विद्यादानेन देहिनः ॥
स जातो मनुजो लोके स धन्यः स च कीर्त्तिमान् ।
यो विद्यादानसम्पर्कप्रसक्तः पुरुषोत्तमः ॥
यथा विभवतो दद्याद्विद्यां शाठ्यविवर्जितः ।
याति पुण्यतमाँल्लोकानक्षयान् भोगभूषितान् ॥

वह्निपुराणे । अम्बरीष उवाच ।

गवां सुबहुधा दानं भूमिदानं तथा मुने ।
ब्रह्माण्डादीनि सर्वाणि कथितानि त्वया मम ॥
इदानीं श्रोतुमिच्छामि विद्यादानफलं महत् ।
विधिवद्विविधं तद्वत् कथयस्व महामुने ॥

वशिष्ठ उवाच ।

विद्यादानं प्रवक्ष्यामि यथातथ्यं तवाधुना ।

१६

यथा देयं फलं यच्च तच्छृणुष्व नृपोत्तम् ॥
शुभेऽह्नि शुभनक्षत्रे मण्डपं शुभवेदिकम् ।
चतुरस्रं वितानं वा कृत्वा तत्रोपलेपयेत् ॥
गोमयेनोपलिप्ते तु पुष्पप्रकरशोभिते ।
तत्र न्यस्यासनं दिव्यं दिव्यगन्धाधिवासितम् ॥
संस्थाप्य पुस्तकं तत्र धर्मशास्त्रस्य धीमतः ।
ब्राह्मणान् वेदसम्पूर्णाँश्छन्दोलक्षणपारगान् ॥
लिखापयित्वा यत्नेन तत् समग्रं शुभाक्षरैः ।
चन्द्रसूर्योपरागे वा सङ्क्रान्त्ययनवासरे ॥
पुण्येऽह्नि तत् सुसम्पूज्य वस्त्रालङ्कारभूषणैः ।
घृतधेन्वा युतं रत्नैर्दद्याद्गुणवते ततः ॥
शास्त्रसद्भावविदुषे वाचकेऽतिप्रियम्वदे ।
तच्छास्त्रं शृण्वतां नित्यं जनानां नाशयत्यघम् ॥
दातुस्तस्माद्भवेन्नैकफलं तच्छृणु भूपते ।
यत् पुण्यं सर्वतीर्थानां विधिवद्यजतां तथा ॥
तत् पुण्यं समवाप्नोति विधिवच्छास्त्रदः पुमान् ।

वाराहपुराणे ।

विद्यादानविधिं वक्ष्ये यथातत्त्वेन ते पुनः ।
दत्तेन तत् फलं तस्य दातुरस्य समासतः ॥
उक्ते समारभेत् काल निम्नोन्नतविवर्जिते ।
सुसमे भूप्रदेशे च गोमयेनोपलेपयेत् ॥
पुष्पप्रकरसम्पन्ने गीतवाद्यसमाकुले ।
अमलां चतुरस्रां वा चन्दनेनैव कारयेत् ॥
पुस्तकं तत्र संस्थाप्य गन्धपुष्पैः प्रपूजयेत् ।

सौवर्णलेखनी कार्या मषीभाण्डं च रौप्यकम् ॥
जयशब्दं समुद्घोष्य आरभेल्लेखकः सुधीः ।
विनीतश्चाप्रमत्तश्च शास्त्रनिष्पत्तिमानयेत् ॥
ब्राह्मणस्य सुवृत्तस्य वाचकस्य विकल्पतः ।
अनेन विधिना दत्त्वा दातू रत्नस्य यत् फलम् ॥
तत् फलं कोटिगुणितं पुस्तकैकप्रदायकः ।
यत् पुण्यं तीर्थयातॄणां यत् पुण्यं यज्वनां नृणाम् ॥
तत् पुण्यं कोटिगुणितं विद्यादाने न संशयः ।
कपिलानां सहस्रेण सम्यग्दत्तेन यत् फलम् ॥
तत् फलं समवाप्नोति पुस्तकैकप्रदानतः ।

अथाल्पवित्तस्य श्रद्धावतो विद्यादानमभिधीयते । तत्र देवीपुराणे ।

आत्मवित्तानुसारेण विद्यादानं करोति यः ।
असाध्यं फलमाप्नोति शाक्यतुल्यं न संशयः ॥
स्त्री वाऽनेनैव विधिना विद्यादानफलं लभेत् ।
भर्त्रा चैवाननुज्ञाता विधवा च तमुद्दिशेत् ॥
विद्यार्थिने सदा दद्याद्वस्त्राभ्यङ्गं च भोजनम् ।
छत्रिकामुदकं दीपं यस्मात् तेन विना न हि ॥
लेखनीघटितं तीक्ष्णं मषीपात्रं तु लेखनीम् ।
दत्त्वा तु लभते वत्स विद्यादानमनुत्तमम् ॥
पुस्तकस्त(?)णं दत्त्वा सुप्रमाणं सुशोभनम् ।
विद्यादानमवाप्नोति सूत्रबद्धं च बुद्धिमान् ॥
यन्त्रकं त्वासनं चैव दण्डासनमथापि वा ।
विद्यावाचनशीलाय दत्तं भवति राज्यदम् ॥

अञ्जनं नेत्रपादानां दत्तं विद्यापरायणे ।
भूमीर्गृहं च क्षेत्रं च स्वर्गराज्यफलप्रदम् ॥
यस्य भूम्यां स्थितो नित्यं विद्यादानं प्रवर्त्तयेत् ।
तस्यापि भवति स्वर्गस्तत्प्रभावान्न संशयः ॥

नन्दिपुराणे ।

येऽपि पत्रं मषीपात्रं लेखनीं सम्पुटादिकम् ।
लघुशास्त्राभियुक्ताय तेऽपि विद्याप्रदायिनाम् ॥
यान्ति लोकान् शुभान् मर्त्याः पुण्यभाजो नराधिप ।

विष्णुधर्मोत्तरे ।

विद्यादानमवाप्नोति प्रदानात् पुस्तकस्य च ।
शिल्पानि शिक्षयेद्यस्तु पौण्डरीकफलं लभेत् ॥
शिल्पभाण्डप्रदानेऽपि तद्विद्यादानजं फलम् ।
अहितेषु प्रवृत्तस्य तथा कृत्वा निवारणम् ॥
विद्यादानफलं प्रोक्तं नात्र कार्या विचारणा ।
पापवृत्तस्य च तथा दत्त्वा चैव परां मतिम् ॥
विद्यादानफलं प्राप्य स्वर्गलोके महीयते ।
येन जीवति भाण्डेन तस्मै तद्भाण्डदायकः ॥
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ।

स्कन्दपुराणे ।

दरिद्रः स्वानुसारेण वित्तशाठ्यविवर्जितः ।
कृत्वा विधिमिमं भक्त्या विद्यादानफलं लभेत् ॥
यस्य यावद्भवेद्वित्तं स तस्येच्छानुसारितः ।
निवेद्य सुमहाभोगैः शिवलोके महीयते ॥

पुस्तकास्तरणं दत्त्वा सहस्रं तत्प्रमाणतः ।
तद्वासनं वितानं वा शिवलोके महीयते ॥
यावत् तद्वस्त्रसूत्राणां परिसङ्ख्या समन्ततः ।
तावद्युगसहस्राणि महाभोगानवाप्नुयात् ॥
यः श्रीपर्णसमुद्भूतं निम्नखातं सुसञ्चयम् ।
दद्यात् सम्पुटकं कृत्वा चर्मणा वाऽपि निर्मितम् ॥
शिवज्ञानाभियुक्ताय तदध्ययनहेतुना ।
सुश्लक्ष्णं फलकं वाऽपि विद्यादानफलं लभेत् ॥
यः सौवर्णं सुसम्पूर्णं सर्वरत्नोपशोभितम् ।
सपिधानसुमञ्जूषं विद्याकोशसमाश्रयम् ॥
कारयेद्वाऽपि रौप्येण ताम्रेण चतुरस्रकम् ।
कांस्यारकूटलोहं वा दारुवंशादिनिर्मितम् ॥
सुकषायातिरक्तेन चर्मणाऽभिनवेन च ।
अन्तर्बहिश्च मठयेत् विद्यादाननवं गृहकम् ॥
सुदृढं कटकोपेतं दृढस्तम्भनिवेदनम् ।
कुर्यात् तालकसंयुक्तं विद्यारत्नकरण्डकम् ॥
एवं वित्तानुसारेण कारयित्वा तु तं नृप ।
विद्यासिंहासनं तत्र सम्पूज्य विधिवद्बुधः ॥
तस्मिन् पुण्याहशब्देन विद्याकोशगृहं न्यसेत् ।
एवं यः शिवविद्यायाः कुर्यादायतनं शुभम् ॥
स मुक्तः पातकैः सर्वैर्विद्यादानफलं लभेत् ।
विद्यामण्डलकं कृत्वा विद्याव्याख्यानमण्डपे ॥
तत्राभ्यर्च्य शिवं विद्यां तद्व्याख्यां शृणुयात् ततः ।
सोऽपि याति शिवस्थानं सर्वकामसमन्वितम् ॥

अनेन विधिना स्नानं यः शृणोति प्रवक्ति च ।
स सम्प्राप्य श्रियं सौख्यं देहान्ते मुक्तिमाप्नुयात् ॥

नन्दिपुराणे ।

इति विद्याप्रदानस्य महाभाग्यं प्रकीर्त्तितम् ।
श्रुत्वैतत् पातकैर्मुच्येर्नियतं सप्तजन्मजैः ॥

देवीपुराणे ।

तस्मात् सर्वप्रयत्नेन विद्या देया सदा नरैः ।
इहैव कीर्त्तिमाप्नोति मृतो याति परां गतिम् ॥
यस्तु देव्या गृहे नित्यं विद्यादानं प्रवर्त्तयेत् ।
स भवेत् सर्वलोकानां पूज्यः पूज्यपदं व्रजेत् ॥

वाराहपुराणे ।

ब्रह्माद्या देवताः सर्वा विद्यादाने प्रतिष्ठिताः ।
धर्माधर्मं न जानन्ति विद्यादानबहिष्कृताः ॥
तस्मात् सर्वप्रयत्नेन विद्यादानं* प्रयच्छति ।
चतुर्युगानि राजेन्द्र एकसप्तति यावता ॥
तावद्विष्णुपुरे राजन् क्रीडते कालमक्षयम् ।
क्षितिं चागत्य कालान्ते राजराजो भविष्यति ॥
त्रेतायुगे धर्मपरो जायते च पुनः पुनः ।
कुले महति जातश्च स राजा धार्मिको भवेत् ॥
हस्त्यश्वरथदानानां दाता भोक्ता विमत्सरी ।
भोक्ता पुरवराणां च देशानां चैव कोटिशः ॥
रूपसौभाग्यसम्पन्नो दीर्घायुर्नीरुजो भवेत् ।

---

* प्रवर्त्तत इति क्व चित् पाठः ।

पुत्रपौत्रैः परिवृतो जीवेच्च शरदां शतम् ॥
लेखके दक्षिणां दद्याद्वस्त्रालङ्कारभूषणम् ।
शुल्कं च वस्त्रयुग्मं च दद्याच्छास्त्रसमन्वितम् ॥
लिखापयित्वा तच्छास्त्रं देयं गुणवते सदा ।
तपस्विने धर्मरते परिपालनतत्परे ॥
वस्त्रयुग्मेन संवीतं पुस्तकं प्रतिपादयेत् ।
वाचकं पूजयेच्चैव वस्त्रालङ्कारभूषणैः ॥
क्षम्यतामिति वक्तव्यं लेखकः सुसमाहितः ।
अनेनैव विधानेन विद्यादानात् फलं लभेत् ॥

वह्निपुराणे ।

वाजपेयसहस्रस्य सम्यगिष्टस्य यत् फलम् ।
तत् फलं समवाप्नोति विद्यादानान्न संशयः ॥
तस्माद्देवालये नित्यं धर्मशास्त्रस्य वा श्रुतेः ।
पठनं कारयेद्राजन् यदीच्छेद्धर्ममात्मनः ॥
गोभूहिरण्यवासांसि शयनान्यासनानि च ।
प्रत्यहं तेन दत्तानि भवन्ति नृपसत्तम ॥
धर्माधर्मं न जानाति लोकोऽयं विद्यया विना ।
तस्मात् सदैव धर्मात्मन् विद्यादानरतो भवेत् ॥
वेदशास्त्रे रहस्यानां यदि नैव नृपोत्तम ।
ततो ज्ञानतमोऽन्धस्य काऽवस्था जगतो भवेत् ॥
ब्रह्मादयः सुराः सर्वे ऋषयो दग्धकिल्विषाः ।
मनुष्याः पितरश्चैव विद्यादाने प्रतिष्ठिताः ॥
चतुर्युगानां राजेन्द्र एकसप्ततिसङ्ख्यया ।
वेदशास्त्रप्रदः स्वर्गे पूज्यते सुरसत्तमः ॥

स तु कालादिहागत्य राजा भवति धार्मिकः ।
हस्त्यश्वरथयानाढ्यो दाता भोक्ता त्वमत्सरी ॥
रूपसौभाग्यसम्पन्नो दीर्घायुर्नीरुजः सुखी ।
पुत्रपौत्रवृतः कालान्मोक्षं याति न संशयः ॥

दानं विशेषफलदं जगतीह नान्यद्-
विद्यां विहाय वदनाब्जकृताधिवासाम् ।
गोभूहिरण्यगजवाजिरथादिसर्वं
तद्यच्छतां किमिति भूप भवेन्न दत्तम् ॥

इति विद्यादानविधिः ।

इति श्रीमहाराजाधिराजश्रीमहादेवस्य समस्तकरणाधीश्वर-
सकलविद्याविशारदश्रीहेमाद्रिविरचिते
चतुर्वर्गचिन्तामणौ दानखण्डेऽतिदा-
नप्रकरणम् ।



अथ दश महादानान्युच्यन्ते ।

तत् तादृग्विमलं कुलं निरवधिर्विद्याऽनवद्याऽऽकृतिः
सम्पत्कम्पितदैन्यसैन्यनिवहा माधुर्यधुर्या गिरः ।
इत्यन्योन्यजिगीषयेव गुरुतां यस्मिन् भजन्ते गुणा-
स्तेनायं विधिरुच्यते दशमहादानेषु हेमाद्रिणा ॥

तत्संग्रहश्लोकास्तु कूर्मपुराणे ।

कनकं च तिला नागा दासीरथमहीगृहाः ।
कन्या च कपिला धेनुर्महादानानि वै दश ॥

तत्र प्रथमनिर्दिष्टतया सुवर्णदानमेव तावदुच्यते ।
वह्निपुराणे । राम उवाच ।

क्रोधादिदं मया कर्म कृतं मुनिवरोत्तमाः ।
कथं तस्माद्विमुच्येऽहं पापात् प्राणिवधादिकात् ॥
इत्युक्ताः धर्मतत्त्वज्ञाः पापानां पावनं परम् ।
दानं चेह सुवर्णस्य ते तमूचुर्महर्षयः ॥
एतत् पवित्रमतुलं सम्भूतमिह शुश्रुम ।
शम्भोर्बीजं परं तेजो ह्यपत्यं जातवेदसः ॥
सहस्रं कार्त्तिकेयस्य रुद्रशुक्रसमुद्भवम् ।
पवित्रत्वात् सुरैः सर्वैर्धार्यते मुकुटादिषु ॥
अग्निस्तु देवताः सर्वाः सुवर्णं च तदात्मकम् ।
तस्मात् सुवर्णं ददता प्रीताः स्युः सर्वदेवताः ॥
दश पूर्वान् परांश्चैव नरकात् तारयन्ति ते ।

सुवर्णं ये प्रयच्छन्ति प्रोवाचेदं बृहस्पतिः ॥
सर्वान् कामान् प्रयच्छन्ति ये प्रयच्छन्ति काञ्चनम् ।
मरीचिर्भगवान् पूर्वं पितामहसुतोऽब्रवीत् ॥
यः सुवर्णं नरो नित्यं ब्राह्मणेभ्यः प्रयच्छति ।
स चिरं विरजा विद्वान् देववद्दिवि मोदते ॥
सर्वेषामेव दानानामेकजन्मानुगं फलम् ।
हाटकक्षितिगौरीणां सप्तजन्मानुगं फलम् ॥
विद्यादानं सुवर्णं तु यो लोभान्न प्रयच्छति ।
स सीदति च पापेन वेष्टितो नरकं व्रजेत् ॥
कृत्वाऽपि सुमहत् पापं जातरूपं ददाति यः ।
स सद्यस्तेन पापेन मुच्यते नात्र संशयः ॥
एतत् कृत्वा तु शुद्ध्यर्थं सुवर्णं देहि भार्गव ।
इत्युक्तो मुनिभिस्तैस्तु रामो धर्मभृतां वरः ॥
प्रादात् सुवर्णं विप्रेभ्यस्ततः पापाद्विमुच्यते ।
तस्मात् त्वमपि राजेन्द्र द्विजेभ्यो देहि काञ्चनम् ॥
विष्वक्सेनं समुद्दिश्य यदीच्छेच्छाश्वतीं गतिम् ।

ब्रह्माण्डपुराणे ।

सुवर्णं परमं दानं सुवर्णं दक्षिणा परा ।
पवित्राणां पवित्रं च दानानां नात्र संशयः ॥
हिमवद्दुहिता पूर्वमुमा नाम पतिव्रता ।
पूर्वजन्मनि सा चासीद्दक्षस्य तनया सती ॥
दक्षकोपाच्च तत्याज सती चात्मकलेवरम् ।
हिमवद्दुहिता जज्ञे लोके गौरीति विश्रुता ॥
दृष्ट्वा तेनापि सा तस्मै प्रणिपत्य पिनाकिने ।

विवाहं कारयामास विधिवद्दुहितुस्तदा ॥
वैवाहिकेन विधिना जुहावाग्निं पितामहः ।
होमं च कुर्वतस्तस्य विकारो मन्मथोऽभवत् ॥
रूपं दृष्ट्वा तदा देव्या रेतः क्लिन्नं महात्मनः ।
पद्भ्यां च मृदितं तेन बहुधा समपद्यत ॥
ततोऽतरन्ना महात्मानो बालखिल्या मरीचयः ।
अग्नौ च शेषमपतद्यथाभूद्धाऽनलप्रभम् ॥
जाज्वल्यमानं दीप्त्या च अग्निमध्यगतं तथा ।
शशंसिरे ततो देवा दृष्ट्वा पुत्रं विभावसोः ॥
जगृहुः शिरसा चैव पुण्यत्वात् ते पुटान्विताः ।
ऋषयश्च देवगन्धर्वा मुनयश्च यतव्रताः ॥
विभूषणं च ते देवा इष्टापूर्तं विभावसोः ।
देवपत्न्यस्तथा चैतद्भूषणेषु न्ययोजयन् ॥
एवं सुवर्णमुत्पन्नमाग्नेयं ब्राह्ममेव च ।
पवित्रमपरं लोके सुवर्णेन समं क्व चित् ॥
न विद्यते द्रव्यजातं दानं वा भूषणं तथा ।

अत्राह बृहस्पतिः ।

गृहादिके पुण्यफलं भवेन्मूल्यानुसारतः ।
तस्मात् सर्वप्रदानानां हिरण्यमधिकं स्मृतम् ॥
यथा सान्तनिकादीनां हेम्ना सम्पद्यते क्रिया ।
तथा न गृहदानेन हिरण्यमधिकं ततः ॥

वेदव्यासः ।

सर्वान् कामान् प्रयच्छन्ति ये प्रयच्छन्ति काञ्चनम् ।
एतद्धि भगवानत्रिः पितामहसुतोऽब्रवीत् ॥

पवित्रमथ वा पुण्यं पितॄणामक्षयं च यत् ।
सुवर्णं मनुजेन्द्रेण मनुना सम्प्रकीर्त्तितम् ॥

मनुः ।

भूमिदः सर्वमाप्नोति दीर्घमायुर्हिरण्यदः ।

संवर्त्तः ।

हिरण्यदो महाबुद्धिं दीर्घमायुश्च विन्दति ।

विष्णुः ।

सुवर्णप्रदोऽग्निसालोक्यमाप्नोति ।

बृहस्पतिः ।

अग्नेरपत्यं प्रथमं सुवर्णं भूर्वैष्णवी सूर्यसुताश्च गावः ।
लोकास्त्रयस्तेन भवन्ति दत्ता यः काञ्चनं गां च महीं च दद्यात् ॥

विश्वामित्रः ।

यत्रास्ते लिखिता गेहे स्वर्णदानस्य संस्तुतिः ।
रक्षोभूतपिशाचाद्यास्तं न पश्यन्ति पार्थिव ॥

देवीपुराणे ।

ज्ञात्वा मानं सुवर्णादेः पात्रेषु प्रतिपादयेत् ।
कामानिष्टानवाप्नोति विधिश्रद्धासमन्वितः ॥

वसिष्ठः ।

तस्मादग्निमुखाः सर्वदेवता इति शुश्रुम ।
ब्राह्मणो हि प्रसूतोऽग्निरग्नेरपि च काञ्चनम् ॥
तस्माद्ये वै प्रयच्छन्ति हिरण्यं सर्वदैवतम् ।
तस्य वै वेधसो लोका गच्छतः परमां गतिम् ॥
स्वर्लोके राजराज्येन सोऽभिषिच्येत भार्गव ।

सुवर्णमित्यनुवृत्तौ कालिकापुराणे ।

पूतमेतत् परं पुण्यं पुरा कायेषु नित्यशः ।
धारयन्ति यतः सर्वे मङ्गलार्थमरोगतः ॥
अतः पापानि सर्वाणि पात्रेभ्यो विधिपूर्वकम् ।
दत्तं पुनाति काले च देशे च हरसन्निधौ ॥
श्रूयतां येन रामेण विधिना प्राक् तपोधन ।
प्रदत्तं काञ्चनं पूर्वं रैचीकयेन महात्मना ॥
सर्वहेममयं यज्ञमिष्ट्वा विप्राः प्रतर्पिताः ।
हेमैराभरणैः पूज्य दत्तं फलशतं तथा ॥
भूय एवं तुलां तेन स्वयमारोप्य यत्नतः ।
हेमद्वितीयपार्श्वे च द्विजातिभ्यो ददौ स्वयम् ॥
भूयोऽपि तन्मयान्येव सूर्यपात्राणि तेन च ।
प्रभासादिषु तीर्थेषु ब्राह्मणेभ्यो ददौ तदा ॥
गवां च दशवर्णानां विप्र कृत्वा पृथक् पृथक् ।
सहस्रं च सहस्रं च सवत्सानां सुरूपिणाम् ॥
बद्ध्वा कम्बलमाक्रम्य पलान्येकादशैव तु ।
एकैकस्य पृथक्त्वेन दत्तं हेमं तु तेन वै ॥
कारयित्वा सपद्मानि जातरूपमयानि च ।
भ्रमता तीर्थलिङ्गानां मूर्ध्नि दत्तानि तेन वै ॥
तन्मयाभरणैः पूज्य शतशोऽथ सहस्रशः ।
सम्पूज्य तर्पिता विप्रा भूयस्तेनैव मानद ॥
पद्माश्चैव पताकाश्च मालाश्चैव विशेषतः ।
रुद्रादीनां नियुक्ताश्च कारयित्वा गृहे गृहे ॥
उपवीतं च यष्टिश्च मेखलापादुके तथा ।

लेखनीं च मषीपात्रं दत्ता विप्रेषु तेन वै ॥
भानुसोपस्करं कृत्स्नमासनं यानतन्मयम् ।
द्विजेभ्यश्चैव दत्तानि कारयित्वा सहस्रशः ॥
ग्रहाणां देवतानां च कृत्वा रूपाणि भूरिशः ।
न्यस्तानि विधिवत् पूज्य द्विजानां चैव मन्दिरे ॥
काञ्चनीं रोदसीं स्पृष्ट्वा नगोदधिसमन्विताम् ।
पुण्यौषधिवनैर्युक्तां ददौ विप्रेभ्य एव सः ॥
एवमाद्यैरनेकैश्च प्रकारैः कनकं पुरा ।
पापापनुत्तये दत्तं पात्रमासाद्य भूयसः ॥

## श्रीमहाभारते ।

पिण्डदानपरितुष्टस्य प्रहृष्टस्य पितृदत्तोपदेशकथने युधिष्टिरं प्रति भीष्मवाक्यानि

वेदोपनिषदे चैव सर्वकर्मसु दक्षिणा ।
सर्वक्रतुषु चोद्दिश्य भूमिर्गावोऽथ काञ्चनम् ॥
ततः श्रुतिस्तु परमा सुवर्णं दक्षिणेति वै ।
तदिदं सम्यगारब्धं त्वयाऽद्य भरतर्षभ ॥
किन्तु भूमेर्गवां चार्थे सुवर्णं दीयतामिति ।
एवं वयं च धर्मज्ञ सर्वे चास्मत्पितामहाः ॥
तारिता वै तरिष्यन्ति पावनं परमं हि तत् ।
दश पूर्वान् दशान्यांस्तथा तान् तारयन्ति ते ॥
सुवर्णं ये प्रयच्छन्तीत्येवं मां पितरोऽब्रुवन् ।

## रामं प्रति वसिष्ठवाक्यानि ।

सर्वरत्नानि निर्मथ्य तेजोराशिसमन्वितम् ।
सुवर्णमेभ्यो विप्रेन्द्र रत्नं परममुत्तमम् ॥
एतस्मात् कारणाद्देवा गन्धर्वोरगराक्षसाः ।

मनुष्याश्च पिशाचाश्च प्रयता धारयन्ति तत् ॥
मुकुटैरङ्गदयुतैरलङ्कारैः पृथग्विधैः ।
सुवर्णविधृतैरत्र विराजन्ते भृगूत्तम ॥
तस्मात् सर्वपवित्रेभ्यः पवित्रं परमं स्मृतम् ।
पृथिवीं गां च दत्वाऽहं तथाऽन्यदपि किञ्चन ॥
विशिष्यते सुवर्णस्य दानं परमकं विभो ।
अक्षयं पावनं चैव सुवर्णमनुराजते ॥
प्रयच्छ द्विजमुख्येभ्यः पावनं ह्येतदुत्तमम् ।
सुवर्णमेव सर्वत्र दक्षिणासु विधीयते ॥
सुवर्णं ये प्रयच्छन्ति सर्वदास्ते भवन्त्युत ।

नन्दिपुराणे ।

कृष्णलाः पञ्च माषास्तु माषैः षोडशभिः स्मृतम् ।
सुवर्णमेकं तद्दानाद्दाता स्वर्गमवाप्नुयात् ॥

तथा ।

तस्मात् स सर्वथा पात्रे दद्यात् कनकदक्षिणाम् ।
अपात्रे पातयेद्दत्तं सुवर्णं नरकार्णवे ॥
प्रमाददत्तस्तु तन्नष्टं तावन्मात्रं नियोजयेत् ।
अन्यथा स्तेययुक्तः स्याद्धेम्न्यदत्ते विनाशिनि ॥
दानार्थमेव तत् सृष्टं ह्यक्लिष्टं स्वर्गसाधनम् ।
दानात् परः सुवर्णस्य विधिरेव न विद्यते ॥
सुवर्णं परमं दानं सुवर्णं दक्षिणा परा ।
एतत् पवित्रं परममेतत् स्वस्त्ययनं महत् ॥
दश पूर्वान् परान् वंशानात्मानं च विशां पतिः ।
अपि पापशतं कृत्वा दत्वा विप्रेषु तारयेत् ॥

सुवर्णं ये प्रयच्छन्ति नराः शुद्धेन चेतसा ।
देवतास्ते न सन्देहः समस्ता इति नः श्रुतम् ॥
अग्निर्हि देवताः सर्वाः सुवर्णं च हुताशनम् ।
तस्मात् सुवर्णं ददता दत्ताः स्युः सर्वदेवताः ॥
अग्न्यभावे च कुर्वन्ति वह्निस्थानेषु काञ्चनम् ।
सर्ववेदः प्रमाणज्ञाः श्रुतिशास्त्रनिदर्शनात् ॥
ये त्वेनं ज्वालयित्वाऽग्निमादित्योदयनं प्रति ।
दद्युर्वै व्रतमुद्दिश्य सर्वकामानवाप्नुयुः ॥

'व्रतमुद्दिश्य' व्रतमनुसन्धायेत्यर्थः ।

सुवर्णदः स्वर्गलोके कामानिष्टान् समश्नुते ।
विराजो वरसंवीतः परियाति यतस्ततः ॥
विमानेनार्कवर्णेन भास्वरेण विराजितः ।
अप्सरोगणकीर्णेन भास्वता स्वेन तेजसा ॥
हंसबर्हिणयुक्तेन विमानेन नरोत्तम ।
दिव्यगन्धवहः स्वर्गे परिगच्छन्नितस्ततः ॥
तस्मात् स्वशक्त्या दातव्यं काञ्चनं मानवैर्भुवि ।
नातः परतरं लोके सद्यः पापविमोचनम् ॥
सुवर्णस्य तु शुद्धस्य स्वर्णं यस्तु प्रयच्छति ।
बह्वन्यब्दसहस्राणि स्वर्गलोके महीयते ॥

## स्कन्दपुराणे ।

सुवर्णस्य सुवर्णस्य सुवर्णं यः प्रयच्छति ।
सर्वपापविनिर्मुक्तः स्वर्गलोके महीयते ॥
सुवर्णद्वितयं दत्वा अक्षयां गतिमाप्नुयात् ।
दत्वा सुवर्णस्य शतं द्विजेभ्यः श्रद्धयाऽन्वितः ॥

ब्रह्मलोकमनुप्राप्य ब्रह्मणा सह मोदते ।

प्रथमं सुवर्णशब्देन हिरण्यमभिधीयते । अपरेण तु तस्यैव शुद्धवर्णत्वं प्रतिपाद्यते । परिमाणविशेषस्तृतीयेनेति ।

अत्र चायं दानवाक्यप्रयोगः ।

ॐ अद्यामुकस्मिन् देशेऽमुकस्मिन् कालेऽमुकसगोत्रायामुकशर्मणे ब्राह्मणायामुकसगोत्रोऽमुकशर्मा इदं सुवर्णमग्निदैवत्यममुकाय तुभ्यमहं संप्रददे न मम ।

ॐ अमुकसगोत्रायेत्यादि एतत्सुवर्णदानप्रतिष्ठार्थमिदं सुवर्णं दक्षिणां तुभ्यमहं संप्रददे न मम इति ।

सुवर्णदाने रजतं दक्षिणेति केचित् ।

अयं च दानमन्त्रः ।

हिरण्यगर्भगर्भस्थं हेम वीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥

कूर्मपुराणे ।

पलैकं द्विगुणं वाऽपि त्रिगुणं शक्त्यनुक्रमात् ।
कनकं स्यात् सुवर्णेन द्वाभ्यां त्रिभिः सदक्षिणम् ॥
पलादधो वा तत् कुर्याद्दक्षिणा स्याद्यथारुचि ।
वित्ताधिक्यात् पलाधिक्यमिति न्यायनिदर्शनात् ॥

इति सुवर्णदानविधिः ।

आदित्यपुराणे ।

आदित्योदयसम्प्राप्ते विधिमन्त्रपुरस्कृतम् ।
ददाति काञ्चनं यो वै दुःस्वप्नं प्रतिहन्ति सः ॥
ददात्युदितमात्रे यस्तस्य पाप्मा विलीयते ।
मध्याह्ने ददते रुक्मं हन्ति पापमनागतम् ॥

ददाति पश्चिमां सन्ध्यां यः सुवर्णं धृतव्रतः ।
ब्रह्मवाय्वग्निसोमानां सालोक्यमुपयाति सः ॥
सुवर्णमक्षयान् दत्त्वा लोकाँश्चाप्नोति पुष्कलान् ।
यस्तु संज्वलयित्वाऽग्निमादित्योद्‌यनं प्रति ॥
दद्याद्वै व्रतमुद्दिश्य सर्वान् कामान् समश्नुते ।
यं देवमर्चयेत् तेन यस्य चैव प्रयच्छति ॥
तस्य लोके निवसतिर्नित्यं चैव ददाति यः ।

'व्रतमुद्दिश्य' व्रतमनुसन्धायेत्यर्थः ।

सुवर्णदः स्वर्गलोके कामानिष्टान् समश्नुते ।
विरजा वरसंवीतः परियाति यतस्ततः ॥
विमानेनार्कवर्णेन भास्करेण विराजितः ।
अप्सरोगणकीर्णेन भास्वता स्वेन तेजसा ॥
हंसबर्हिणयुक्तेन कामगेन नरोत्तमः ।
दिव्यगन्धवहः स्वर्गे परिगच्छन्नितस्ततः ॥
तस्मात् स्वशक्त्या दातव्यं काञ्चनं मानवैर्भुवि ।
नातः परतरं लोके सद्यः पापविमोचनम् ॥
सुवर्णस्य तु शुद्धस्य सुवर्णं यः प्रयच्छति ।
बहून्यब्दसहस्राणि स्वर्गलोके महीयते ॥

इति नित्यसुवर्णदानविधिः ।

वायुपुराणे ।

हेमदानमथो वक्ष्ये यद्भूतं रेतसा मम ।
अग्निगर्भं पवित्रं च आयुरारोग्यवर्धनम् ॥
निष्कमात्रं पवित्रं वा तदर्धं पादमेव च ।
तण्डुलाढकसम्पूर्णपात्रे पात्रान्तरे न्यसेत् ॥

अर्धाढकतिलैः पूर्णं तस्योपरि घृतान्वितम् ।
तिलार्धमानतः पात्रं घृते तद्धेम विन्यसेत् ॥
गोमयेनोपलिप्तायां भूमौ तत्त्रितयं न्यसेत् ।
विप्रं च तद्धिरण्यं च शम्भुं स्मृत्वा प्रपूजयेत् ॥
आत्मच्छायां हिरण्यं च तिलतण्डुलमेव च ।
विलोक्य दद्याद्विप्राय शिवः सम्प्रीयतामिति ॥
दद्यादनेन विधिना नित्यं मास्ययनेऽपि वा ।
संवत्सरे चामावास्यां मत्सायुज्यं परं यतः ॥
आयुरारोग्यसम्प्राप्तिस्तस्मिन् काले भविष्यति ।
एवं सुवर्णदानेन नित्यं दद्यादनन्तकम् ॥

इति हेमदानविधिः ।

कालिकापुराणे ।

अथायासविनिर्मुक्तो रुद्रोमाकलितं पदम् ।
अनेन विधिना देही गच्छतो याति मे शृणु ॥
गुञ्जां गुञ्जार्धमात्रं वा नियतः प्रतिवासरम् ।
कनकं न्यस्य लिङ्गे तु व्रजेत् तत्पदमुत्तमम् ॥
सर्वसस्यवतीं दद्याद्बीवसीं वा जलान्विताम् ।
रोहिणीं यो द्विजायैव गच्छेत् सोऽपि पदं च तत् ॥
महादानानि च तथा पात्रयुक्तान्यसंशयः ।
दत्त्वा भोगांश्च मोक्षं च प्रयात्येव न संशयः ॥

अग्नेरपत्यं प्रथमं सुवर्णं भूर्वैष्णवी सूर्यसुताश्च गावः ।
लोकत्रयं तेन भवेत् प्रदत्तं यः काञ्चनं गां च महीं च दद्यात् ॥

इति नित्यसुवर्णदानविधिः ।

ब्रह्माण्डपुराणे ।

ऋषयः सत्रमासीना नैमिषारण्यवासिनः ।
उग्रश्रवःसमासीनमपृच्छञ्छौनकादयः ॥
त्वत्तोऽस्माभिः श्रुतानीह धर्माणि विविधानि च ।
वयमिच्छामहे भूयः श्रोतुं दानमनुत्तमम् ॥
इत्येवमुक्तो मुनिभिः सूतपुत्रो महामतिः ।
उवाच दानमाहात्म्यं शतमानमिहाद्भुतम् ॥
नारदेन पुरा पृष्टः परमेष्ठी चतुर्मुखः ।
यदाह दानं तत् सर्वं प्रवक्ष्यामि द्विजोत्तमाः ॥

ब्रह्मोवाच ।

शृणुष्वावहितो दानं ब्रवीमि तव नारद ।
शतमानमिति प्रोक्तं सर्वपापप्रणाशनम् ॥
आयुष्यं श्रीकरं पुण्यमारोग्यं सन्ततिप्रदम् ।
भुक्तिमुक्तिप्रदं स्वर्ग्यं सर्वमाङ्गल्यकारणम् ॥
पुण्यकालेषु सर्वेषु चन्द्रसूर्यग्रहादिषु ।
नित्यं वा कारयेद्दानं जन्मर्क्षेषु विशेषतः ॥
पुण्यदेशेषु सर्वेषु गृहे देवालयादिषु ।
यत्र साधनसम्पत्तिस्तत्र दानं समाचरेत् ॥

गव्येन भूमिं शकृता जलेन आलिख्य मध्ये सिततण्डुलैश्च ।
सरोरुहं केसरभूषणाढ्यं सकर्णिकं चाष्टदलं विलेख्य ॥
तस्मिन् हिरण्यं शतमानमात्रं निधाय तस्योपरि तं विचिन्त्य ।
ब्रह्माणमीशं कमलासनस्थमाराध्य गन्धादिभिरादरेण ॥
विप्रं तथा वेदविदं विचिन्त्य विरिञ्चिबुद्ध्या तु समर्चयित्वा ।
दद्यात् सुवर्णं शतमानमस्मै सम्प्रीयतामात्मभूरित्युदीर्य ॥

योऽसौ दानं शतमानं हिरण्यं दद्यादायुः सर्वमेवैति चोक्तम् ।
अतः कुर्यान्नरदैतत् सकृद्वा नित्यं मासं हायनं शक्तितो वा ॥
जाम्बूनदं जातरूपं सुवर्णं काञ्चनं तथा ।
हिरण्यं चेति शक्त्या तु क्रमादेतानि नारद ॥

इति शतमानदानविधिः ।

अथाह बौधायनः ।

शतमानमक्षयेण सुवर्णेन मितं च यत् ।
तत् कांस्ये निक्षिपेत् सम्यक् तिलाढकसमन्विते ॥
कांस्यपात्रपरीमाणं पलानामष्टकं विदुः ।
तिलानामुपरि स्थाप्या अक्षताः शुभ्रशालयः ॥
आवाहयित्वा देवेशं द्युमणिं भानुमव्ययम् ।
गन्धमाल्यैः सुरभिभी रक्तमाल्यैर्विशेषतः ॥
उपचारैः षोडशभिरर्चयेद्भानुमव्ययम् ।
अष्टाक्षरेण मन्त्रेण सावित्रेणातिभक्तितः ॥
यद्वा सवितृलिङ्गेन मन्त्रेण प्रणिपत्य तु ।
ब्राह्मणाय ततः पूजां कुर्याद्गन्धाक्षतैः शुभैः ॥
अन्यैश्च विविधैः सम्यक् स्वकुटम्बाविरोधतः ।
तस्मै दान्ताय सत्कृत्य स्वाचारायात्मवेदिने ॥
प्राङ्मुखाय स्वयं चोदङ्मुखः प्रयतमानसः ।
मन्त्रेणानेन सङ्कल्प्य पापव्याधिविमुक्तये ॥
पद्मोद्भवः पद्मकरः सप्ताश्वरथवाहनः ।
शतमानेन दत्तेन तुष्टः सर्वजगद्गुरुः ॥
इह जन्मनि यत् पापमन्यजन्मनि यत् कृतम् ।
तत् प्रत्ययाप्रत्ययाभ्यां तत्सर्वं क्षपयत्वसौ ॥

दानमन्त्रः ।

तत: क्षमाप्य तं विप्रं प्रणिपत्य विसर्जयेत् ।
यथा प्रसन्नो भवति तथा सर्वं प्रकल्पयेत् ॥

इति पापरोगहरव्रतमानदानविधिः ।

## वह्निपुराणे इन्द्र उवाच ।

भगवन् सर्वमाख्यातं वृषदानक्रियाफलम् ।
पृच्छाम्यन्यदहं पुण्यं सदाऽक्षयफलप्रदम् ॥
दानं त्रैलोक्यनाथस्य हरप्रीतिविवर्धनम् ।
तद्वदस्व मुने येन दत्तेनेशः प्रतुष्यति ॥
दिक्पालात्मा च सन्नित्यः सदानन्दमयो हरिः ।
तत् कथं भगवन् भक्तो भवेद्धेममयो हरिः ॥
केन दानेन तपसा व्रतेन यजनेन वा ।
मुच्यते पातकाद्घोरादाजन्ममरणान्तिकात् ॥
कथं भवेन्नरः श्रीमान् धीमान् पुत्री प्रतापवान् ।
प्रमितायुस्तथाऽऽरोग्यः सकलैश्वर्यभाक् सुधीः ॥
कस्य जन्मायुतान्तेऽपि दानस्यान्तो न विद्यते ।
केन तत् पदमाप्नोति विष्णोर्यत् परमं पुमान् ॥
श्रोतुमर्होऽस्मि वै ब्रह्मन् वैष्णवं मन्यसे यदि ।
तत् प्रसीदाखिलं दानतत्त्वमाचक्ष्व मे गुरो ॥

## ब्रह्मोवाच ।

आनन्दो ब्रह्मणो रूपं नित्यं वेदेषु गीयते ।
सर्वावासो विभुः साक्षादानन्देन व्यवस्थितः ॥
तस्माद्दानमिदं पुण्यं वेद्म्यानन्दनिधिं परम् ।
विप्रायाच्युतरूपाय दद्यानन्दमुत्तमम् ॥

दानेनानेन ते शक्र धातुत्रययुतेन च ।

इन्द्र उवाच ।

विधानं ब्रूहि मे ब्रह्मन् दानस्यास्य महानिधेः ।
यथा देयं विशेषेण विष्णोरानन्दकारकम् ॥

ब्रह्मोवाच ।

पुण्यां तिथिं प्राप्य तु पौर्णमास्यां तथोपरागे शशिसूर्ययोर्वा ।
चतुर्युगादिष्वयनद्वये वा प्रबोधने प्रस्वपनेऽथ विष्णोः ॥
कुर्याद्यथौदुम्बरमेव कुम्भं हिरण्यभारेण यथाऽऽत्मशक्त्या ।
तथा विधानं च सुराजतं स्याद्धिरण्यभारेण तु पूरयेत् तत् ॥
तदर्धतोऽर्धेन तदर्धतो वा स्वशक्तितः स्वर्णपलैः शतेन ।
तदर्धमर्धेन तु वित्तशक्त्या पलत्रयादूर्ध्वमपि प्रकुर्यात् ॥
तत् ताम्रभाण्डे कनकं निधाय सवज्रनीलोत्पलपद्मरागम् ।
समुक्तवैदूर्यसविद्रुमं च तद्राजतं पात्रमधोमुखं स्यात् ॥
एवं तु तं भद्रनिधिं सुविद्वान् कृत्वाऽऽसने प्रावरणोपयुक्ते ।
कुशोत्तरे दर्पणचामराढ्ये रूपादुकोपानहच्छत्रयुक्तम् ॥
तत् क्षौमवस्त्रोत्तमयुग्मयुक्तं संपूजयेन्मन्त्रवरैरधैतैः ।
आदौ तु पञ्चामृतमाद्यविष्णुं संस्नाप्य संसारहरं समर्च्य ॥
तथेश्वरं पावकमेव हुत्वा आमन्त्रयेद्भद्रनिधिं ततस्तम् ।
श्रीखण्डकर्पूरसकुङ्कुमेन पञ्चाक्षरं नाम श्रियः प्रलिख्य ॥
नमस्तथोङ्कारयुतं च पात्रे तद्राजतेऽप्येवमथार्चयेत ।
त्वया समस्तामरसिद्धयक्षविद्याधरेन्द्रोरगकिन्नरेन्द्रैः ॥
गन्धर्वविद्याधरदानवेन्द्रैर्युतं वृतं विश्वमिदं नमस्ते ।
समस्तसंसारकरी त्वमेव विभोः सदानन्दमयी च माया ।
समस्तकल्याणनिधिः समाधिः हरिप्रिये भद्रनिधिर्नमस्ते ॥

एवं पूज्य विधानेन ततो विप्रमथार्चयेत् ।
किरीटाङ्गदनिष्काग्र्यकुण्डलाङ्गुलिभूषणैः ॥
अलङ्कृत्य हरिं यद्वत् पीताम्बरधरं ततः ।
पूजयेदच्युतं ध्यात्वा मन्त्रेणानेन भक्तिमान् ॥
भूदेवोऽसीत्यतो नित्यं नित्यानन्दमयो हरे ।
हर मे दुष्कृतं कृष्ण कृपाकर नमोऽस्तु ते ॥
भूदेव भगवद्धर्म भवभङ्गकरेश्वर ।
भवभूतिकरो जिष्णो भव विष्णुर्नमोऽस्तु ते ॥
एवं पूज्य हृदि ध्यात्वा तं द्विजं विष्णुरूपिणम् ।
ततो भद्रनिधिं दद्यान्मन्त्रेणानेन मानवः ॥
स्वगोत्रोच्चारणेनादौ वपुर्नाम महात्मनः ।
यवदर्भतिलैः सार्धमुदकं संपरित्यजेत् ॥
पितृसन्तारणार्थाय नित्यानन्दविवृद्धये ।
सर्वाघौघविनाशाय विष्णोर्दानं मया कृतम् ॥
तदनेन सरत्नेन धातुत्रययुतेन च ।
सक्षौमाम्बरयुक्तेन सादर्शपादुकेन च ॥
आसनेन सच्छत्रेण चामरोपानहेन च ।
सदानन्दविधानेन प्रीयतां विष्णुरीश्वरः ॥
एवमुच्चार्य तं दद्याद्द्विजाय हरिरूपिणे ।
गोप्येन विधिना दद्याद्धेमसङ्ख्यां न कीर्त्तयेत् ॥
प्रकीर्त्तिते कोटिगुणायुतं फलं प्रगोपिते कल्पगुणैर्न संशयः ।
इतीदमाम्नाय न कीर्त्तयेत् सुधीर्निधानमध्ये निहितं च यद्वसु ॥
एवंकृते स्यान्मनुजः कृतात्मा तपेन्न वा स्यान्मरणं कदाचित् ।
प्रयाति विष्णोः पदमव्ययं तत् शिवात्मकानन्दमयं ससङ्ख्या ॥

इति भद्रनिधिदानविधिः ।

तस्मिन्नेव पुराणे । गरुड उवाच ।

प्रभो प्रसीदाच्युत विश्वभावन प्रतापनित्योऽसि सुरारितापन ।
प्रयच्छ मे प्रश्नमहं करोमि यं मुकुन्द तस्योत्तरमुत्तमं विभो ॥
कथं जगन्नाथ जनो निरन्तरं महोत्सवी स्याद्विजयी सुखी सदा ।
सुसंपदानन्दपदोऽजरोऽमरो निरामयो येन शुभेन तं वद ॥
विभुस्तथाऽऽकर्ण्य वचो गरुत्मतः प्रसन्नरूपः प्रतिवाक्यमाह तम् ।
सुपर्ण यत् प्रष्टुमिदं त्वया कृतं शृणुष्व तत् साधु न दानतः परम् ॥
इहाप्यमुष्मिन्नपि संभृतो निधिः क चिन्न केनापि कदा चिदाप्यते ।
युगायुतैः कल्पशतायुतैरपि प्रभुञ्जतो दातुरहो न हीयते ॥
गतिं च यां यामपि याति दाता योनिं तथाऽमुत्र तथेह वाऽपि ।
तां तामनुप्रैति तु दत्तमन्ते सुश्रद्धया यद्द्विजपुङ्गवेभ्यः ॥
तस्मान्निधानं शृणु सर्वदानतः प्रभावदं नित्यफलप्रदं च ।
ऐश्वर्यदं मोक्षदमक्षयं यद्दातुस्त्रयीभूतमनेकरत्नम् ॥

कारयेत् कार्त्तिकान्ते वा माघ्यां वा माधवेऽपि वा ।
अयने विषुवे वाऽपि मन्वादिषु युगादिषु ॥
चन्द्रसूर्योपरागे वा स्वशक्त्योदुम्बरं घटम् ।
पिधानं राजतं तद्वन्मध्ये सौवर्णमुत्सृजेत् ॥
नानारत्नवरापूर्णं नानानानाभिरावृतम् ।
हेमराजतताम्रोत्थैः सरित्कैरपि पूरितम् ॥
नानानानाशतादूर्ध्वमयुतादपि शक्तितः ।

एको नानाशब्दो बहुप्रकारवचनः । द्वितीयं नानेति महाराष्ट्रभाषायां नाणकम् । तत्रश्च नानारूपनाणकैः पूरयेदित्यर्थः ।

शक्त्या पलसहस्रेण शतेनार्धशतेन वा ।
तदर्धार्धेन वा राजन् पलाद्धीनं न कारयेत् ॥

कार्यं तद्विजितं हेम्ना वित्तशाठ्यमकुर्वता ।
राजतेनाथ ताम्रेण रत्नैर्वा वस्त्रसंवृतम् ॥
धान्यं नानोपरि स्थाप्य* कल्पोक्तैरर्चयेत् पदैः ।
पौराणिकं पुरस्कृत्य स्वयं वा तदनुज्ञया ॥
कृतक्रियोऽग्निसान्निध्ये विष्णोरीशस्य वाऽण्डज ।
इमं समुच्चरेन्मन्त्रं कुशपाणिः प्रसन्नधीः ॥
ॐ नमः सर्वदानन्द सर्वसम्पत्तिवर्धन ।
वर्धयास्मान् समृद्ध्येह आयुषा यशसा श्रिया ॥
नमस्तेऽनन्त सन्तान सदानन्द सदोदय ।
सदोदितं कुरुष्वेह सन्तत्या मां धनायुषा ॥
नमो नमः पद्मनिधे धनेश शतक्रतो शङ्कर नैर्ऋतेश ।
शमं नयास्मद्दुरितं दुरिष्टमभीष्टदो मे भव शङ्करेश ॥
नमो नमः पाशधराप्रमेय नमोऽस्तु रामाय सुनामधेय ।
नमः समीराय हुताशनाय नमोऽस्त्वनन्ताय कजासनाय ॥
नमः सुरश्रेष्ठ हरीश्वराय नमोऽस्तु सावित्रि शिवे श्रियेति ।
सरस्वति प्रीतिरतिक्रियेति सतुष्टिपुष्टिस्मृतिशान्तिकीर्त्ते ॥
सर्वामराणां निधिरप्रमेय त्वमेव वै पितृमुनिरीश्वराणाम् ।
आधारभूतोऽसि चराचरस्य विश्वस्य यस्मात् प्रणतो ह्यतस्त्वाम् ॥
नमोऽस्तु सौन्दर्यनिधिः सुरेन्द्र नमोऽस्तु गाम्भीर्यनिधिः समुद्रः ।
नमो नमः कान्तिनिधान इन्दोस्तेजोनिधे त्वां प्रणतोऽस्मि भानो ॥
नमः पद्माय भद्राय नमस्ते स्वस्तिकाय च ।
नमः शङ्खाय मणये मणिभद्राय ते नमः ॥

---

* नानाधान्योपरि स्थाप्य इति क्व चित् पाठः ।

नमो नन्दिविवर्त्ताय नन्दावर्त्ताय वर्त्तिने ।
नमः कटककर्णाय कण्ठावर्त्ताय ते नमः ॥
नमो नन्दप्रतिष्ठाय नमो हेमप्रियाय च ।
नमो हिरण्यगर्भाय नित्यानन्दाय ते नमः ॥
एवं पूज्य विधानेन नित्यानन्दनिधिं सुधीः ।
ससिद्धार्थकदूर्वाभिः सकुशाक्षतचन्दनैः ॥
तिललाजैः समं पुण्यं भूमावुदकमुत्सृजेत् ।
मन्त्रेणानेन विधिवत् कल्पोक्तेन खगेश्वर ॥
अद्येह पुण्यकालेऽस्मिन् द्विजदेवाग्निसन्निधौ ।
यशःश्रेयोऽभिवृद्ध्यर्थं मातापित्रोस्तथाऽऽत्मनः ॥
पुराणन्यायमीमांसावेदवादिभ्य एव च ।
नमो विद्याविक्रयिभ्यो नानागोत्रेभ्य एव च ॥
विप्रेभ्योऽनेकशर्मभ्यो नित्यानन्दकरं* परम् ।
अहं सम्प्रददे तेभ्यो नानानानायुतेन च ॥
सस्वर्णरौप्यताम्रेण सरत्नेन सवाससा ।
सोपस्करेण पुरुषो ब्रह्मविष्णुशिवात्मकः ॥
प्रीयतां निधिदानेन श्रीयज्ञपुरुषोऽच्युतः ।
एवमुत्सृज्य उदकं विप्रेभ्यः प्रतिपादयेत् ॥
संविभज्य यथाशास्त्रं न कं चिदपमानयेत् ।
महादानमिदं यस्मात् तस्मादेकोऽपि नार्हति ॥
अथान्ये के चिदिच्छन्ति समस्तविधिपारगाः ।
यज्ञदानव्रतानां वा सोऽप्येकोऽर्हति तद्गृहे ॥

---

* नित्यानन्दनिधिमिति पुस्तकान्तरे पाठः ।

एवं यः कुरुते दानं नित्यानन्दनिधेः परम् ।
एवं सम्पदमाप्नोति स संसारे निरन्तरम् ॥
दानानामप्यशेषाणामनन्तफलमुच्यते ।
नित्यानन्दविधानस्य प्रदानादपवर्गभाक् ॥
यश्चैवं सकृदत्रैव सदानन्दविधानकृत् ।
स करोत्यसकृद्राज्यमक्षये वेधसः पदे ॥
यथाकथञ्चिदत्रैति स्वकर्मगुणसंक्षयः* ।
तदाऽखिलमहीराज्यं प्राप्नोति व्रतसंज्ञके ॥
पुनः स्वधर्मसंयुक्तो राज्यं कृत्वा महानुगः ।
प्राप्नोति पदमैशानं नित्यमक्षयमव्ययम् ॥
तस्मादेत्य पुना राज्यं लभेद्वैद्याधरे पदे ।
आकल्पमप्यनल्पश्रीः श्रीनिधानप्रदानता ॥
पुनः प्रयाति कल्पान्ते वैष्णवं पदमव्ययम् ।
गत्वाऽपि योगिनो यत्र प्राप्नुवन्ति पुनः परम् ॥
एतद्भद्रनिधानाख्यमाख्यातं वैनतेय ते ।
मया प्रीत्या प्रयत्नेन† किमन्यत् कथयामि ते ॥
नित्यानन्दनिधेर्दानान्नित्यानन्दोऽभिजायते ।
यः कुर्यात् सोऽच्युतायुः स्याद्दीर्घसन्तानमाप्नुयात् ॥
यस्तु संकीर्त्तयेद्भक्त्या यः शृणोति समाहितः ।
सदीर्घमायुराप्नोति मुच्यते सर्वकिल्बिषैः ॥
इति खगेन्द्रगदितं दयितं महतां
तव मयाऽद्भुततमं शमनं त्वघसाम् ।

---

* स्वक्षय इति क्वचित् पाठः ।
† प्रसन्नेनेति पुस्तकान्तरे ।

सुलभमवाप्य काञ्चनमिहाचरते
पदमुपैति वैष्णवमहो सुलभम् ॥

इत्यानन्दनिधिदानविधिः ।

अथ स्कन्दपुराणे ।

यः प्रयच्छति विप्राय रजतं वाऽपि निर्मलम् ।
स विधूयाशु पापानि स्वर्गलोके महीयते ।
रूपवान् सुभगः श्रीमानिह लोके च जायते ॥

मत्स्यपुराणे ।

पितॄणां राजतं पात्रमथ वा रजतान्वितम् ।
शिवनेत्रोद्भवं यस्मात् तस्मात् तत् पितृवल्लभम् ॥
अमङ्गलं च यज्ञेषु देवकार्ये च वर्जितम् ।
रजतं दक्षिणामाहुः पितृकार्येषु सर्वदा ॥

इति रजतदानविधिः ।

अथाश्वदानविधिः । तत्र स्कन्दपुराणे ।

अश्वं यस्तु प्रयच्छेद्धै हेमचित्रं सुलक्षणम् ।
स तेन कर्मणा देवि गान्धर्वं लोकमश्नुते ॥

महाभारते ।

सर्वोपकरणोपेतं युवानं दोषवर्जितम् ।
योऽश्वं ददाति विप्राय स्वर्गलोके महीयते ॥

तथा ।

यावन्ति रोमाणि हये भवन्ति हि नरेश्वर ।
तावतो वाजिदा लोकान् प्राप्नुवन्तीह पुष्कलान् ॥

कालिकापुराणे ।

अश्वं वा यदि वा युग्मं शोभने वाऽथ पादुके ।
ददाति यः प्रदानं वै ब्राह्मणेभ्यः सुसंयतः ॥
तस्य दिव्यानि यानानि रथा ध्वजपताकिनः ।
दुष्टः पन्था न चैवेह भविष्यति कदा चन ॥

कूर्मपुराणे ।

अश्वं तन्मूल्यमथ वा कनीयो मध्यमोत्तमम् ।
दद्याद्वित्तानुसारेण तारागणपरिच्छदम् ॥

'तारागण' इति तारानुकार्यप्रवालङ्कारविशेषः ।

शफैः पञ्चपलै रौप्यैः सुवर्णालङ्कृतं क्रमात् ।
सदक्षिणं सवस्त्रं च ब्राह्मणायाग्निहोत्रिणे ॥
स्वर्णदः प्राप्नुयात् स्वर्गमश्वसालोक्यमश्वदः ।
श्रद्धा देशश्च कालश्च सर्वदानेषु शस्यते ॥

दानमन्त्रस्तु मत्स्यपुराणे ।

उच्चैःश्रवास्त्वमश्वानां राज्ञां विजयकारकः ।
सूर्यवाह नमस्तुभ्यमतः शान्तिं प्रयच्छ मे ॥

कनीयस्त्वादि त्रैविध्यं सुवर्णदानवदवधेयम् ।

इत्यश्वदानम् ।

गारुडपुराणे ।

ब्रह्महत्यादिपापानि उपपापानि यानि च ।
तानि सर्वाणि नश्यन्ति हयमेधेन निश्चितम् ॥
न कलौ क्रियते यज्ञो ह्यश्वमेधोऽपि गोसवः ।
नरमेधोऽक्षता नारी देवरात् पुत्रसन्ततिः ॥

गर्हितं सहकं ह्येतत् राजसूयं कमण्डलुः ।
अश्वमेधमखं यस्तु कलौ कर्त्तुमनीश्वरः ॥
अश्वदानं तु तेनेह कर्त्तव्यं विधिपूर्वकम् ।
विधिं तस्य प्रवक्ष्यामि ब्रह्मणा निर्मितं पुरा ॥
श्वेतमश्वं शुभं स्नातं हेमपर्याणभूषितम् ।
रौप्यैस्तु कटकैः शुद्धैः करिदन्तोपशोभितम् ॥
वज्रनेत्रं खुरैस्ताम्रैः क्षौमपुच्छं सुवाससम् ।
शुभ्रेण पट्टकेनैव संवृतं स्वायुधान्वितम् ॥
धान्यरत्नोपरिस्थं तु बद्धकक्षं सुपट्टकम् ।
एवं सुतेजसं चाश्वं ब्राह्मणाय निवेदयेत् ॥
सुरूपाय सुवृत्ताय विदुषे च सुबुद्धये ।
दातव्यो मन्त्रमुख्याय दातव्यो भास्कराय च ॥
मन्वादौ च युगादौ च अयने विषुवे तथा ।
चन्द्रसूर्यग्रहे चैवमश्वं दत्त्वा सुखी भवेत् ॥

## अथ पूजामन्त्रः ।

मार्त्तण्डाय सुवेगाय काश्यपाय त्रिमूर्त्तये ।
जगद्बीजाय*सूर्याय त्रिवेदाय नमोऽस्तु ते ॥

अत्र अमुकसगोत्रायेत्यादि इममश्वं सुवर्णतिलकालङ्कृतललाटं ग्रैवेयकसुपर्याणान्वितं गन्धपुष्पाद्यलङ्कृतं रौप्यकटकरत्नोपशोभितं वज्रनेत्रं ताम्रखुरं क्षौमपुच्छं सुवाससं शुभ्रपट्टकसंवृतं स्वायुधान्वितं धान्यरत्नोपरिस्थितं बद्धकक्षं सुपट्टकं स्वर्गकामस्तुभ्यमहं सम्प्रददे । अमुकगोत्रायेत्यादि एतदश्वदानप्रतिष्ठार्थं दक्षिणामिदं सुवर्णं तुभ्यमहं सम्प्रददे ।

---

* जगद्द्वीपायेति न· प्र· पु· पाठः ।

एवंसमुच्चरेन्मन्त्रं कर्णे दद्यात् तिलोदकम् ।
महार्णवे समुत्पन्न उच्चैःश्रवसपुत्रक ॥
मया त्वं विप्रमुख्याय दत्तो हय सुखी भव ।
इमं विप्र नमस्तुभ्यमश्वं ते प्रतिपादितम् ॥
प्रतिगृह्णीष्व विप्रेन्द्र मया दत्तं सुशोभनम् ।
कर्णे समर्पणं कृत्वा विप्रहस्ते जलं क्षिपेत् ॥
पश्चादश्वपुरो गच्छेत् पदानां सप्तसप्ततिम् ।
भास्करं मनसि ध्यात्वा आलोक्य स्वगृहं व्रजेत् ॥
श्वेतमश्वं तु यो दद्यात् फलं दशगुणं लभेत् ।
वडवां च तथा दत्त्वा तुल्यमेव फलं लभेत् ॥
एवं कृते नरव्याघ्र सूर्यलोकं व्रजेन्नरः ।
ब्रह्महत्यादिपापानि तथाऽन्यानि बहून्यपि ।
तानि सर्वाणि नश्यन्ति दत्त्वा ह्यश्वं विधानतः ॥
त्रिंशत् पूर्वाँस्त्रिंशदपराँस्त्रिंशच्चैव परावरान् ।
सम्यग्दत्त्वाऽश्वदः पुत्रो नरकादुद्धरेत् पितॄन् ॥
नृत्यन्ति पितरः स्वर्गे वल्गन्ति च हसन्ति च ।
वाजिप्रदः कलौ जातस्ततो वैमानिका वयम् ॥
वाजिप्रदेन पुत्रेण उद्धृता नरकार्णवात् ।
हयदानफलं ह्येतच्चल्लोका अक्षया नृणाम् ॥

इति श्वेताश्वदानविधिः ।

आदित्यपुराणे । दुर्वासा उवाच ।

दानधर्मास्त्वया देव प्रोक्ता विस्तरतो मम ।
अश्वानां चैव नागानां दानं चैव दिवाकर ॥

भानुरुवाच ।

तपःशीलगुणोपेते पात्रे वेदस्य पारगे ।
सुभगे परिपूर्णाङ्गे अग्निहोत्रपरायणे ॥
परिपूर्णाङ्गमुदितमुदासीनसमप्रभम् ।
सुविभक्तं सुकेशं तं सुखक्षामं सुशोभनम् ॥
सर्वालङ्कारशोभाढ्यं दिव्यस्रगनुलेपितम् ।
सर्वोपकरणैर्युक्तं सर्वलक्षणसंयुतम् ॥
दन्तेषु शुक्तिकास्तस्य प्रवालमधरोष्ठयोः ।
दद्याद्वज्रं तु नेत्राभ्यां वैदूर्यं चाप्यसम्भवे ॥
हेमरूप्यं च हस्ताभ्यां ताम्रं पादेषु विन्यसेत् ।
अण्डनिर्माणजैर्वस्त्रैर्विचित्रैः परिवेष्टयेत् ॥
सुगन्धैश्चैव गन्धैश्च पुष्पैश्चापि विभूषयेत् ।
वाहनाधिपतिः श्रीमान् यथेष्टं विनिवेदयेत् ॥
आदित्याभिमुखं कृत्वा ब्राह्मणेभ्यो निवेदयेत् ।
विविधैर्भक्ष्यभोज्यैश्च वलिं तत्रोपकल्पयेत् ॥
भोजयेत् तत्र विप्रांस्तु सूर्यभक्तान् विशेषतः ।
प्रीयतां मिहिरो नित्यं भुक्त्वा चोत्थापयेत् द्विजान् ॥
अनेन विधिना कुर्यादश्वदानं महामुने ।
यावन्ति देहरोमाणि तस्य सूतिश्च यावती ॥
तावद्युगसहस्राणि सूर्यलोके महीयते ।

इत्यपरोऽश्वदानविधिः ।

अथ शिवधर्मे ।

शिवायाश्वमलङ्कृत्य यः पर्वणि निवेदयेत् ।

सोऽश्वमेधस्य यज्ञस्य फलमष्टगुणं लभेत् ॥

इति शिबिकाप्रदानविधिः ।

## अथ तिलदानमुच्यते ।

## आदित्यपुराणे । दुर्वासा उवाच ।

कथं तिलाः समुत्पन्नाः कथं च अवतारिताः ।
एवं मे संशयं देव छेत्तुमर्हस्यशेषतः ॥

## भानुरुवाच ।

शृणुष्वावहितो विप्र सर्वं वक्ष्याम्यशेषतः ।
पुरा कृतयुगे विप्र पितरः सर्व आगताः ॥
तपश्चरन्ति विपुलं तिलार्थं नात्र संशयः ।
दिव्यं वर्षसहस्रं तु निराहारास्तपस्विनः ॥
तपः कुर्वन्ति विपुलं तिलार्थं मुनिसत्तमाः ।
तथा परिवृताः सर्वैर्देवैश्चैव विशेषतः ॥
प्रजापतिः पितृपतिः साक्षादेत्य पितामहः ।
परितुष्टोऽस्मि वो दद्मि ब्रूत यच्चेप्सितं हि वः ॥

## पितर ऊचुः ।

तिलान् देह महाभाग काङ्क्षितान् वै न संशयः ।
तिलैर्विना न जीवामो नातिलस्तिष्ठते दिवि ॥

## पितामह उवाच ।

गच्छध्वं वै तिला दत्ताः सर्वेषां वो द्विजोत्तमाः ।
परितुष्टाश्च पितरस्तिललाभात् प्रजापतेः ॥
तिलान् यस्तु प्रयच्छेत पितॄणां च विशेषतः ।
अग्निष्टोमसहस्रस्य फलं प्राप्नोति मानवः ॥

वैशाख्यां पौर्णमास्यां वा तिलान् क्षौद्रेण संयुतान् ।
यः प्रयच्छेद्द्विजाग्रेभ्यः सर्वपापैः प्रमुच्यते ॥
कृषिभागी बहुधनो जायते नात्र संशयः ।
धर्मराजाय च तिलान् दत्त्वा चैवेह मानवाः ॥
यमलोकं न पश्यन्ति ब्रह्मलोकं व्रजन्ति ते ।
ज्यैष्ठे मासि तिलान् दत्त्वा पौर्णमास्यां विशेषतः ॥
अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ।
माघे मासि तिलान् यस्तु ब्राह्मणेभ्यः प्रयच्छति ॥
सर्वसत्त्वसमाकीर्णं नरकं न स पश्यति ।
सर्वकामैः स यजते यस्तिलैर्यजते पितॄन् ॥
न चाकामेन दातव्यं तिलैः श्राद्धं कथं चन ।
महर्षेः कश्यपस्यैते गात्रेभ्यः प्रसृतास्तिलाः ॥
ततो दिव्यं गता भावं प्रदानेषु तिलाः प्रभो ।
पौष्टिका रूपकाश्चैव तथा पापविनाशनाः ॥
तस्मात् सर्वप्रदानेभ्यस्तिलदानं विशिष्यते ।
आपस्तम्बश्च मेधावी शङ्खश्च लिखितस्तथा ॥
महर्षिर्गौतमश्चापि तिलदाने सदा रताः ।
तिलहोमरता विप्राः सर्वे संयतमैथुनाः ॥
सर्वेषामेव दानानां तिलदानं परं स्मृतम् ।
अक्षयं सर्वदानानां तिलदानमिहोच्यते ॥

महाभारते ।

तिलाः पवित्रमतुलं प्रवदन्ति महर्षयः ।
प्रदाने यत् फलं तेषां तन्मे ब्रूहि पितामह ॥

भीष्म उवाच ।

सर्वेषामेव दानानां तिलदानं परं स्मृतम् ।
सर्वपापहरं तद्धि पवित्रं स्वर्ग्यमेव च ॥

मत्स्यपुराणे ।

विष्णोर्देहसमुद्भूताः कुशाः कृष्णतिलास्तथा ।
धर्मस्य रक्षणायालमेतत् प्राहुर्दिवौकसः ॥

व्यासः ।

महर्षेः कश्यपस्यैते गात्रेभ्यः प्रसृताः पुरा ।
ते च दिव्यं गता भावं प्रदानेषु तिलाः स्मृताः ॥
तिला भक्षयितव्याश्च होतव्याश्च विधानतः ।
विप्रेभ्यश्च प्रदातव्याः श्रेयस्कामैर्नरैरिह ॥

संवर्त्तः ।

नित्ये नैमित्तिके काम्ये तिलान् दत्वा स्वशक्तितः ।
प्रजावान् पुत्रवान् नित्यं धनवान् जायते नरः ॥

वशिष्ठः ।

नित्यं दाता तिलानां च नरः स्वर्गे महीयते ।

महाभारते ।

ददतो जुह्वतश्चैव हरतः प्रतिगृह्णतः ।
तिले तिले तिलद्रोणसौवर्णानां युधिष्ठिर ॥
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ब्राह्मणस्य च संवादं यमस्य च महात्मनः ॥
मध्यदेशे महाग्रामो ब्राह्मणानां बभूव ह ।
गङ्गायमुनयोर्मध्ये यामुनस्य गिरेरधः ॥
विद्वांसस्तत्र भूयिष्ठा ब्राह्मणाश्चावसन् सदा ।

अथ प्राह यमः किंचित् पुरुषं कृष्णपिङ्गलम् ॥
रक्ताक्षमूर्ध्वरोमाणं काकजङ्घाक्षिनासिकम् ।
गच्छ त्वं ब्राह्मणग्रामं गत्वा ब्राह्मणमानय ॥
अगस्तिगोत्रं तं विप्रं नामतश्चापि शाल्मलिम् ।
शमे निविष्टं विद्वांसमध्यापकसमावृतम् ॥
मा चान्यमानयेथास्त्वं सगोत्रं तस्य पार्श्वतः ।
स हि तादृग्गुणित्वेन तुल्योऽध्ययनजन्मना ॥
आकृत्या च तथा वृत्तैः समस्तेनैव धीमता ।
तमानय यथोद्दिष्टं पूजा कार्या हि तस्य मे ॥
स गत्वा प्रतिकूलं तच्चकार यमशासनम् ।
तमाकृष्यानयामास प्रतिषिद्धो यमेन यः ॥
तस्मै यमः समुत्थाय पूजां कृत्वा च धर्मवित् ।
प्रोवाच नीयतामेष सभामानीयतामिति ॥
एवमुक्ते तु वचने धर्मराजेन स द्विजः ।
उवाच धर्मराजं तं निविष्टो गमनेन वै ॥
यो मे कालो भवेच्छेषस्तं वसेयं त्वया सह ।

यम उवाच ।

गच्छ विप्र त्वमद्यैव निलयं स्वं महामुने ।
ब्रूहि वादं यथास्वैरं करवाणि किमित्युत ॥

ब्राह्मण उवाच ।

यत् कृत्वा सुमहत् पुण्यं स्वर्गे स्यां ब्रूहि तन्मम ।
सर्वस्य हि प्रमाणं त्वं धर्माधर्मविनिश्चये ॥

यम उवाच ।

शृणु तत्त्वेन विप्रर्षे प्रदानविधिमुत्तमम् ।

तिलाः परमकं दानं पुण्यं चैवेह शाश्वतम् ॥
तिलाः पवित्रमतुलं प्रवदन्ति महर्षयः ।
तान् प्रयच्छस्व विप्रेभ्यो विधिदृष्टेन कर्मणा ॥
वैशाख्यां पौर्णमास्यां च अयने चोत्तरायणे ।
तिला भक्षयितव्याश्च सदात्मालम्भनं च तैः ॥
कार्यं सततमद्भिर्वै श्रेयः सर्वात्मना गृहे ।
तिलान् श्राद्धे प्रशंसन्ति दानमेतदनुत्तमम् ॥
तिला नित्यं प्रदातव्या यथाशक्ति द्विजर्षभ ।
नित्यदानात् सर्वकामफलं निर्वर्त्तयेत् पुनः ॥
शृणु धर्मरहस्यं च यदद्य कथयामि ते ।
तिलाः पवित्रमतुलं मा तेऽभूदत्र संशयः ॥
तिलेभ्यः प्राप्यते स्वर्गः स्वर्गान्मोक्षस्तथैव च ।

विष्णुधर्मे ।

तिला गावो हिरण्यं च अन्नं कन्या वसुन्धरा ।
दत्तान्येतानि विधिवत् तारयन्ति महाभयात् ॥

तथा ।

मूलर्क्षगे शशधरे माघे मासि प्रजापते ।
एकादश्यां कृष्णपक्षे सोपवासो जितेन्द्रियः ॥
द्वादश्यां तु तिलान् दत्त्वा सर्वपापात् प्रमुच्यते ।
तिलोद्वर्त्ती तिलस्नायी तिलहोमी तिलोदकी ॥
तिलदाता च भोक्ता च षट्तिलाः पापनाशनाः ।
असकृत् षट्तिली भूत्वा सर्वपापविवर्जितः ॥
त्रिंशद्वर्षसहस्राणि स्वर्गलोके महीयते ।

## कूर्मपुराणे ।

कृष्णाजिने तिलान् दत्त्वा सुवर्णं मधुसर्पिषी ।
द्रोणैकं वाससा च्छन्नं त्रिधा तद्वत् सदक्षिणम् ॥

'त्रिधेति' हीनमध्यमोत्तमभेदेन । 'द्रोणैकं' द्रोणद्वितयं द्रोणत्रितयं चेति । 'तद्वत् सदक्षिणमिति' क्रमादेकद्वित्रिसुवर्णदक्षिणासहितमित्यर्थः ।

आहिताग्नौ द्विजे दत्त्वा सर्वं तरति दुष्कृतम् ।

## इदं चात्र दानवाक्यम् ।

ॐ अद्यामुकसगोत्राय इत्यादि एतत् कृष्णाजिनस्थितं सुवर्णं मधुसर्पिर्युतं वस्त्रच्छन्नं तिलद्रोणं सर्वपापक्षयकामस्तुभ्यमहं सम्प्रददे न मम इति। ॐ अद्यामुकसगोत्राय—इत्यादि एतत्तिलदानप्रतिष्ठार्थमिदं सुवर्णं दक्षिणां तुभ्यमहं सम्प्रददे न मम ।

इति तिलदानविधिः ।

## तस्मिन्नेव पुराणे ।

मृगं तिलमयं कृत्वा सुवर्णरजतान्वितम् ।
दद्यात् कम्बलसंस्तीर्णकृष्णमार्गाजिनेन वा ॥
सर्वकामसमृद्धेन विमानेन दिवं व्रजेत् ।
कालक्षयादिहागत्य राजराजो भवेत् पुनः ॥

इति तिलमृगदानविधिः ।

## स्कन्दपुराणे ।

तिलपात्राणि यो दद्याद्विप्रेभ्यः श्रद्धयाऽन्वितः ।
अमावास्यां समासाद्य नियतः सुसमाहितः ॥
स पितॄंस्तारयित्वाऽऽशु नरकान्नरपुङ्गव ।
पितृलोकं समाप्नोति स चिरं सुखमश्नुते ॥

अत्रिः ।

तिलपात्रं तु सम्पूर्णं यो दद्यात् सुसमाहितः ।
ध्रुवं स गच्छति स्वर्गं नरो वै नात्र संशयः ॥

यमः ।

तिलपात्रं च यो दद्यात् प्रत्यहं वाऽथ पर्वणि ।
सदक्षिणं सत्त्वभावात् हृदि कृत्वा जनार्दनम् ॥
नाशयेत् त्रिविधं पापं धर्मस्य वचनं तथा ।

ब्रह्मपुराणे ।

ताम्रपात्रं तिलैः पूर्णं प्रस्थमात्रं द्विजाय तु ।
सहिरण्यं च यो दद्याच्छ्रद्धावित्तानुसारतः ॥
सर्वपापविशुद्धात्मा लभते तु परां गतिम् ।

अत्रेदं दानवाक्यम् ।

ॐ अद्यामुकसगोत्राय-इत्यादि इदं तिलपूर्णं ताम्रपात्रं ससुवर्णमशेषपापक्षयकामस्तुभ्यमहं सम्प्रददे न मम इति ।

ॐ अद्यामुकगोत्राय-इत्यादि एतत्तिलताम्रपात्रदानप्रतिष्ठार्थमिदं सुवर्णं दक्षिणां तुभ्यमहं सम्प्रददे न मम ।

इति तिलपात्रदानविधिः ।

अथाह विष्णुः ।

ताम्रपात्रे तिलान् कृत्वा पले षोडशकल्पिते ।
सहिरण्ये स्वशक्त्या वा विप्राय प्रतिपादयेत् ॥
नाशयेत् त्रिविधं पापं वाङ्मनःकायसम्भवम् ।

कूर्मपुराणे ।

तिलपूर्णं ताम्रपात्रं सहिरण्यं द्विजातये ।

प्रातर्दत्त्वा तु विधिवद्दुःस्वप्नं प्रतिहन्ति सः ॥
तिलपात्रं त्रिधा प्रोक्तं कनिष्ठोत्तममध्यमम् ।
ताम्रपात्रं दशपलं जघन्यं च प्रकीर्त्तितम् ॥
द्विगुणं मध्यमे प्रोक्तं त्रिगुणं चोत्तरे स्मृतम् ।
स्वर्णमेकं जघन्यं तु द्विगुणं मध्यमे क्षिपेत् ॥
त्रिगुणं चोत्तमे तद्वत् सुवर्णं परिकीर्त्तितम् ।
सुवर्णं दक्षिणां दत्त्वा सर्वपापक्षयो भवेत् ॥

इति महातिलपात्रदानविधिः ।

पितामह उवाच ।

शृणुध्वं देवताः सर्वा ऋषयश्च तपोधनाः ।
मुक्ता भवन्ति येनेह मानवा मातृजादृणात् ॥
यज्ञं सौत्रामणिं कर्त्तुं यदि शक्तिर्न विद्यते ।
महासरस्तथा वापीं कूपं कर्त्तुं च दीर्घिकाम् ॥
एवं कृते मातृ-ऋणान्मुक्तो भवति मानवः ।
सदक्षिणं कांस्यपात्रमथ दत्त्वा प्रमुच्यते ॥

ऋषय ऊचुः ।

भगवन् कांस्यपात्रस्य विधिं सम्यक् प्रकीर्त्तय ।
यत् प्रमाणं यत् स्वरूपं यस्मिन् काले च दीयते ॥
यादृशाय च दातव्यं दानमेतद्द्विजातये ।
यादृशेन च दातव्यं न दद्याद्यादृशाय च ॥

पितामह उवाच ।

शुद्धकांस्यस्य पात्रस्य प्रमाणं पञ्चविंशतिः ।
पलानामत्र निर्दिष्टं तिलानां प्रस्थसप्तकम् ॥
सुवर्णमाषांश्चतुरः पात्रोपरि विधारयेत् ।

वस्त्रेण वेष्टयेत् पात्रं प्रधानेन सुभक्तितः ॥
स्नानं कृत्वा निम्नगादौ पितॄन् देवाँश्च तर्पयेत् ।
ततोऽभिपूजयेच्छम्भुं शङ्करं हरिमेव च ॥
गोमयेनाथ संलिप्य गृहमध्यं च सर्वतः ।
लिखेत् पद्मं द्वादशारं कुङ्कुमेनाथ चन्दनैः ॥
ततो वह्निं स्थापयित्वा होमं कुर्याद्यवैस्तिलैः ।
तत्र पात्रं प्रतिष्ठाप्य पूजयेद्भक्तिसंयुतः ॥
गन्धचन्दनपुष्पाद्यैर्धूपदीपैश्च शोभितम् ।
ततो ब्राह्मणमाहूय बहुभृत्यं सुसंयतम् ॥
परस्त्रीवर्जकं शान्तमलङ्कृत्य यथाविधि ।
दाम्भिकं वर्जयेन्नित्यं परस्त्रीरतिलालसम् ॥
क्षुद्रं मत्सरशीलं च ब्रह्मभ्रष्टमशौचकम् ।
पादौ प्रक्षाल्य विधिवन्मातृश्राद्धं समाचरेत् ॥
तत्र सम्पूजयेद्विप्रं पुष्पधूपविलेपनैः ।
वस्त्राणि परिधाप्योऽसौ सुभव्यानि मृदूनि च ॥
अलङ्कृत्य यथाशक्त्या माघ्यां वा मृतवासरे ।

'मृतवासर इति' यस्मिन् दिने माता मृता भवति स मृतवासरः ॥

ग्रहणे रविसोमाभ्यां सङ्क्रान्तिषु युगादिषु ।
तथाऽन्यदपि यद्दत्तं माघ्यामुद्दिश्य मातरम् ॥
तदक्षयफलं सर्वं पुरा प्राह महेश्वरः ।
जीवन्तीं भूषयेद्वस्त्रैर्भोज्यैरपि विभूषणैः ॥
मृतामुद्दिश्य दातव्यं माघ्यां सर्वं स्वशक्तितः ।
अमावास्यां यथा दत्तं पितॄणां च पुरा मया ॥
तथा माघ्यां मया दत्ता मातॄणां नात्र संशयः ।

दत्तं जप्तं हुतं स्नातं विधिवत् तर्पणं कृतम् ॥
तदक्षयफलं सर्वं जायते मुक्तिरेव च ।
विप्रं सम्पूजयित्वा तु तत् पात्रं तस्य दापयेत् ॥
प्रणम्य विधिवद्भक्त्या मन्त्रमेतमुदीरयेत् ।
कांस्यपात्रं मया दत्तं मातुरानृण्यकाङ्क्षया ॥
भगवन् वचनात् तुभ्यं यथा मुक्तिस्तथा वद ।
दशमासाँश्च उदरे जनन्याः संस्थितेन मे ॥
क्लेशिता बाल्यभावे च स्तनपानाद्द्विजोत्तम ।
गूथमूत्रादिसंलेपलिप्ता यच्च कृता मया ॥
भवतो वचनादद्य मम मुक्तिर्भवेद्दणात् ।
कांस्यपात्रं सुवर्णं च तिलान् वस्त्राणि दक्षिणा ॥
सप्तधान्यं मया दत्तमृणान्मुक्तिर्भवेन्मम ।
कांस्यपात्रप्रदानेन तत्त्वज्ञानं शरीरकम् ॥
तथा हेमप्रदानेन परमात्मानमव्ययम् ।
आच्छादनं तु ब्रह्माण्डं गुह्यमेतत् सनातनम् ॥
विप्राच्छादनदानेन परमात्मा सुपूजितः ।
तिलसङ्ख्याकृतं दुःखं जनन्या मम सेवितम् ॥
तिलदानप्रभावेण कृते मुक्तो भवाम्यहम् ।
फलादिखचितं कृत्वा तज्जलेन विभूषितम् ॥
एवमुत्क्रामतः पात्रं प्रदद्याद्ब्राह्मणाय च ।
ब्राह्मणेन ततो वाच्यं जननीसम्भवाद्दणात् ॥
मुक्तस्त्वं पात्रदानेन महेश्वरवचो यथा ।
दत्त्वा विप्राय पात्रं तु होमं कुर्यात् प्रयत्नतः ॥
सोपस्करं सताम्बूलं क्षमाप्य विप्रं विसर्जयेत् ।

अन्येषामपि विप्राणां भोजनादि प्रदापयेत् ॥
भक्त्या शक्त्या ससन्मानं पूज्य विप्रान् प्रयत्नतः ।
एवं कृते ततो देवाद्दणान्मुक्तिर्न संशयः ॥
जननीसम्भवादस्मान्नान्यथा क चिदेव हि ।
पुरा मातृवधोद्भूतपापशङ्कितचेतसा ॥
जामदग्न्येन रामेण प्रदत्तं कांस्यभाजनम् ।
वशिष्ठतनयान् हत्वा विश्वामित्रेण धीमता ॥
पुरा दानमिदं दत्तं पातकव्रतशान्तये ।
अकृत्वा मातृवचनं पन्नगैः शापसंयुतैः ॥
कैश्चिच्छङ्कापरैर्भूत्वा माता पश्चात् प्रसादिता ।
शापतो निष्कृतिं ब्रूहि न वाक्यं यत् कृतं तव ॥
शापोऽभिभवते देवि नानृणानां दुरात्मनाम् ।
कथयामास सा तेभ्यः कांस्यपात्रं सविस्तरम् ॥
दत्त्वा दानं विनिर्मुक्ता भविष्यथ न संशयः ।
भुजङ्गैस्तत् कृतं सर्वं मातृवाक्येन गर्हितैः ॥
कांस्यपात्रप्रदानं तु पापमुक्तास्ततोऽभवन् ।
विधानं कांस्यपात्रस्य सर्वमेतन्मयोदितम् ॥
अन्यथा किं तरिष्यन्ति ऋणान्मातृसमुद्भवात् ।

वशिष्ठ उवाच ।

इति श्रुत्वा ततो देवाः कश्यपाद्या महर्षयः ।
प्रजग्मुः स्वान्यधिष्ठानि हर्षयुक्ता महौजसः ॥
इति ते सर्वमाख्यातं पात्रदानं महीपते ।
कुरु सर्वप्रयत्नेन माऽवज्ञां क चिदेव हि ॥

इत्यादित्यपुराणोक्तं कांस्यपात्रदानविधिः ।

आह यमः ।

सर्वपातकसङ्घातः कामतो वाऽप्यकामतः ।
शुद्धिं तस्य प्रवक्ष्यामि स्वर्गसाधनमेव च ॥
शुक्लैः कृष्णैर्यथा लब्धैर्द्वात्रिंशदङ्गुलोत्थितः ।
राशिस्तिलैः समे देशे कर्त्तव्यः पुरुषायतः ॥
यथाविभवविस्तारं यदि वा शक्तितो नरैः ।
प्रतिमाऽष्टाङ्गुला स्थाप्या सौवर्णी तत्र माधवी ॥

माधवमूर्त्तिस्तु नारदीये ।

आरभ्य वामोर्ध्वकरादपसव्यक्रमेण तु ।
शङ्खं चक्रं गदां पद्मं दधानो माधवः स्मृतः ॥
क्षौद्रेण पयसा दध्ना घृतेनापूरयेद्घटान् ।
स्थापयेत् तत्र तं रुक्मं पुष्पस्रग्वस्त्रभूषितम् ॥
भक्त्या वाऽभ्यर्च्य तत् सर्वं ब्राह्मणे श्रोत्रियेऽर्थिनि ।
दद्यान्माघेऽथ वैशाखे विषुवे चोत्तरायणे ॥
अज्ञानाद्यदि वा मोहाल्लोभाद्वा जन्मजन्मनि ।
अर्जितं यन्मया किञ्चिद्दुष्कृतं मधुसूदन ॥
तत् सर्वं विलयं यातु दानेनानेन माधव ।
एवमुच्चार्य तत् सर्वं ब्राह्मणाय निवेदयेत् ॥
यावज्जीवकृतं पापं तत् क्षणादेव नश्यति ।

इति तिलराशिदानविधिः ।

अथ महाभारते । यम उवाच ।

सर्वयज्ञेषु यत् पुण्यं सर्वदानेषु यत् फलम् ।
यद्दत्वा लभते विप्र तद्दानं कथयामि ते ॥
रहस्यं सर्वदानानां कथ्यमानं मया शृणु ।

पुण्येऽस्मिन् भारते वर्षे देवानामपि दुर्लभम् ॥
तिलपद्ममिति ख्यातं सुरासुरनमस्कृतम् ।
माघमासे तु सम्प्राप्ते शुक्लपक्षे द्विजोत्तम ॥
गोमयं मण्डलं कृत्वा चतुरस्रं महामते ।
नवं वस्त्रं समास्तीर्य कृष्णाजिनसमन्वितम् ॥
द्रोणावराँस्तिलाँस्तत्र निधाय वसनोपरि ।
पद्ममष्टदलं कृत्वा शुभं तत्कर्णिकोपरि ॥
निष्कत्रयं सुवर्णस्य स्थापयेच्च ततोपरि ।
श्रीनिवासं जगन्नाथं भुक्तिमुक्तिप्रदायकम् ॥
ध्यायेच्चतुर्भुजं देवं प्रणतार्त्तिहरं हरिम् ।
हिरण्यगर्भममृतं श्रीगर्भं परतः परम् ॥
शङ्खचक्रगदापाणिं पीतवाससमच्युतम् ।
श्रीवत्साङ्कं जगद्बीजं सर्वकारणकारणम् ॥
कविं पुराणं विश्वेशं पुण्डरीकनिभेक्षणम् ।
आसीनं कर्णिकामध्ये सर्वशक्तिसमन्वितम् ॥
कृताञ्जलिपुटो भूत्वा नमस्कृत्य पुनः पुनः ।
पूजयेत् परमेशानं श्रद्धावित्तानुसारतः ॥
इन्द्रनीलमहानीलमणिमुक्ताफलादिभिः ।
आराध्य यथाशक्त्या देवदेवं जनार्दनम् ॥
गन्धपुष्पैस्तथा दीपैर्नैवेद्यैश्च मनोरमैः ।
क्षीरान्नैर्घृतपक्वैश्च फलैर्दिव्यैरनेकधा ॥
पुष्पाणां प्रकरैश्चैव गीतनृत्यादिभिस्तथा ।
इत्थमाराध्य देवेशं ताम्बूलं विनिवेदयेत् ॥
पञ्चसौगन्धिकोपेतं श्रद्धापूतेन चेतसा ।

तैलप्रस्थं घृतप्रस्थं दध्याढकमतः परम् ॥
स्थापयेत् पार्श्वतस्तस्य धान्यपात्राणि षोडश ।
एवमाराध्य तत् पद्मं तिलद्रोणमयं शुभम् ॥
एकरात्रं द्विरात्रं वा त्रिरात्रमथ वा द्विज ।
तिलाहारो भवेत् पूर्वमुपवासमथापि वा ॥
कुर्य्यात् स्वकार्यशुद्ध्यर्थं वासुदेवमनुस्मरन् ।
ततो दद्याच्च तत् पद्मं शुचिर्भूत्वा समाहितः ॥
विज्ञातकुलशीलाय ब्राह्मणाय कुटुम्बिने ।
जितेन्द्रियाय शान्ताय प्रसन्नायात्मवेदिने ॥
रागद्वेषविहीनाय वैष्णवाय विशेषतः ।
एतद्गुणान्वितायैवं यथायोगं यथाक्रमम् ॥
दातव्यं तत् प्रयत्नेन तिलपद्मं विधानतः ।
प्रीयतां माधवो देव इत्युक्त्वा तमनुस्मरन् ॥
हिरण्यगर्भ देवेश पद्मनाभ जनार्दन ।
हिरण्याक्ष गुणाधार सर्वाधारधरेश्वर ॥
धनधान्यसमृद्धं च सर्वसम्पत्समन्वितम् ।
पुत्रपौत्रादिसंयुक्तं दासीदाससमन्वितम् ॥
आरोग्यं च सुमन्त्वं च सर्वदुःखविवर्जितम् ।
कुरु मां परमोदारं भक्तोऽयमिति चिन्तयन् ॥
इत्थं प्रसाद्य देवेशं वासुदेवं सनातनम् ।
दद्यात् तिलमयं पद्मं सर्वकामसमृद्धये ॥
ब्राह्मणश्चापि गृह्णीयाद्वाचयेत् तु प्रतिग्रहम् ।
कोऽदात् कस्मा अदादिति वैदिकं मन्त्रमुच्चरेत् ॥
एवं तिलमयं पद्मं यो ददाति विधानतः ।

सर्वसत्त्वसमाकीर्णं नरकं स न पश्यति ॥
स्वयं भवति पूतात्मा पितॄनथ पितामहान् ।
प्रपितामहाँश्च धर्मात्मा तारयत्यखिलं कुलम् ॥
धर्मार्थी धर्ममाप्नोति धनार्थी धनमाप्नुयात् ।
मोक्षार्थी मोक्षमाप्नोति नात्र कार्या विचारणा ॥
पातकी मुच्यते पापात् पितृघ्नो गुरुतल्पगः ।
सर्वपापरतो वाऽपि मुच्यते नात्र संशयः ॥
इच्छन्ति पितरः पुत्रान् पौत्राँस्तद्वंशसम्भवान् ।
अस्मद्वंशभवः कश्चित् तिलपद्मं प्रदास्यति ॥
यस्तु राजा धनपतिः समृद्धोऽतीवधार्मिकः ।
आराध्य विप्रं विधिना वस्त्रालङ्कारभूषणैः ॥
वाहनादिभिरन्यैश्च ग्रामक्षेत्रादिकैस्तथा ।
यत् फलं जायते तस्य द्विज दानपरस्य च ॥
परिच्छिन्नं भवेत् तत् तु नात्र कार्या विचारणा ।
यस्त्विमं विविधद्द्यात् तिलपद्मं च धार्मिकः ॥
तस्य दानफलं यत् स्यान्न तस्यान्तोऽत्र विद्यते ।

इति तिलपद्मदानविधिः ।

## लिङ्गपुराणे ।

अथान्यत् परमं वक्ष्ये अल्पद्रव्यं महाफलम् ।
द्रव्यमन्त्रोपसंयुक्ते काल ह्यस्य विधिः स्मृतः ॥

'काल' इति देशस्याप्युपलक्षणं तेन यत्र यदा च द्रव्यसत्पात्रयोगौ तावेवैतद्देशकालौ न पूर्वोक्तावित्यर्थः ।

सर्वत्र सर्वकाले च कर्त्तव्यमिह कथ्यते ।

इति कामिकोक्तत्वात् ।

गोमयालेपिते देशे अम्बराणि प्रकीर्य च ।
तन्मध्ये निक्षिपेद्धीमाँस्तिलभारत्रयं शुभम् ॥
पद्ममष्टदलं कृत्वा कर्णिकाकेसरान्वितम् ।
दशनिष्केण तत् कार्यं तदर्धार्धेन वा पुनः ॥
तिलमध्ये न्यसेत् पद्मं पद्ममध्ये महेश्वरम् ।
आराध्य विधिवद्देवं वामादीनि प्रपूजयेत् ॥
शक्तिरूपं सुवर्णेन त्रिनिष्केण तु कारयेत् ।
तासां च पुरतः कार्या विद्येशाः प्रविभागशः ॥
पूर्वोक्तहेममानेन विद्येशानपि कारयेत् ।
तानभ्यर्च्य विधानेन गन्धपुष्पादिभिः क्रमात् ॥

'पद्ममध्ये महेश्वरमिति' सहस्रशतादिनिष्कनिर्मितं शिवं पद्ममध्ये विन्यस्य तदर्धमानहेमकृतां मनोन्मनीं शिवस्य वामभागे न्यसेत् ।

तदुत्तरे तदर्धेन कारयेत् तु मनोन्मनीम् ।

इति कामिकोक्तेः ।

तत्परितोऽष्टौ वामादिशक्तीः पूजयेत् ।

तद्यथा ।

वामा ज्येष्ठा तथा रौद्री काला विकरणी तथा ।
बाला प्रथमनी देवी दमनी च यथाक्रमम्—इति ॥

तद्बाह्ये विद्येशानर्चयेत् ।

ते च यथा ।

अथानन्तश्च सूक्ष्मश्च शिवश्चाप्येकनेत्रकः ।
एकरुद्रस्त्रिमूर्त्तिश्च श्रीकण्ठश्च शिखण्डिकः—इति ॥

'पूर्वोक्तहेममानेन' त्रिनिष्केणेत्यर्थः । 'प्रविभागश' इति पूर्वत्रापि सम्बध्यते । तेन वामादिशक्तीनां विद्येशानां च रूपं प्रत्येकं निष्कत्रयेण कार्यम् । तत्र महेशरूपमुक्तं ब्रह्माण्डदाने ।

मनोन्मनीवामादीनां तु लिङ्गे ।

सर्वाश्च द्विभुजा देव्यो बालभास्करसन्निभाः ।
पद्मशङ्खधराः शान्ता रक्तस्रग्वस्त्रभूषिताः—इति ॥

विद्येशानां तु गणेशदाने वक्ष्यते ।

इत्यपरतिलपद्मदानम् ।

वायुपुराणे ।

अथातः संप्रवक्ष्यामि तिलपद्मस्य लक्षणम् ।
यत् कृत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ॥
विषुवे ग्रहणे वाऽपि व्यतीपाते दिनक्षये ।
अयने जन्मनक्षत्रे कृष्णपक्षे चतुर्दशी ॥
एषु कालेषु देशेषु पुण्येष्वायतनेषु च ।
तिलानां द्रोणमात्रेण नववस्त्रे सुशोभने ॥
पद्ममष्टदलं कुर्यात् कर्णिकादलशोभितम् ।
तस्मिन् पद्मं सुवर्णेन पलमात्रेण कल्पितम् ॥
पलार्धेनार्धपादेन कर्णिकोपरि शोभितम् ।
विन्यसेत् तत्र देवेशमावाह्य शशिशेखरम् ॥
पाण्डुराङ्गं चतुर्बाहुं कृत्तिवाससमीश्वरम् ।
अर्चयेत् पुण्डरीकैश्च पद्मैर्वा शतपत्रकैः ॥
धूपं च गुग्गुलं दद्यात् घृताक्तं परमेष्ठिनः ।
एवमभ्यर्च्य देवेशं कृत्वा चैव प्रदक्षिणम् ॥
ततो विप्रं समाहूय पुण्यकाल उपस्थिते ।
यथा देवं तथा विप्रमर्चयित्वा विधानतः ॥
मूलमन्त्रेण कर्त्तव्यं सर्वमेवार्चनादिकम् ।
इमं मन्त्रं ततः प्रोक्त्वा तस्मै विप्राय दापयेत् ॥

एतत् तिलमयं पद्ममत्र संनिहितो हरः* ।
एतत् प्रदानादनिशं शिवः संप्रीयतामिति ॥
यथाऽसौ भगवान् देवः सर्वभूतान्तरस्थितः ।
तेन सत्येन मे पापं विलयं यातु सर्वतः ॥
एवं यस्तिलपद्मस्य विधानं सम्यगाचरेत् ।
सर्वपापविनिर्मुक्तः स याति शिवमन्दिरम् ॥
तत्र कल्पशतं सार्धं शिववन्मोदते सुखम् ।
यत् किञ्चित् कुरुते पापं कर्मणा मनसा गिरा ॥
तिलपद्मप्रदानेन तत् सर्वं क्षयमेष्यते ।

इति तृतीयं तिलपद्मदानम् ।

आह बौधायनः ।

सौवर्णं कारयेत् पद्मं पलेनार्धपलेन वा ।
यथा स्वशक्त्या मतिमान् दृढमष्टदलं शुभम् ॥
वित्तशाठ्यं न कुर्वीत भवेन्निष्फलमन्यथा ।
द्रोणे तिलाधिके वाऽपि ताम्रपात्रं जलावृतम् ॥
तस्य मध्ये तु तं पद्मं निदध्यात् कुङ्कुमान्वितम् ।
ब्राह्मणं श्रुतसम्पन्नं दरिद्रं चाग्निहोत्रिणम् ॥
आहूय गन्धमाल्याद्यैर्विधिना चातिभक्तितः ।
ततः स्वर्णमयं पद्मं दद्यान्मन्त्रेण संयुतम् ॥
खगः पूषा पतङ्गोऽसौ द्वादशात्मा त्रयीतनुः ।
पद्मेनानेन दत्तेन प्रीतस्तरणिरस्तु मे ॥

दानमन्त्रः ।

कृतेनानेन मनुजो मूत्रकृच्छ्रात् प्रमुच्यते ।

---

* मन्त्रमिति क्व चित् पुस्तके पाठः ।

मूत्रकृच्छ्रातुरस्तस्मादेतत् कुर्यात् प्रयत्नतः ॥

इति मूत्रकृच्छ्ररोगहरं तिलपद्मदानम् ।

## वायुपुराणे ।

क्षये तु राजतं पद्मं ब्राह्मणाय निवेदयेत् ।
तिलाढकोपरि यत् तज्जलं कांस्यमये दृढे ॥
पलेनाथ तदर्धेन यथाशक्त्यथ वा कृतम् ।
निधाय तत्र पद्मं तु ब्राह्मणाय निवेदयेत् ॥
पद्मेन राजतेनेह प्रदानात्त्रिनेत्रज ।
जातं कर्मविपाकेन क्षयं नाशय मेऽनघ ॥

दानमन्त्रः ।

कृत्वैवं क्षयरोगी तु शीघ्रं रोगात् प्रमुच्यते ।

इति क्षयरोगहरं तिलपद्मदानम् ।

## आह बौधायनः ।

सुवर्णेन तदर्धेन तदर्धार्धेन वा पुनः ।
पद्मं तु कारयेच्छुभ्रं व्यक्तमष्टदलं शुभम् ॥
मध्ये तु कर्णिकां कुर्याद्राजतेन च नालकम् ।
पद्ममेवंविधं कुर्यात् स्थाप्यं द्रोणतिलोपरि ॥
वस्त्रेणावेष्ट्य परया भक्त्या प्रयतमानसः ।
ब्राह्मणं ज्ञानवृत्तस्थं स्वाचारं संजितेन्द्रियम् ॥
पद्मदानप्रयोगश्चमादित्येऽहनि कारयेत् ।
आहूय विप्रवर्यं तं पूजयेद्वस्त्रपूर्वकम् ॥
आज्येन च तिलैर्होमः कार्यश्चाष्टोत्तरं शतम् ।
पद्म आवाहयेद्देवं भास्करं ग्रहनायकम् ॥
पद्मेहि भगवन् देव पद्मेऽस्मिन् सन्निधिं कुरु ।

त्रयीतनो द्वादशात्मन् सर्वप्राणिहिताय च ॥

आवाहनमन्त्रः ।

आवाह्य तस्मिन् देवेशं पूजयेद्रक्तचन्दनैः ।
पुष्पैश्च रक्तैरपरैः कुङ्कुमागुरुचन्दनैः ॥
नैवेद्यं पायसं दद्यादलाभे क्षीरमेव च ।
मन्त्रेणानेन विधिवद्दद्यात् पद्मं सिताम्बरम् ॥
भगवन् सूर्य भूतेश द्युमणे लोकनायक ।
रक्तवर्णः प्रतापेन्द्र रक्तस्त्रैलोक्यपावनः ॥
सत्पात्राय मया दत्तं मम जन्मनि चैव हि ।
औषधादि तु तत् सर्वं नाशमायातु दानतः ॥
ततः प्रदक्षिणीकृत्य ब्राह्मणं विनयान्वितः ।
पायसं गुडसंमिश्रं भोजनाय प्रदापयेत् ॥
ततः स्नात्वा मङ्गलेन पुण्याहेन तु भक्तितः ।
भर्त्तारं देववन्मान्ये भुञ्जीत घृतपायसम् ॥
एवं कृतेन दानेन नाशं याति न संशयः ।
संपन्नौषधदानेन रक्तशूलमुपार्जितम् ॥
रक्तशूलयुजा नार्या दानं कार्यमिदं ततः ।

इति रक्तशूलघ्नं तिलपद्मदानम् ।

आह गौतमः ।

गवां यः पीडनं कुर्यान्नरो रोधनबन्धनैः ।
दद्रुरोगी स कण्डूतियुक्तो भवति सर्वदा ॥
वक्ष्यामि तत्प्रतीकारं पद्मदानादिकर्मणा ।
व्यावहारिकनिष्केण पद्मं कुर्यात् सुशोभनम् ॥
नालं च राजतं कुर्यात् तदर्द्धेनापि कण्टकम् ।

मध्ये रत्नं प्रादातव्यं तदलाभे च मौक्तिकम् ॥
श्रीगन्धकुङ्कुमाभ्यां च प्रक्षाल्य ह्यनुलेपयेत् ।
तण्डुलोपरि संस्थाप्य वस्त्रयुक्तं तिलेषु वा ॥
तेषामपि परीमाणं द्रोणत्रितयमिष्यते ।
तदलाभे द्वयं ग्राह्यमथ वा स्वस्य शक्तितः ॥
उपचारैः षोडशभिरर्चयेन्मूलमन्त्रतः ।
आवाहयेच्च देवेशं भास्करं सूर्यमण्डलात् ॥
देवदेव जगन्नाथ द्युमणे लोकपावन ।
लोकानां चक्षुः सूर्य त्वं पद्मेऽस्मिन् सन्निधिं कुरु ॥

आवाहनमन्त्रः ।

एवमावाह्य सूर्यं तं भानुं सर्वजनप्रियम् ।
उपचारैः षोडशभिरर्चयेन्मूलमन्त्रतः ॥
होमं चापि प्रकुर्वीत आग्नेय्यां दिशि तस्य तु ।
समिदाज्यतिलैः सम्यगाचार्यः सर्वशास्त्रवित् ॥
सूर्यं तच्चक्षुर्मन्त्रेण समिद्धोमं प्रकल्पयेत् ।
आज्यहोमं प्रकुर्वीत हंसः शुचिषदित्यपि ॥
व्याहृत्या च तिलैर्होमं कुर्यात् त्वयुतसङ्ख्यया ।
समिदाज्यैश्चाष्टशतमष्टाविंशतिमेव वा ॥
हुत्वा चाहुतिसम्पातान् पात्रे चास्मिन् विनिक्षिपेत् ।
तेन गात्राणि चाभ्यज्य दद्रुरोगार्दितस्य तु ॥
अक्षिभ्यामनुवाकेन यथा लिङ्गं च वाससा ।
मार्जयेताहतेनाथ दद्रुणो मुष्टिना तथा ॥
सम्पूज्यानन्तरं भक्त्या नैवेद्यं पायसं क्षिपेत् ।
दद्याद्रोगी तु तं पद्मं प्राङ्मुखाय ह्युदङ्मुखः ॥

मन्त्रेणानेन विधिवत् पूजितायातिभक्तितः ।
देवदेव जगन्नाथ देवरूप परात् पर ॥
जगतां परमानन्दकारक द्युमणे प्रभो ।
प्रभाकर सुसप्ताश्व देवेशारुणसारथे ॥
रोधनैर्बन्धनैश्चैवं वैरूप्यं यच्छरीरके ।
पूर्वकर्मविपाकेन दद्रुकलकादिकश्मलम् ॥
पद्मदानेन तुष्टस्त्वं नाशयाशु शरीरके ।

दानमन्त्रः ।

एवं दत्त्वा तु तं पद्मं दद्रुरोगविवर्जितः ।
विना कण्डुं विना कुष्ठं त्वग्दोषैश्च विवर्जितः ॥
जायते रूपवान् सद्य आदित्यस्य प्रभा यथा ।
जीवेद्वर्षशतं मर्त्यो धन्यधान्यसमन्वितः ॥
अनन्तरं ब्राह्मणेभ्यः पायसं च निवेदयेत् ।
एवं यः कुरुते दानं गौतमोक्तविधानतः ॥
रोगैरन्यैर्विमुक्तश्च मोदते भानुवद्भुवि ।

इति दद्रुरोगघ्नतिलपद्मदानविधिः ।

## अथ वायुपुराणे ।

स्वरोपघाती वाचां च हर्त्ता मूकः प्रजायते ।
वक्ष्यामि तत्प्रतीकारं येन सम्पद्यते सुखम् ॥
कुर्यात् स्वर्णमयं पद्मं पलार्धार्धतदर्धतः ।
यथाविभवतः सम्यग्वित्तशाठ्यं न कारयेत् ॥
रक्तवस्त्रेण संवेष्ट्य ताम्रपात्रोपरि न्यसेत् ।
ताम्रपात्रपरीमाणं पलानामष्टकं विदुः ॥
श्रद्धया स्वविभवेनैव पूजयेद्रक्तचन्दनैः ।

तिलाढकोपरि स्थाप्य पीतवस्त्रेण वेष्टयेत् ॥
उपचारैः षोडशभिराचार्यः सर्वशास्त्रवित् ।
धर्मज्ञश्च विनीतश्च दयालुः सत्यवाक् शुचिः ॥
मन्त्रणानेन विधिवत् प्राङ्मुखोऽलङ्कृतः शुचिः ।
ब्रह्मणः सदनं त्वं हि विष्णोरपि च नाभिजम् ॥
अतिप्रीतिकरं भानोरग्ने रुद्रस्य चैव हि ।
गृहाण पूजामेतां त्वं सर्वक्लेशविनाशक ॥

पूजामन्त्रः ।

आग्नेय्यां दिशि वै होमः कर्त्तव्यो मन्त्रपूर्वकः ।
समिदाज्यतिलैश्चैव सावित्र्याष्टाक्षरेण तु ॥
समिद्धोमं प्रकुर्वीत सर्वरोगप्रशान्तये ।
आज्यहोमश्च कर्त्तव्यश्चित्रमित्यनया ऋचा ॥
तिलानायाति इन्द्रेति व्याहृतीभिरथापि वा ।
अग्नेरुत्तरतो भागे कलशस्थापनं भवेत् ॥
पूर्वोक्तेन विधानेन चाभिषेकादि कारयेत् ।
प्रणीतामोक्षपर्यन्तं कर्म कृत्वा प्रयत्नतः ॥
ततः स्नातः शुचिः श्वेतवस्त्रो रोगी तु भूषितः ।
तस्मै हुतवते पद्मं दद्यात् स्मृत्वा चतुर्मुखम् ॥
देवानामथ सर्वेषां पद्म त्वं प्रीतिकारणम् ।
विशेषतो ब्रह्मणश्च सरस्वत्या हरेरपि ॥
यत् प्राग्वाचां निरोधेन वैरूप्यं मम देहजम् ।
अघमेद्‌भव तीव्रं दुःखं रोगाकरं तथा ॥
तत् सर्वं नाशयन्त्वत्र ब्रह्मसूर्यशिवाग्नयः ।
त्रिदशाद्यो ये च देवा हविष्मन्तस्तथा भुवि ॥

दानमन्त्रः ।

एवं दत्त्वा तु तं पद्ममाचार्यायातिभक्तितः ।
पृष्ठतस्तमनुव्रज्य ह्यघभेदाद्विमुच्यते ॥
एवं पद्मोद्भवः प्राह नारदाय महात्मने ।

इति मूकत्वहरतिलपद्मदानविधिः ।

## अथ त्रिपद्मपञ्चकदानविधिः । ब्रह्माण्डपुराणे ।

अथ दानं प्रवक्ष्यामि त्रिपद्ममिति विश्रुतम् ।
आयुष्यं श्रीकरं पुण्यमारोग्यं पापनाशनम् ॥
माघमासे विशेषेण जन्मर्क्षेषु च कारयेत् ।
व्याधिग्रस्ते च दातव्यं दुःस्वप्नाद्भुतदर्शने ॥
अथान्यद्वा भयं पश्येत् सर्वदोषप्रशान्तये ।
भूमौ गोमयलिप्तायां तिलैराढकसंमितैः ॥
पद्ममष्टदलं कृत्वा कर्णिकाकेसरान्वितम् ।
तस्मिन् विधाय सौवर्णं ततः कृत्वा सरोरुहम् ॥
वस्त्रेणावेष्ट्य गन्धाद्यैरर्चयेत् परमेष्ठिनम् ।
विप्रं वैतानिकं धर्मशास्त्रज्ञं शान्तमानसम् ॥
अभ्यर्च्य दापयेत् तस्मै मन्त्रमेतमुदीरयेत् ।
संप्रीयतां मे भगवान् आत्मभूश्चतुराननः ॥
दानेनानेन सर्वात्मा जगत्स्रष्टा जगत्पतिः ।
तथाऽन्यत् तण्डुलैरेव तृतीयं लवणेन तु ॥
विष्णवे स्थाणवे चेति दानमन्त्रैर्विबोधयेत् ।
संप्रीयतां मे भगवान् परमात्मा जगन्मयः ॥
दानेनानेन विश्वात्मा परमः पुरुषोत्तमः ।
संप्रीयतां मे भगवान् शङ्करः शं करोतु मे ॥

दानेनानेन विश्वात्मा चन्द्रार्धकृतशेखरः ।
इति मन्त्रान् समुच्चार्य दद्यादेतान् पृथक् पृथक् ॥
जातरूपमयान् कृत्वा ब्रह्मविष्णुमहेश्वरान् ।
एवं कृते तु यत् पुण्यं जायते द्विजपुङ्गवाः ॥
न तद्वर्णयितुं शक्यं कल्पकोटिशतैरपि ।
इत्याह भगवान् ब्रह्मा नारदाय महात्मने ॥
उक्तं मयाऽपि तत् सर्वं युष्माकं मुनिसत्तमाः ।

अत्र ब्रह्मविष्णुमहेश्वराणां रूपनिर्माणं धान्यपर्वतवदद्रष्टव्यम् ।

इति त्रिपद्मदानविधिः ।

## वायुपुराणे ।

तिलदानमथो वक्ष्ये दशधा देवि साम्प्रतम् ।
रहस्यं सर्वपापघ्नं सर्वकल्याणकारकम् ॥
जन्मर्क्षेषु चतुर्दश्यां कृष्णायां च समाचरेत् ।
सन्निधौ देवदेवस्य शिवस्य परमेष्ठिनः ॥
चक्रे पञ्चरजःक्लिप्ते द्वादशारं सरोरुहम् ।
दलैर्द्वादशभिर्युक्तं कृत्वा तस्मिन्नरञ्जकम् ॥
अव्रणं तिलसम्पूर्णं विन्यस्याभ्यन्तरं शिवम् ।
चन्द्राकारं च* सौवर्णं मण्डले शक्रदैवते ॥
पूजयेद्गन्धनैवेद्यदीपपुष्पैः फलैस्तथा ।

चक्रलक्षणं लोकपालप्रसङ्गेन ब्रह्माण्डदाने दर्शितम् । शक्रदैवतमण्डलं पार्थिवमण्डलं च चतुष्कोणं विधेयम् ।

धूपं सर्जरसं कृत्वा दद्यात् तं शिवयोगिने ।
भूगन्धपतिरीशानः शक्ररूपी तिलाशयः ॥

---

* चन्द्राकारं चेति क्व चित् पाठः ।

न्यासोत्थं पृथिवीजातं स मत्पापं व्यपोहतु ।
इति कृत्वा विनश्यन्ति पापानि क्षितिजानि च ॥
भोजने यानि हिंस्यन्ते स्थावराणि चराणि च ।
कण्डूतिवमने यानि शवमद्यादिगन्धयोः ॥
घ्राणे घ्राणे गवां गन्धे श्रोत्रियस्यातुरस्य च ।
पुनः शिवपुरे तिष्ठेद्यावदिन्द्राश्चतुर्दश ॥
इतरेष्वपि सर्वेषु विधिः साधारणः स्मृतः ।
विशेषेण च वक्ष्यामि तत्र तत्र शुचिस्मिते ॥

इति तिलारञ्जकदानविधिः ।

वायुपुराणे ।

तिलपीठमथो वक्ष्ये सारदारुमये शुभे ।
पीठेऽरत्निद्वयायामे तिलपूर्णे सभित्तिके ॥
व्योमाधिपं गणेशानुरूपिणं शिवमर्चयेत् ।

गणेशरूपमाहात्रेयः ।

चतुर्भुजो गजमुखो मूषकस्थश्च तुन्दिलः ।
विषाणं चाक्षसूत्रं च परशुं मातुलिङ्गकम् ॥
दधानो विघ्नराजः स्यात्-इति ।
शुक्लैर्गन्धैश्च धूपैश्च कर्पूरं धूपयेत् तथा ।
क्षौमे च वाससी दद्यात् पुस्तकं तत्र विन्यसेत् ॥
व्योमध्वनिपतिः शुभ्रो गणनाथस्तिलाश्रयः ।
व्योमशब्दश्रुतिप्राप्तं पापमीशो व्यपोहतु ॥
इति दत्तेऽस्य नश्यन्ति पापान्याकाशजानि च ।
अनिबद्धकथोत्थानि परनिन्दाभवानि च ॥
कूटसाक्षिसमुत्थानि पैशुन्यजनितानि च ।

वेदनिन्दा गुरोर्निन्दा तयोश्च श्रवणेन च ॥
हन्ति पापान्यशेषाणि तिलपीठप्रदानतः ।
शिवलोके च कल्पांश्च मोदते दश पञ्च च ॥

इति तिलपीठदानविधिः ।

तस्मिन्नेव पुराणे ।

अथान्यत् सम्प्रवक्ष्यामि तिलदानमनुत्तमम् ।
पूर्वोक्तकल्पिते पीठे चतुःकुम्भपरिष्कृते ॥
आदर्शं विमलं न्यस्य तत्र देवं मनोमयम् ।
विष्णुरूपधरं शम्भुं विन्यस्य परितो न्यसेत् ॥

विष्णुरूपमुक्तं नारदेन तद्यथा ।

शङ्खचक्रगदापद्मधरो वामोर्ध्वबाहुतः ।
विष्णुर्विधेयो भगवान् विशेषो न्यासमूर्त्तिषु—इति ॥
पीतवस्त्रयुगं दिक्षु चक्रादीन्यायुधानि च ।
पञ्चलोहप्रतिष्ठानि तुलसीभिः समर्चयेत् ॥
मनोमय नमस्तेऽस्तु सौम्यरूप वृषध्वज ।
मनस्कृत्यानि पापानि सर्वाण्याशु विनाशय ॥
इति दत्तेऽस्य नश्यन्ति मानसानि कृतानि वै ।
परद्रोहप्रवृत्तानि कामलोभोद्भवानि च ॥
क्रोधजानि च सर्वाणि पापानि च विशेषतः ।
अवाच्यवाचने यानि अध्येयध्यानजानि च ॥
मदनोत्सवजातानि क्रोधोद्भूतानि यानि च ।
ध्येयान्यावृत्तवृत्तानि नश्यन्ति सकलान्यपि ॥
शिवलोके वसेद्वर्षाण्यर्बुदान् दश कामतः ।

इति तिलादर्शदानविधिः

वायुपुराणे ।

तिलकुम्भमथो वक्ष्ये कुम्भे पूर्ववदास्थिते ।
वारुणे मण्डले देवं वरुणाकारमर्चयेत् ॥
श्वेतैः पुष्पैः फलैर्गन्धैः कर्पूरेण तु पूजयेत् ।

वरुणलक्षणमुक्तं ब्रह्माण्डदाने ।

'वारुणं मण्डलम्' आप्यमण्डलम् । तच्चार्धचन्द्राकारं कर्त्तव्यम् ।

षड्रसान् परितो न्यस्य ततो मन्त्रमिमं जपेत् ।
नमो वरुणरूपाय रसाम्बुपतये नमः ॥
रसधारिनिमित्तानि यान्तु नाशमघानि मे ।
तिलकुम्भप्रदानेन प्रसीद परमेश्वर ॥
इति दत्ते विनश्यन्ति पापानि जलचारिणाम् ।
हिंसोद्भवानि स्नानेषु पानपाकेऽवगाहने ॥
रसोपादानभक्षाणामपेयानां च वाञ्छया ।
औषधं चापि देवेश सर्वं मेऽस्यं भविष्यति ॥
शिवलोके वसेत् कल्पान् शतपञ्चदशावधान् ।

इति तिलकुम्भदानविधिः ।

वायुपुराणे ।

करकं तिलसम्पूर्णं मण्डले वह्निदैवते ।
शिवं वह्निवदाधाय पूजयेत् करवीरकैः ॥
रक्तचन्दनगन्धेन निर्यासेन च धूपयेत् ।

'वह्निदैवतमण्डलं' त्रिकोणं मण्डलमित्यर्थः । 'शिवं वह्निवदिति' वह्निरूपिणं शिवमाधायेत्यर्थः । 'निर्यासः' सर्जरसः ।

तद्रूपमुक्तं ब्रह्माण्डदाने ।

आदर्शं च ततो दद्याद्दीपानां च चतुष्टयम् ।

वह्निरूपपतिः शम्भुर्वह्निरूपी तिलाश्रयः ॥
तेजोरूपकृतं पापं चाक्षुषं च व्यपोहतु ।
इति दत्तेऽस्य नश्यन्ति पापान्यग्निकृतानि च ॥
पाकहोमेषु काष्ठेषु हिंस्यन्ते यानि वह्निना ।
अङ्गारवनदाहादिसम्भवानि च यानि वै ॥
विरुद्धकरणोत्थानि रूपयोगोद्भवानि च ।
परदारपरद्रव्यपुत्रदर्शनजानि च ॥
शवादिदर्शनोत्थानि नेत्रदोषकृतानि च ।
य एवं कुरुते दानं शिवभक्त्या यतव्रतः ॥
शिवलोके वसेद्भूप कल्पत्रयमशङ्कितः ।

इति तिलकरकदानविधिः ।

वायुपुराणे ।

अतः परमहङ्कारं नाम दानं वदामि ते ।
पूर्ववत् कल्पिते पीठे तिलानामुपरि न्यसेत् ॥
राजतं मण्डलं शुद्धं विष्वगष्टाङ्गुलायतम् ।
तत्र देवमहङ्कारं पविशक्तिधराकृतिम् ॥
विन्यस्य राजतानन्यान् कुमारान् परितो न्यसेत् ।
नैगमेशं विशाखं च कुमारं गुहमेव च ॥

'पूर्ववदिति' तिलपीठदानवदित्यर्थः । 'पविः' वज्रम् । अहङ्कारश्च पुरुषाकृतिर्द्विभुजो वज्रशक्तिधरो विधेयः ।

नैगमेशादिलक्षणमुक्तं विश्वकर्मणा ।

ततः स्कन्दग्रहा जाता दारुणा विकृताननाः ।
नैगमेशमुखाः शक्तिधरा द्विबाहवस्तथा—इति ॥
कौसुम्भे वाससी दद्याद्घण्टां च परितो न्यसेत् ।

कुङ्कुमं गन्धकार्यं स्यात् पुष्पं च करवीरजम् ॥
अहङ्कारपते देव गुहरूप दुरन्तक ।
अभिमानकृताद्दोषात् सर्वस्मात् पाहि मां प्रभो ॥
इति दत्तेऽस्य नश्यन्ति यान्यहङ्कारजानि तु ।
पारुष्यस्त्रीनिषेध्यादिविप्रक्षत्रियजानि च ॥
तानि सर्वाणि नश्यन्ति यानि कृत्यविलङ्घनैः ।
अनात्मन्यात्मबुद्ध्या तु गृहक्षेत्रादिसङ्गमे ॥
अन्यानि यानि पापानि तानि नश्यन्ति सर्वतः ।
पापानि तानि नश्यन्ति शिवलोके वसेन्नरः ॥
कल्पानां शतमेकं च नात्र कार्या विचारणा ।

इत्यहङ्कारदानविधिः ।

## ब्रह्माण्डपुराणे ।

अतः परं प्रवक्ष्यामि तिलदानमनुत्तमम् ।
यद्दत्वा पुरुषः स्त्री वा वैरिञ्चिं लोकमाप्नुयात् ॥
आयुरारोग्यदं पुण्यं सर्वपापप्रणाशनम् ।
शिवप्रीतिकरं नृणां पुत्रवृद्धिकरं शुभम् ॥
रुद्रैकादशबुद्ध्या तु विप्रानेकादशान् सुधीः ।
प्राङ्मुखः प्रत्यगासीनान् गन्धादिभिरथार्चयेत् ॥
तिलप्रस्थद्वयं पात्रे प्रत्येकं निक्षिपेत् तथा ।
प्रत्येकं मण्डलं हैमं पात्रेषु विनिवेदयेत् ॥
पात्राणि चैवमाराध्य शिवबुद्ध्या यथाक्रमम् ।
रुद्रैकादशमन्त्रैश्च दद्यादुदकपूर्वकम् ॥

'रुद्रैकादशमन्त्रा' वक्ष्यमाणैर्नामभिर्नमोऽन्तैर्ज्ञातव्याः ।

मृगव्याधश्च सर्वश्च नैर्ऋतिश्च महायशाः ।

अजैकपादहिर्बुध्न्यः पिनाकी च परन्तपः ॥
दहनोऽथेश्वरश्चैव कपाली च महाद्युतिः ।
स्थाणुर्भवश्च भगवान् रुद्रानेकादशाविदुः ॥

इति रुद्रैकादशतिलदानविधिः ।

## तस्मिन्नेव पुराणे ।

अतः परं प्रवक्ष्यामि तिलगर्भमनुत्तमम् ।
यत्संप्रदानान्मनुजो दीर्घमायुरवाप्नुयात् ॥
अपमृत्युजयोपायो व्याधिनिर्मोक्षणक्षमः ।
तिलगर्भ इति ख्यातो रहस्यः पापनाशनः ॥
यदा ग्रहोपरोधः स्याज्जन्मर्क्षस्यातिदारुणः ।
व्याधीनां च समुत्थानमुत्पातस्यापि चोदयः ॥
तिलगर्भस्तदा कार्यः सर्वदोषोपशान्तये ।
निमित्तानन्तरं कुर्यान्नैमित्तिकविधिक्रमम् ॥
गोमयेनोपलिप्तायां क्षितावास्तीर्य वाससी ।
शालीनामाढकं मध्ये तदर्धं तण्डुलं न्यसेत् ॥
तेषु पद्मं प्रविस्तीर्यमष्टपत्रं सुकर्णिकम् ।
कर्णिकायां न्यसेत् पद्मं सौवर्णं शक्तितः कृतम् ॥
नवरत्नानि तत्पद्मे निधातव्यानि यत्नतः ।
ततस्तद्बाह्यतः शुद्धान् तिलान् कुर्यात् समन्ततः ॥
गर्भवद्वाससा भूयः समास्तीर्य ततः शनैः ।
गर्भे तं योनिमन्त्रेण समाधाय यथाविधि ॥
तत उपवेश्य पुरुषं कृष्णकृतसुमुष्टिकम् ।
तस्याङ्गेषु न्यसेन्मन्त्रं मृत्युञ्जयमनुक्रमात् ॥
तं च देवं विरूपाक्षमर्धचन्द्रविभूषणम् ।

कल्पयित्वाऽर्चयेन्मन्त्रं पञ्चब्रह्मभिरादरात् ॥

योनिमन्त्रः ।

यस्यै तु यज्ञियो गर्भो यस्यै योनिर्हिरण्मयी—इत्यादिर्वाजसनेयानां प्रसिद्धः ।

मृत्युञ्जयन्यासमाह शौनकः ।

त्र्यम्बकं यजामहे इति शिखायां न्यसेत् ।
सुगन्धिं पुष्टिवर्धनम्—इति हृदये ॥
उर्वारुकमिव बन्धनात्—इति बाह्वोः ।
मृत्योर्मुक्षीय मामृतात्—इति नाभौ ॥
पादे गुल्फे च जङ्घोरुजघने कटिमेढ्रयोः ।
नाभौ कुक्षिद्वये पार्श्वे कक्षयोः कुचयोर्हृदि ॥
स्कन्धे कृकाटिकायां च कूर्परे मणिबन्धके ।
कनिष्ठानामिकामध्यातर्जन्यङ्गुष्ठपाणिषु ॥
कण्ठेऽथ चिबुके वक्त्रे नासिकाकर्णचक्षुषि ।
ललाटे मूर्ध्नि चूडायां वर्णान् मन्त्रस्य विन्यसेत् ॥

देवीपुराणोक्तो वा मृत्युञ्जयमन्त्रन्यासो गृह्यते । स च गारुडपुराणोक्तनानारोगप्रतुलापुरुषदाने द्रष्टव्यः ।

पञ्चब्राह्मणास्तत्पुरुषादिमन्त्राः ।

तस्य मूर्ध्नि पुनः पद्मं सौवर्णं पूर्ववत् कृतम् ।
विन्यसेद्वस्त्रमावेष्ट्य तिलैरापूरयेत् पुनः ॥
तं गर्भमर्चयेद्भूयश्चिन्तयित्वाऽमृतोद्भवम् ।
अमृतस्राविणं चन्द्रं स्वेन मन्त्रेण मन्त्रवित् ॥
ततः शतावृतं मन्त्रं मृत्युञ्जयमनुत्तमम् ।
तत उत्थापयेत् तस्माद्गर्भस्थानात् समाहितः ॥

पुनः संप्रोक्ष्य वारुण्या पावमानीभिरेव च ।
पूर्वदेहविनिर्मुक्तः शङ्करोऽस्मीति चिन्तयेत् ॥
ब्राह्मणाय विनीताय ज्ञानिने वीतमन्यवे ।
ब्रह्मनिष्ठाय तत् सर्वं संप्रदद्यात् तिलादिकम् ॥
प्रीयतां भगवान् शम्भुश्चन्द्रमौलिरिति ब्रुवन् ।

तत्र तिलगर्भे उपवेशनं 'शङ्करोऽस्मीति' च ध्यानमुत्थानं समन्त्रकम् । तिलादिदानं यजमानकर्तृकम् । अन्यत् सर्वमाचार्यः कुर्यात् ।

अनेन विधिना यस्तु तिलगर्भं समारभेत् ।
अकालमृत्युर्न भवेत् तस्य नास्त्यत्र संशयः ॥
व्याधीनां विप्रमोक्षः स्यान्महतामपि निश्चयः ।
ग्रहदोषाश्च नश्यन्ति प्रसीदन्ति ग्रहाः पुनः ॥
उत्पातानां प्रशान्तिश्च त्रिविधानामपि क्षणात् ।

'त्रिविधानामपि' भौमान्तरिक्षदिव्यानाम् ।

इति तिलगर्भदानविधिः ।

इति श्रीमहाराजाधिराजश्रीमहादेवसमस्तकरणाधीश्वरसकलविद्याविशारदश्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ दानखण्डे तिलगर्भदानान्तानि दानानि समाप्तानि ॥ ८ ॥



नवमप्रकरणम् ।

## अथ गजदानं कूर्मपुराणे ।

दद्याद्गजं पुराणोक्तमूल्यं पञ्चशतानि वा ।
वित्तानुसारात् तत्रापि कनिष्ठोत्तममध्यमम् ॥
पुराणोक्तं मूल्यमत्र हेममाषशतद्वयम् ।

तथा स्वरूपगजदानेन सह वित्तानुसारात् त्रैविध्यम् । तत्र स्वरूपगजदानमुत्तमः पक्षः । पञ्चशतानीति मध्यमः । शतद्वयं कनीयानिति पञ्चशतानीत्यत्राह हेममाषाः सम्बध्यन्ते ।

रूप्यस्थूणालङ्करणं तारागणविभूषणम् ।
सदक्षिणं वित्तशक्त्या दत्वा विष्णुपुरं व्रजेत् ॥

'स्थूणा' रज्जुः । 'तारागणो' मौक्तिकादिकृतो गजभूषणविशेषः ।

इति गजदानविधिः ।

### अथ लिङ्गपुराणे ।

गजदानं प्रवक्ष्यामि यथावदनुपूर्वशः ।
द्विजाय वाऽथ दातव्यं देवदेवाय वा पुनः ॥
गजं तु लक्षणोपेतं हैमं वा राजतं तु वा ।
सहस्रनिष्कमात्रेण तदर्धेनापि कारयेत् ॥
तदर्धार्धेन वा कुर्यात् सर्वलक्षणभूषितम् ।
पूर्वोक्तदेशकाले च देवाय विनिवेदयेत् ॥
अष्टम्यां वा प्रदातव्यः शिवाय परमेष्ठिने ।
ब्राह्मणाय दरिद्राय श्रोत्रियायाहिताग्नये ॥
शिवमुद्दिश्य दातव्यः शिवं संपूज्य पूर्ववत् ।

'पूर्ववदिति' लिङ्गपुराणोक्ततुलापुरुषदानवदित्यर्थः ।

एतद्यः कुरुते दानं शिवभक्तिसमन्वितः ।
स्थित्वा स्वर्गे चिरं कालं राजा गजपतिर्भवेत् ॥

इत्यपरो गजदानविधिः ।

विष्णुसंहितायाम् ।

कक्ष्यारज्जुभिरायत्तं शुभासनसमन्वितम् ।
मणिकाञ्चनमालाभिर्भूषितं कर्णचामरैः ॥
सूत्रखण्डैश्च पुष्पैश्च भूषितं दोषवर्जितम् ।
यथा लाभोपपन्नं वा यः प्रयच्छति दन्तिनम् ॥
ब्राह्मणाय दरिद्राय स्वर्गलोके महीयते ।
कर्मक्षयादिहागत्य महाराजो गणाधिपः ॥
सर्वपापविनिर्मुक्तो जायते नात्र संशयः ।

अथ वातुलशास्त्रे ।

गजदानमथो वक्ष्ये संक्षेपाद्विधिना शृणु ।
द्विजानामेव दातव्यं देवानां प्रीतिकारकम् ॥
श्रीकरं परमं धन्यं बलपुष्टिविवर्धनम् ।
रोगघ्नं सन्ततिकरं जगदापद्विनाशनम् ॥
गजं सुलक्षणोपेतं शुद्धदेशसमुद्भवम् ।
युवानं रूपसम्पन्नं सर्वाभरणभूषितम् ॥
पूर्वोक्तदेशकाले च देवालयसमीपके ।
आनीय गजराजानमैरावतकुलोद्भवम् ॥
अभ्यर्च्य गन्धपुष्पाद्यैर्विप्रमुख्याय दापयेत् ।
पुण्याहं तत्र कर्त्तव्यं शिवपूजा तथैव च ॥
आचार्यपूजनं चात्र कर्त्तव्यं विधिपूर्वकम् ।

अथ महाभारते ।

हस्त्यश्वशकटादीनि यः प्रयच्छति शक्तितः ।
द्विजाय सुविशिष्टाय श्रोत्रियायाहिताग्नये ॥
यत् फलं समवाप्नोति तन्मे निगदतः शृणु ।
षष्टिर्वर्षसहस्राणि षष्टिर्वर्षशतानि च ॥
भोगान् भुक्त्वाऽमरपुरे राजा कालक्षयादिह ।

इदं चात्रदानवाक्यम् ।

ॐ अद्यामुकसगोत्राय—इत्यादि इमं हस्तिनं कक्षारज्जुस्थिरासनसहितं काञ्चनमालाकीर्णं चामरगन्धपुष्पालङ्कृतं प्रजापतिदैवतमक्षयस्वर्गकामस्तुभ्यमहं संप्रददे न मम इति । ॐ अद्यामुकसगोत्राय—इत्यादि एतद्धस्तिदानप्रतिष्ठार्थं दक्षिणामिदं सुवर्णं तुभ्यमहं संप्रददे न मम इति ।

इति हस्तिदानविधिः ।

अथाह बौधायनः ।

वाग्विरोधं गुरोः कृत्वा मुखरोगी भवेन्नरः ।
तस्य दानेन विहितः प्रतीकारोऽयमुच्यते ॥
सौवर्णं राजतं ताम्रं पलेनार्धपलेन वा ।
कारयेत् करिणं सौम्यं यथाविभवतोऽथ वा ॥
तस्यैव कारयेद्दन्तौ शुभ्रेण रजतेन तु ।
पुच्छं वा मौक्तिकैः कुर्याद्रत्नाभ्यामक्षिणी तथा ॥
संवेष्ट्य पीतवस्त्रेण गन्धपुष्पाक्षतादिभिः ।
अर्चयेद्धान्यराशिस्थं धान्यं द्रोणाष्टकं मतम् ॥
श्रुतवृत्तोपसंपन्नं ब्राह्मणं संजितेन्द्रियम् ।
दान्तं कुलीनं धर्मिष्ठमनुद्वेगकरं नृणाम् ॥
आहूय परया भक्त्या वस्त्रालङ्कारभूषणैः ।

पूजयेत् प्रयतो भूत्वा तेनैतत् कर्म कारयेत् ॥
समिदाज्यतिलैस्तेन होमं चापि प्रवर्त्तयेत् ।
अग्निनाऽग्निं तथाऽऽधाय शुक्तं चरति च क्रमात् ॥
मन्त्रा एते विनिर्दिष्टा इध्म आश्वत्थ इष्यते ।
कृत्वा चैषाप्रणीताभ्यस्ततो हस्त्यर्चनं भवेत् ॥
स्वाचान्तः कर्म कृत्वाऽस्य प्रणीतामोक्षणं तथा ।
ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ॥
तस्मै हुतवते दद्यात् करिणं तं सदक्षिणम् ।
मन्त्रेणानेन विधिवत् प्राङ्मुखाय विशेषतः ॥
सुप्रतीकगजेन्द्र त्वं सरस्वत्याभिषेचनम् ।
इन्द्रस्य वाहनं शश्वत् सर्वदेवैश्च पूजितम् ॥
दानेनानेन दत्तेन मुखरोगं विनाशय ।

दानमन्त्रः ।

ब्राह्मणान् भोजयेदन्ते सार्धं भुञ्जीत बन्धुभिः ।

इति मुखरोगहरगजदानविधिः ।

अथाह वृद्धगौतमः ।

पलेन वा तदर्धेन तदर्धार्धेन वा पुनः ।
कारयेद्वाहनं हैमं चतुर्दन्तं तु वारणम् ॥
दन्ताः स्वर्णमयाः कार्या रत्नैर्नानाविधैर्युताः ।
सर्वाभरणसंयुक्तं करिणं चोपकारकम् ॥
यत् तत्सर्वं प्रदाने तु तस्य पार्श्वे समाहितः ।
उपचारैः षोडशभिरर्चयेद्गन्धपुष्पकैः ॥
ततो ब्राह्मणमाहूय सर्वशास्त्रार्थकोविदम् ।
श्रुतवृत्तोपसम्पन्नमनुद्वेगकरं नृणाम् ॥

भक्त्या संपूज्य वस्त्राद्यैर्होमं तेन च कारयेत् ।
मन्त्रैः पौराणिकैः सम्यक् संहिताशास्त्रचोदितैः ॥
चत्वारो दिग्गजा ये च पुष्पदन्तादयश्च ये ।
सार्वभौमादयो ये च आहूत्यातोषयामि तान् ॥
समिदाज्यतिलैर्होमो गजस्य प्रीतये भवेत् ।
तस्मै हुतवते सम्यग्घृणिप्रोत्स्यर्थमाहृतः ॥
मन्त्रेणानेन विधिवद्द्याद्भक्तिसमन्वितः ।
प्राङ्मुखस्यो व्रणी चोदङ्मुखायेन्द्रस्य वाहनम् ॥
ऐरावतश्चतुर्दन्ती गजानां नायकस्तु यः ।
दिग्दन्तिनां पूज्यतमो व्रणं क्षपयतु प्रभुः ॥
अनन्तरमनुव्रज्य तमाचार्यो मुदाऽन्वितः ।
ब्राह्मणान् भोजयित्वा च स्वयं भुञ्जीत वाग्यतः ॥
एवं कृते व्रणाबाधात् तत्क्षणादेव सर्पति ।
तेनैव व्रणिभिर्नूनं कार्यमारोग्यहेतवे ॥

इति व्रणघ्नगजदानविधिः ।

## अथ देवताभ्यो गजदानं शिवधर्मे ।

निवेदयति यो नागं भक्त्या स्वर्णाद्यलङ्कृतम् ।
शिवाय पर्वदिवसे तस्य पुण्यफलं शृणु ॥
स मत्तैरावतप्रख्यैर्गजैर्युक्तैः सुशोभनैः ।
प्रक्रीडति महायानैः शतसङ्ख्यैरनेकशः ॥
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।
रुद्रलोके गतश्चान्ते भवेदिह सुराधिप ॥
चतुर्युगसहस्रान्ते स्वर्गं प्राप्य नराधिपः ।

भवेदिन्द्रसमः श्रीमान् रूपवीर्यसमन्वितः ॥

इति शिवगजदानम् ।

## गारुडपुराणे ।

यो जगन्निश्रये नागं प्रयच्छति महामतिः ।
भद्रजातिसमुद्भूतं पद्मनाभाय शक्तितः ॥
कुप्यकंबलशोभाढ्यं घण्टाचामरभूषितम् ।
वज्राङ्कुशसंयुक्तमनेकस्वर्णभूषणम् ॥
नानामण्डनभूयिष्ठं चारुडिण्डिमडम्बुरम् ।
कृत्वा विष्णोर्महापूजां कार्त्तिकैकादशीदिने ॥
द्वादश्यामर्पयेत् तं तु देवदेवाय चक्रिणे ।
त्रिलोकीनाथ देवेश सर्वभूत कृपानिधे ॥
गजदानेन तुष्टस्त्वं प्रयच्छ मम वाञ्छितम् ।
इत्युच्चार्याथ दत्त्वा तं प्रणिपत्य जगत्प्रभुम् ॥
सुरेन्द्रलोकमासाद्य क्रीडते कालमक्षयम् ।
वर्षार्बुदसहस्राणि क्रीडित्वा सुचिरं दिवि ॥
ततो भूलोकमासाद्य सार्वभौमो नृपो भवेत् ।

इति विष्णुगजदानविधिः ।

## आदित्यपुराणे ।

निवेदयति यो नागं भक्त्या स्वर्णाद्यलङ्कृतम् ।
सूर्याय पर्वदिवसे तस्य पुण्यफलं शृणु ॥
स मत्तैरावतप्रख्यैर्गजयुक्तैः सुशोभनैः ।
प्रक्रीडति महायानैः शतसङ्ख्यैरनेकशः ॥
सप्तद्वीपसमुद्रायां क्षितौ नरपतिर्भवेत् ।
भुक्त्वा तु विपुलान् भोगान् प्रलये समुपस्थिते ॥

सूर्ययोगं समासाद्य स तत्रैव प्रलीयते ।

इति सूर्यगजदानविधिः ।

## अथ दासीदानम् । तत्र वह्निपुराणे ।

गृहदानं श्रुतं राजन् दासीदानं ततः शृणु ।
तव भक्त्या प्रवक्ष्यामि महासौख्यप्रदायकम् ॥
चतुर्णामाश्रमाणां हि गृहस्थः श्रेष्ठ उच्यते ।
गृहस्थास्य गृहं राजन् सुगृहे तु वरस्त्रियः ॥
अहिरण्यमदासीकमल्पान्नाद्यमगोरसम् ।
गृहकृपणवृत्तीनां नरकस्यापरो विधिः ॥
अखण्डवासिकं ग्राममदासीकं च यद्गृहम् ।
अनाज्यभोजनं यच्च वृथा तदिति मे मतिः ॥
विभ्रदाभरणा दास्यो यद्गृहं समुपासते ।
तत्रास्ते पङ्कजकरा लक्ष्मीः क्षीरोदशायिनी ॥
न तत्रास्ति गृहे शौचं न सुखं व्यावहारजम् ।
यत्र कर्मकरी नास्ति सर्वकर्मकरी सदा ॥
किङ्कराणां कृतं कर्म न करोतीह यत्कृतम् ।
यदेका कुरुते दासी गृहस्थेन भृता सती ॥
बहुलोकाकुलो ग्रामो दासीदासाकुलं गृहम् ।
बुद्धिर्धर्माकुला यस्य तस्य चेतः किमाकुलम् ॥
यस्य भार्या गृहे दक्षा दासी कर्मण्यनुव्रता ।
भृत्याः सत्योद्यतकरास्त्रिवर्गस्तत्र सिध्यति ॥
यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे ।
तत् तद्गुणवते देयं तदेवाक्षयमिच्छता ॥
एतद्विचार्य हृदये दासीं दद्याद्द्विजातये ।

स्थिरनक्षत्रसंयुक्ते सौम्ये सौम्यग्रहान्विते ॥
दानकालं प्रशंसन्ति सन्तः पर्वणि वा पुनः ।
अलङ्कृत्य यथाशक्त्या वासोभिर्भूषणैस्तथा ॥
ब्राह्मणाय प्रदातव्या मन्त्रेण भक्तितस्तथा ।
इयं दासी मया तुभ्यं श्रीमती प्रतिपादिता ॥
सदा कर्मकरी भोग्या यथेष्टं भद्रमश्नुते* ।

इदमिह दानवाक्यम् ।

ॐ अद्यामुकसगोत्राय–इत्यादि इमां दासीं सुवर्णालङ्कारवतीं गन्धपुष्पाद्यलङ्कृतमक्षयसुखप्राप्तिकामस्तुभ्यमहं सम्प्रददे न मम–इति ।

ॐ अद्यामुकसगोत्राय–इत्यादि एतद्दासीदानप्रतिष्ठार्थं दक्षिणामे-तत् सुवर्णं तुभ्यमहं सम्प्रददे न मम इति ।

पञ्चवर्षाधिका सा तु चत्वारिंशत्समावधिः ।
दासी द्विजाय दातव्या दासदानेऽप्ययं विधिः ॥
दत्त्वा क्षमापयेत् पश्चाद्ब्राह्मणं वस्त्रकाञ्चनैः ।
अनुगत्वा तु सीमायां द्विजं विसर्जयेत् ततः ॥
एवं दत्त्वा महाराज कृतकृत्यो भवेत् पुमान् ।
इह लोके परे चैव सप्तजन्मान्यखण्डितः ॥
गृहकर्मकरीं दद्यात् तरुणीं रूपशालिनीम् ।
बहुद्रव्योपसंयुक्तां ग्रामवेश्मसमन्विताम् ॥
दासीं समीक्ष्य बहुशो गृहकर्मदक्षां
यो ब्राह्मणाय कुलशीलवते ददाति ।
विद्याधराधिपतिभिस्त्वभिपूजितोऽसौ
मर्त्यः प्रयाति स्वजनैः सह विष्णुलोकम् ॥

* भोगमश्नुते इति क्वचित् पाठः ।

कूर्मपुराणे ।

दासीं दद्याद्यथाशक्ति मूल्येनालङ्कृतां शुभाम् ।
सुवर्णरजतैः सार्धं विधिवद्दक्षिणायुताम् ॥
वित्तानुसारात् तां दत्त्वा विप्राय गृहमेधिने ।
मोदतेऽप्सरसां लोके यावत् कल्पशतत्रयम् ॥

इति दासीदानविधिः ।

अथ कालोत्तरे ।

योऽलङ्कृत्य स्त्रियं शम्भोरुत्तमां विनिवेदयेत् ।
सोऽश्वमेधस्य यज्ञस्य फलं शतगुणं लभेत् ॥
सुविनीतां स्त्रियं दासीं भृतकार्यं निवेदयेत् ।
नरमेधस्य यज्ञस्य फलं शतगुणं लभेत् ॥

इति शिवाय दासीदानविधिः ।

अथ रथदानम् । कूर्मपुराणे ।

रथं चतुर्बलीवर्दैरूढं धान्यावृतं त्रिधा ।
वित्तानुसारात् सर्वैश्च रथोपकरणैर्युतम् ॥
सदक्षिणं च विप्राय दत्त्वा शिवपुरं व्रजेत् ।

'धान्यावृतमिति' अष्टादशधान्यानि परिभाषायां व्याख्यातानि । 'त्रिधेति' त्रिप्रोक्तसुवर्णदक्षिणानुसारादुत्तममध्यमकनिष्ठभेदेन त्रैविध्यम् । 'रथोपकरणानि' युगयोक्त्रप्रतोदवरत्रादीनि ।

तत्र दानवाक्यम् ।

ॐ अद्यामुकसगोत्राय—इत्यादि चतुर्बलीवर्दैर्युक्तमष्टादशधान्यपरिवृतं सकलस्वोपस्करयुतमेतं रथं विश्वकर्मदैवतं निरत्ययस्वर्गादिसुखकामस्तुभ्यमहं सम्प्रददे न मम इति ।

अमुकसगोत्राय–इत्यादि एतद्रथदानप्रतिष्ठार्थं दक्षिणामिदं सुवर्णं तुभ्यमहं सम्प्रददे न मम इति ।

दानमन्त्रस्तु स्कन्दपुराणे ।

रथाय रथनाथाय नमस्ते विश्वकर्मणे ।
विश्वभूताय नाथाय अरुणाय नमो नमः ॥

गारुडपुराणे ।

गन्त्रीं तुरङ्गसंयुक्तां यो ददाति द्विजातये ।
सर्वकामसमृद्धात्मा स राजा जायते भुवि ॥

'गन्त्री' नाम रथविशेषः ।

सुचक्राख्यां युगोपेतां मत्तवारणभूषिताम् ।
आस्तीर्णवृक्षास्तरणां योक्त्रयुक्तां सकूबराम् ॥
युक्तां चतुर्भिस्तुरगैर्द्वाभ्यां वा शक्तितो युताम् ।
बलीवर्दयुतां चापि द्विजाय प्रतिपादयेत् ॥
पुण्येऽह्नि विप्रमाहूय कृत्वा वस्त्रादिभूषिताम् ।
सदक्षिणां यथाशक्त्या दद्यात् प्रयतमानसः ॥

दानमन्त्रः ।

गन्त्रीमिमां प्रयच्छामि विश्वकर्माधिदैवताम् ।
दानेनानेन भगवान् प्रीयतां मे परः पुमान् ॥
एवं प्रदाय विधिवद्गन्त्रीं मन्त्रेण मानवः ।
विमानेनार्कवर्णेन देववद्दिवि मोदते ॥
इह लोके भवेद्राजा बलवान् धर्मवत्सलः ।

महाभारते ।

प्रदानं सर्वदानानां शकटस्य विशिष्यते ।
एवमाह महाभागः शाण्डिल्यो भगवान् ऋषिः ॥

शकटं द्रव्यसंयुक्तं यो दद्यात् तु द्विजातये ।
तस्य स्वर्गे विमानं तु सर्वहेममयं शुभम् ॥
दिव्याङ्गनाभिराकीर्णं सर्वरत्नविभूषितम् ।
उपतिष्ठति विप्रेन्द्र सर्वकामफलप्रदम् ॥

इति रथदानविधिः ।

अथ रथदानप्रसङ्गेन शिविकादानमुच्यते । वह्निपुराणे । वसिष्ठ उवाच ।

शृणु चान्यमहीपाल महादानमनुत्तमम् ।
येन वै दत्तमात्रेण मुच्यते नरकार्णवात् ॥
मार्गशीर्षे शुभे पक्षे समुपोष्य हरेर्दिनम् ।
माघफाल्गुनयोर्वाऽपि वैशाखस्य शरत्सु च ॥
द्वादश्यां हरिमभ्यर्च्य कलशोपरिसंस्थितम् ।
शङ्खशार्ङ्गगदाचक्रधरं शक्त्या हिरण्मयम् ॥
शिविकां वक्रवंशोत्थामृजुदारुमयीमथ ।
आनीय सन्निधिं विष्णोः शुभच्छत्रसमन्विताम् ॥
सम्भूष्य च स तां भूषां जागरं तत्र कारयेत् ।
विद्याभिजनसम्पन्नं विदग्धं *शास्त्रवित्तमम् ॥
आज्ञासारं शुचिं दक्षं कलत्रापत्यभूषितम् ।
प्रातः सभार्यमभ्यर्च्य वासोभिः कर्णभूषणैः ॥
उपानच्छुरिकाखड्गपट्टकञ्चुकवेणिकाः ।
आदर्शस्थगिकापानपात्रं च कांस्यभाजनम् ॥
चत्वारो वृषभा देया धेनवश्च सुलक्षणाः ।
शिविकावाहनानां तु तथैव च्छत्रधारिणः ॥

* विद्वांसमिति क्वचित् पाठः ।

वृत्तिर्देया तथाऽन्नं च वर्षार्हं ब्राह्मणस्य च ।
वर्षे वर्षे पुनर्देयं ब्राह्मणस्यैतदेव तु ॥
वृत्तिरेव त्वसम्पत्तौ वर्षे वर्षेऽपि वार्षिकी ।
इहामुत्रातपत्राणं कुरु केशव मे प्रभो ॥
छत्रं त्वत्प्रीतये दत्तं ब्राह्मणाय मया शुभम् ।
देवदेव जगन्नाथ विश्वात्मन् दत्तयाऽनया ॥
प्रभो शिविकया देव प्रीतो भव जनार्दन ।

इति दानमन्त्रः ।

दत्वा तु ज्ञानविदुषे सपत्नीकाय पुत्रिणे ।
सुरापः स्तेनकृत् सङ्गी ब्रह्महा गुरुतल्पगः ॥
शिविकादानमाहात्म्यान्मुच्यते पातकात् स्फुटम् ।
पितृपक्षं मातृपक्षं पत्नीपक्षं तथैव च ॥
आत्मानं बन्धुपक्षं च तारयेन्नरकार्णवात् ।
भुक्त्वा तु विपुलान् भोगानिहामुत्रसुखप्रदान् ॥
सपत्नीकः सपितृको विष्णुसायुज्यमश्नुते ।

इति शिविकादानविधिः ।

अथ क्रमप्राप्तस्य महीदानस्यातिदानप्रकरणे निरूपित-स्वाद्रथदानानन्तरं गृहदानमारभ्यते । तत्र संवर्त्तः ।

गृहदाता सुखी प्राज्ञो वितृष्णः सर्ववस्तुषु ।
प्रज्ञासुखविवृद्ध्यर्थं पात्रे देयमतो गृहम् ॥

बृहस्पतिः ।

रसान्नोपस्करयुतं गृहं विप्राय योऽर्पयेत् ।
न हीयते तस्य वंशः स्वर्गं प्राप्नोत्यनुत्तमम् ॥

**वेदव्यासः ।**

सर्वकामैः सुसम्पूर्णं दत्त्वा वेश्म हिरण्मयम् ।
मुद्गलाय गतः स्वर्गं शतद्युम्नो महामतिः ॥
सर्वरत्नं वृषाः दर्भा युवानोऽश्वाः प्रियाः स्त्रियः ।
रम्यमावसथं चैव दत्त्वाऽमुं लोकमास्थितः ॥

**महाभारते ।**

नैवेशिकं सर्वगुणोपपन्नं ददाति यश्चैव नरो द्विजाय ।
स्वाध्यायचारित्र्यगुणाय राजँस्तस्यापि लोकाः कुरुजाङ्गलेषु ॥
बीजैरशून्यं शयनैरुपेतं दद्याद्गृहं यः पुरुषो द्विजाय ।
मुख्याभिरामं बहुरत्नपूर्णं लभेदधिष्ठानवरं स राजन् ॥

**तथा ।**

यस्तु नैवेशिकं शुद्धं ब्राह्मणाय प्रयच्छति ।
त्रिंशत्कोट्योऽथ वर्षाणां स्वर्गलोके महीयते ॥
ततोऽवतीर्णः कालेन मानुषं लोकमागतः ।
नगराधिपतिः श्रीमान् राजराजो भवेद्ध्रुवम् ॥

**आह व्यासः ।**

गृहं दीपप्रभोद्योतशयनासनभाजनैः ।
उपस्करैश्च सम्पूर्णं सर्वधान्यप्रपूरितम् ॥

सर्वधान्यान्युक्तानि । उपस्करा मञ्चतूलिकोपधानासनकांस्यादिभाजनदिपिका-पेषणयन्त्रधान्यादिमानभाण्डदण्डोलूखलमुसलमथमथस्यालोकलशवारिधानीशूर्पव्यजन-छत्रोपानहखड्गासिपुत्रिकासम्मार्जनीगोबलीवर्दाश्च मधिपीततण्डुलघततैलपूर्णपात्रदा-षधवस्त्रचन्दनादिगन्धद्रव्यताम्बूलोपकरणकाष्ठचुल्लीदासदासीप्रभृतयः ।

ब्राह्मणाय दरिद्राय सुशीलाय ददाति यः ।
तथाऽध्ययनशीलाय शृणु तस्यापि यत् फलम् ॥

देवैः पितृगणैर्युक्तो ब्रह्मर्षिमनुजर्षिभिः ।
तत्र वर्षशतान्येव दशतिष्ठन्त्यनामयाः ॥
तस्मादिह समागत्य सप्तद्वीपाधिपो भवेत् ।
बहुप्रदो बहुधनो द्विजो वा वेदपारगः ॥

गरुडपुराणे ।

ऐष्टकं दारवं वाऽपि मृण्मयं वाऽपि शक्तितः ।
सर्वोपस्करणोपेतं यो दद्याद्विपुलं गृहम् ॥
ब्राह्मणाय दरिद्राय विदुषे च कुटुम्बिने ।
क्रीडित्वा सुचिरं स्वर्गे मानुष्यं लोकमागतः ॥
भवत्यव्याहतैश्वर्यः सर्वकामसमन्वितः ।

कूर्मपुराणे ।

शक्तितः सर्ववित्तेन पूर्णं गृहमपि त्रिधा ।
सदक्षिणं द्विजे दत्त्वा ब्रह्मलोकं व्रजेन्नरः ॥

'सर्ववित्तेन' सर्वोपस्करेणेत्यर्थः । 'त्रिधा' पूर्ववदुत्तममध्यमादिभेदेन ।

ब्रह्मवैवर्त्तवह्निपुराणयोः ।

न गार्हस्थ्यात् परो धर्मो नैव दानं गृहात् परम् ।
नानृतादधिकं पापं न पूज्यो ब्राह्मणात् परः ॥
धनधान्यसमायुक्तं कलत्रापत्यसङ्कुलम् ।
गोगजाश्वगणाकीर्णं गृहं स्वर्गाद्विशिष्यते ॥
यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः ।
एवं गृहस्थमाश्रित्य सर्वे जीवन्ति चाश्रमाः ॥
धर्ममर्थं च कामं च मिश्राश्च प्रथितं यशः ।
प्राप्तुकामैर्नरै राजन् सदा सेव्यो गृहाश्रमः ॥

न गृहेण विना धर्मो नार्थकामौ सुखं न च ।
लोकयात्रा यशः स्वर्गः प्राप्यते राजसत्तम ॥
न स्वर्गे नापवर्गेषु न चान्येष्वपि धामसु ।
प्रसार्य पादौ यद्रात्रौ स्वगृहे स्वपतां सुखम् ॥
दिनानि तानि गण्यन्ते यानि यान्ति गृहाश्रमे ।
अपि शाकम्पचानस्य स्वगृहे परमं सुखम् ॥
इति मत्वा महाराज कारयित्वा सुशोभनम् ।
भवनं ब्राह्मणे देयं महतीं भूतिमिच्छता ॥

ब्रह्माण्डपुराणे

गृहं कृत्वा शुभस्तम्भं बहुचित्रं सुशोभनम् ।
सप्राकारप्रतोलीकं कवाटार्गलयन्त्रितम् ॥
सुधावलिप्तं चतुरं विस्तीर्णाङ्गणशोभितम् ।
शुभप्रवेशनिष्कासमुपकार्यादिसंयुतम् ॥
मत्तवारणशोभाढ्यं गवाक्षादिविभूषितम् ।
दत्त्वा द्विजातिमुख्याय न शोचति कृताकृते ॥

मत्स्यपुराणे ।

पक्केष्टकामयं कृत्वा शैलजं वाऽपि दारुजम् ।
मृण्मयं वाऽपि भवनं शुभलक्षणसंयुतम् ॥
प्रभूतबलिपुष्पाढ्यं धेन्वा चैव समन्वितम् ।
अर्जुनैः सरलैः सालैरन्यैश्चैव मनोरमैः ॥
तिमिरैः सर्जवृक्षैश्च कदम्बैः सह वञ्जुलैः ।
शुभस्थानसमुत्पन्नैर्वास्तुलक्षणसंयुतम् ॥
स्थापनं च यथान्यायं भूमेश्चैव तु शोभनम् ।
मार्जनं सिञ्चनं चैवं सन्तानीयेन कारयेत् ॥

मङ्गल्यानुपहारांश्च वास्तुविद्योदितांस्तथा ।
देवतापञ्चकं तत्र चत्वारिंशत्समन्वितम् ॥
पूजयित्वा यथान्यायं ततो दद्याद्गृहं गृही ।

वास्तुलक्षणं पञ्चचत्वारिंशद्देवताक्रमश्च तस्मिन्नेव पुराणे ।

एकाशीतिपदं कृत्वा रेणुभिः कनकेन च ।
पश्चात् पिष्टेनानुलिम्पेत् सूत्रेणालोड्य सर्वतः ॥
दश पूर्वापरा रेखा दश चैवोत्तरायताः ।
सर्ववास्तुविभागेषु विज्ञेया नवका* न च ॥
एकाशीतिपदं कृत्वा वास्तुवित् सर्ववास्तुषु ।
पदस्थान् पूजयेद्देवांस्त्रिंशत्पञ्चदशैव तु ॥
द्वात्रिंशद्बाह्यतः पूज्याः पूज्याश्चान्तस्त्रयोदश ।

अत्रैवं प्रयोगः ।

पूर्वं तावदमेध्यश्मशानादिरहितामनूषरां शुभवर्णगन्धादिलक्ष न्वितां चतुरस्रां प्रागुदक्प्रवणां भूमिं परीक्ष्य गोमयादिनोपलिप्य त सुधालिप्तानि समान्तरालानि दशसूत्राणि पातयेत् । तथैव दश दक्षि त्तरायतानि । ततश्च नवकोष्ठकासु नवपङ्क्तिषु सर्वमेकाशीतिपदं मण्ड सम्पद्यते । तत्र मध्यमकोष्ठनवकमुत्सृज्य नवपदकमेव पदं विदध्यात् । तत् रःस्थितं च पार्श्वस्थितकोष्ठद्वयाभ्यामेकीकुर्यात् । आग्नेय्यां त्वेकमेव । ए दक्षिणपश्चिमोत्तराणि त्रीणि त्रीण्येकीकृत्य कोणैकैकं परिशिष्य ब्रह्मस नस्य परिधिं निष्पादयेत् । बाह्यतश्चेशानादिकोणेष्वेककोष्ठकान्येव चत्व चत्वारि पदानि परिशिष्य प्राच्यादिदिक्षु कोष्ठकानि श्रेणीभूतानि प पञ्च पदानि विदध्यात् । ततश्च पञ्चचत्वारिंशत् पदानि निष्पद्यन्ते ।

* नरकाय चेति क्वचित् पाठः ।

मध्ये नवपदस्त्वेकः चत्वारस्त्रिपदाः स्मृताः ।
विंशतिस्त्वेकपदिकास्तावन्तो द्विपदाः स्मृताः ॥
एवं प्रतिष्ठिता देवाश्चत्वारिंशच्च पञ्च च ।
नामतस्तान् प्रवक्ष्यामि स्थानानि च निबोधत ॥
ईशानकोणादिसुरान् पूजयेत् क्रमशो न च ।
शिखी चैवाथ पर्जन्यो जयन्तः कुलिशायुधः ॥
सूर्यः सत्यो भृशश्चैव आकाशो वायुरेव च ।
पूषाऽथ वितथश्चैव बृहत्क्षत्रयमावुभौ ॥
गन्धर्वो भृङ्गराजश्च मृगः पितृगणस्तथा ।
दौवारिकोऽथ सुग्रीवः पुष्पदन्तश्च वारुणः ॥
असुरश्चैव शोषश्च पापयक्ष्मावरोगकः ।
भल्लाटसोमनागौ च अदितिश्च दितिस्तथा ॥
फणावान् मुख्यभल्लाटौ सोमनागौ तथाऽपरौ ।
अदितिश्च दितिश्चैव स्थाप्याः प्रणवनामभिः ॥
बहिर्द्वात्रिंशदेते तु तदन्तश्चतुरः शृणु ।
आपश्चैवाथ सावित्रो जयो रुद्रस्तथैव च ॥
अर्यमा सविता चैव विवस्वान् विबुधाधिपः ।
मित्रोऽथ राजयक्ष्मा च तथा पृथ्वीधरः क्रमात् ॥
अष्टमस्त्वापवत्सस्तु परितो ब्रह्मणः स्मृताः ।

अत्र तावद्द्वात्रिंशत्पदे बहिःपरिधौ प्रथममीशानकोणे शिखिनं संस्थाप्य प्रदक्षिणक्रमेण पर्जन्यादिदेवान् स्थापयेत् । 'तदन्तश्चतुर' इति पर्जन्यात् पश्चिमे एककोष्ठके पदे आपः । आकाशात् पश्चिमे सावित्रः । दौवारिकात् पूर्वस्मिन् जयः । आपात् पूर्वस्मिन् रुद्र इति बहिःपरिधिरन्तश्चतुरो देवान् स्थापयेत् । 'परितो ब्रह्मण' इति मध्यपदस्थितस्य ब्रह्मणः पुरस्तादर्यमणं संस्थाप्य प्रदक्षिणक्रमेणाष्टौ देवान् स्थापयेत् ।

अथोपसंहरति ।

आपश्चैवापवत्सश्च पर्जन्योऽग्निर्दितिस्तथा
पदिकानां तु वर्गोऽयमेवं कोणेष्वशेषतः ॥
तन्मध्ये तु बहिर्विंशद्द्विपदास्ते तु सर्वतः*
अर्यमा च विवस्वाँश्च मित्रः पृथ्वीधरस्तथा ॥
ब्रह्मणः परितो दिक्षु त्रिपदाश्चैव सर्वतः ।

'पदिकानाम्' इत्यादि । अयमेकपदानां पञ्चानां देवानामीशानकोणे वर्गः सम्पद्यते । एवमाग्नेयादिकोणेष्वपि एकपदाः पञ्च देवता भवन्ति । 'तन्मध्ये तु बहि' रिति । कोणमध्ये बाह्यपरिधौ विंशतिद्विपदा भवन्ति । अर्यमादयश्चत्वारस्त्रिपदा मध्ये ब्रह्मा नवपद इति । एवं पञ्चचत्वारिंशद्देवान् गन्धमाल्यादिभिः संपूज्य वास्तुविद्योक्तप्रकारेण गृहारम्भं कुर्यात् ।

तस्मिन्नेव पुराणे ।

वास्तौ परीक्षिते सम्यग्वास्तुगेहे विचक्षणः ।
वास्तूपशमनं कुर्यात् समिद्भिर्बलिकर्म च ॥
जीर्णोद्धारे तथाऽऽधाने तथा च नववेश्मनि ।
नवप्रासादभवने प्रासादपरिवर्त्तने ॥
द्वाराभिवर्त्तने तद्वत् प्रासादेषु गृहेषु च ।
वास्तूपशमनं कुर्यात् पूर्वमेव विचक्षणः ॥
एकाशीतिपदं लिख्य वास्तुमध्ये तु पिष्टकैः ।
होमस्त्रिमेखले कार्यः कुण्डे हस्तप्रमाणके ॥
यवैः कृष्णतिलैश्चैव समिद्भिः क्षीरवृक्षजैः ।
पालाशैः खादिरैर्वाऽपामार्गोदुम्बरसम्भवैः ॥
कुशदूर्वामयैर्वाऽपि मधुसर्पिःसमन्वितैः ।

* बहिर्विंशत्तु द्विपदाः पञ्च सर्वत इति न· प्र· पु· पाठः ।

कार्यस्तु पञ्चभिर्विप्रैर्विल्वबीजैरथापि वा ॥
होमान्ते भक्ष्यभोज्यैस्तु वास्तुदेशे बलिं हरेत् ।
तद्वद्विशेषनैवेद्यमिदं दद्यात् क्रमेण तु ॥
ईशकोणे घृताक्तं तच्छिखिने विनिवेदयेत् ।
ओदनं सोत्पलं दद्यात् पर्जन्याय घृतान्वितम् ॥
जयन्ताय ध्वजं पीतं पैष्टं कूर्मं च विन्यसेत् ।
इन्द्राय पञ्चरत्नानि पैष्टं च कुलिशं तथा ॥
वितानकं च सूर्याय धूपं सक्तुं तथैव च ।
सत्याय घृतगोधूमं मत्स्यान् दद्याद्भृशाय च ॥
सष्कुल्यं चान्तरिक्षाय दद्यात् सक्तूँश्च वायवे ।
लाजाः पूष्णे तु दातव्या वितथे चणकौदनम् ॥
गृहक्षताय मध्वन्नं यमाय पिशितौदनम् ।
गन्धौदनं च गान्धर्वे भृङ्गे मेषस्य जिह्विकाम् ॥
दौवारिके दन्तकाष्ठं पैष्टं कृष्णबलिं तथा ।
मृगाय यावकं दद्यात् पितृभ्यः कृशराँस्तथा ॥
सुग्रीवेऽपूपकान् दद्यात् पुष्पदन्ताय पायसम् ।
कुशस्तम्बेन संयुक्तं तथा पद्मं च वारुणे ॥
पैष्टं हिरण्मयं दद्यादसुराय सुरासवम् ।
घृतौदनं च शोषाय यवान् वै पापयक्ष्मणे ॥
घृतलड्डुकाँस्तु रोगाय नागपुष्पं फणावते ।
भक्ष्यं मुख्याय दातव्यं मुद्गौदनमतः परम् ॥
भल्लाटस्थानके दद्यात् सोमाय मधुपायसम् ।
नागाय शालिकं पिष्टमदित्ये लोपिकास्तथा ॥
दितेस्तु पूरिकां दद्यादित्येवं बाह्यतो बलिः ।

क्षीरमापाय दातव्यमापवत्साय वै दधि ॥
सावित्रे लड्डुकान् दद्यात् समरीचं कुशोदकम् ।
सवितुर्गुडपूपाँश्च जयाय घृतचन्दनम् ॥
विवस्वते पुनर्दद्याद्रक्तचन्दनपायसम् ।
हरितालोल्वणं दद्यादिन्द्राय घृतसंयुतम् ॥
गुडोदनं तु मित्राय रुद्राय घृतपायसम् ।
आमपक्वं तथा मांसं देयं स्याद्राजयक्ष्मणे ॥
पृथ्वीधराय मांसानि कूष्माण्डानि च दापयेत् ।
शर्करापायसं दद्यादर्यम्णे पानमेव तु ॥
पञ्चगव्यं यवाँश्चैव तिलाक्षतहविश्चरुम् ।
भक्ष्यं भोज्यं च विविधं ब्रह्मणे विनिवेदयेत् ॥
एवं सम्पूजिता देवाः शान्तिं कुर्वन्ति ते सदा ।
सर्वेषां काञ्चनं दद्याद्ब्रह्मणे गां पयस्विनीम् ॥
राक्षसानां बलिर्देयो मांसौदनसमन्वितः ।
ईशाने नागमातृभ्यश्चरुं च विनिवेदयेत् ॥
मांसौदनं सरुधिरं हरिद्रौदनमेव च ।
आग्नेयीं दिशमाश्रित्य विदार्यै विनिवेदयेत् ॥
दध्योदनं सरुधिरं मत्स्यखण्डैश्च संयुतम् ।
पीतरक्तं बलिं दद्यात् पूतनायै तु राक्षसे ॥
वायव्ये पापराक्षस्यै मत्स्यं मांसं सुरासवम् ।
पायसं चापि दातव्यं स्वनाम्ना सर्वतः क्रमात् ॥
नमस्कारानुयुक्तेन प्रणवाद्येन सर्वतः ।
प्राग्मांसौदनं स्कन्दाय दक्षिणस्यां तथा परम् ॥
कृशरापोलिकादानमर्यम्णे मूलमन्त्रतः ।

मांसं सरुधिरं दद्याज्जृम्भकाय तु पश्चिमे ॥
पिलिपिच्छये* रक्ताक्तपिष्टमन्तरतोऽपि च ।
भक्ष्यभोज्यैर्दिगीशानां तन्मन्त्रैश्च बलिं हरेत् ॥
सर्वासां पायसं साज्यं यथोक्तबल्यसम्भवे ।
तदभावे दर्भपुष्पैर्दध्यक्षतघृतैर्बलिः ॥
गोमयेनोपलिप्तायां मण्डलात् पूर्वतः क्षितौ ।
गन्धादिपूर्वकं सर्वं भौतिकं च बलिं हरेत् ॥
भूतेभ्योऽथ पितृभ्यश्च राक्षसेभ्यो नमो नमः ।
पिशाचेभ्योऽथ मातृभ्यो गणेभ्यश्च पृथक् पृथक् ॥
दिव्यान्तरिक्षभौमेभ्यः प्रणवाद्यनमोऽन्तकैः ।
ततः सर्वौषधिस्नानं यजमानस्य कारयेत् ॥
द्विजाँस्तु पूजयेद्भक्त्या ये चान्ये गृहमागताः ।
एतद्वास्तूपशमनं कृत्वा कर्म समाचरेत् ॥
प्रासादभवनोद्यानप्रारम्भे परिवर्त्तने ।
पुरवेश्मप्रवेशे च सर्वदोषोपशान्तये ॥
वास्तूपशमनं कृत्वा ततः सूत्रेण वेष्टयेत् ।
रक्षोघ्नपावमानेन सूक्तेन भवनादिकम् ॥
नृत्यमङ्गलवाद्यैश्च कुर्याद्ब्राह्मणवाचनम् ।
अनेन विधिना यस्तु प्रतिसंवत्सरं बुधः ॥
गृहे वाऽऽयतने कुर्यान्न स दुःखमवाप्नुयात् ।
न च व्याधिभयं तस्य न च बन्धुधनक्षयः ॥
जीवेद्वर्षशतं स्वर्गे कल्पमेकं वसेन्नरः ।

---

* पिलिपिच्छायेति न० प्र० पु० पाठः ।

अथ ब्रह्मवैवर्त्ते ।

कारयित्वा गृहान् रम्यान् ऋतुवस्वर्कसङ्ख्यया ।
भुवनाष्टादशत्रिंशत् तत्तन्नक्षत्रसङ्ख्यया ॥
शक्त्या तद्वद्विगुणानेव शतं यावत् सहस्रकम् ।
कुड्यस्तम्भगवाक्षाद्यान् विचित्रान् बहुभूमिकान् ॥
सप्राकारप्रतोलीकान् कपाटार्गलयन्त्रकान् ।
सुधाधवलितान् रम्यान् विस्तीर्णाङ्गणवाटकान् ॥
सप्तधातुमयैर्भाण्डैः पञ्चरत्नैः समन्वितैः ।
चर्मकाष्ठमयैर्हस्तिदन्तवस्त्रमयैस्तथा ॥
मृण्मयोपस्कराकीर्णान् वस्त्रोपकरणान्वितान् ।
सर्वोपस्करसम्भारशणवल्कलराजितान् ॥
राजितांस्तृणपाषाणैः काष्ठसञ्चयसंयुतान् ।
सर्वधान्यसमायुक्तैः कुशूलैश्च विराजितान् ॥
गोमहिष्यश्ववृषभप्रेष्यदासीजनान्वितान् ।
क्षेत्रारामजलासन्नान् दृढान् हर्म्यवरान् शुभान् ॥
सम्पूर्णान् सप्तधान्यैश्च घृततैलगुडादिभिः ।
तिलतण्डुलशालीक्षुमाषगोधूमसर्षपैः ॥
प्रियङ्गुयवनीवारनिष्पावराजमुद्गकैः ।
मसूरचणकावर्त्तसकुष्ठककुलत्थकैः ॥
लवणार्द्रकखर्जूरद्राक्षाजीरकधान्यकैः ।
हिङ्गुकुङ्कुमकर्पूरस्नानद्रव्यैः सचन्दनैः ॥
रूप्योपस्करपर्यङ्कतूलीगण्डोपधानकैः ।
चुल्लीच्छेदनमन्थानभद्रासनकट्टत्थकैः ॥
पिठरोलूखलस्थालीसूर्पदर्पणयन्त्रकैः ।

मुसलासिकृपाणीषुदण्डकोदण्डमुद्गरैः ॥
गृहाट्टतापिकादर्वीदृषल्लोष्ट्रकहस्तकैः ।
चरकालुकलोहीन्द्रदीपिकाग्निष्टिका घटी ॥
कण्डनी पेषणी तद्वदुदकुम्भप्रमार्जनी ।
मञ्जूषालिञ्जरान्दोलमुख्योपस्करसंयुतान् ॥
शक्त्या स्वर्णसहस्रेण शतेनार्धार्धसंयुतान् ।
यथाशक्त्या रूप्ययुतान् कृतान् निर्मलचेतसा ॥
इत्येवमादिसंपूर्णान् गृहान् दद्याद्द्विजातिषु ।

वह्निपुराणे ।

कर्त्तुश्चन्द्रबलोपेते स्थिरनक्षत्रसंयुते ।
शुभेऽह्नि विप्रकथिते दानकालः प्रशस्यते ॥
शुक्लपक्षे तृतीयायां पूर्णिमायामथापि वा ।
एवं संभृतसम्भारं गृहं कृत्वा द्विजोत्तमान् ॥
कुलशीलसमायुक्तान् शतसंख्यान्* निमन्त्रयेत् ।
अधीतवेदशास्त्रज्ञान् पुराणस्मृतिपारगान् ॥
गृहधर्मरतान् दान्तान् निःस्वान् बहुकुटुम्बिनः ।
निराश्रयाँस्तथा राजँस्तेभ्यो दत्तं महाफलम् ॥
अलङ्कृत्य सपत्नीकान् वस्त्राभरणकुण्डलैः ।
कृत्वाऽग्नियजनं भूयो वास्तुं पूज्य विधानतः ॥
समुच्चरन्निदं दाता विदधीत गतस्मयः ।
जगदीशो गृहावासो गोविन्दः प्रीयतामिति ॥

ब्रह्मवैवर्त्ते ।

गृहाङ्गणे कारयित्वा कुण्डमेकं समेखलम् ।

---

* गृहसंख्यानिति न· प्र· पु· पाठः ।

गृहयज्ञः प्रकर्त्तव्यस्तुष्टिपुष्टिकरः सदा ॥

गृहयज्ञविधानं तु व्रतखण्डे विलोकनीयम् ।

रक्षोघ्नानि च सूक्तानि पठेयुर्ब्राह्मणास्ततः ।
वास्तोः पूजा प्रकर्त्तव्या दिक्पालानां बलिं क्षिपेत् ॥
ततः पुण्याहघोषेण ब्राह्मणास्तेषु वेश्मसु ।
प्रवेशयित्वा शय्यासु सभार्यासूपवेशयेत् ॥
यजमानस्ततः प्राज्ञः शुक्लाम्बरधरः शुचिः ।
यद्यस्य विहितं पूर्वं तत् तस्मै प्रतिपादयेत् ॥

## अत्रेदं दानवाक्यम् ।

ॐ अद्यामुकसगोत्राय–इत्यादि इदं गृहं शयनासनभाजनोपस्कर-युतं सर्वधान्यप्रपूरितं सर्वदैवतममुककामस्तुभ्यमहं संप्रददे न मम इत्युक्त्वा इदं गृहं गृहाण इत्यादिवक्ष्यमाणमन्त्रं पठेत् ।

ॐ अद्यामुकसगोत्राय–इत्यादि एतद्गृहदानप्रतिष्ठार्थं दक्षिणामिदं हिरण्यं तुभ्यमहं संप्रददे न मम इति ।

दक्षिणासंख्या तु शक्त्या स्वर्णसहस्रेणेत्यादिना दर्शितैव । प्रतिग्रहीता स्वस्ती-त्युक्त्वा कोऽदादिति यजुर्वेदप्रसिद्धं मन्त्रमुदाहरेत् ।

इदं गृहं गृहाण त्वं सर्वोपस्करसंयुतम् ।
तव विप्र प्रसादेन ममास्त्वभिमतं फलम् ॥
एवमेकैकशो दत्त्वा प्रणिपत्य समर्पयेत् ।
स्वस्तीति ब्राह्मणैर्वाच्यं कोऽदादिति च पूजितैः ॥

## बृहस्पतिस्मृतौ पुनरयं मन्त्रः ।

गृहं मम विभूत्यर्थं गृहाण त्वं द्विजोत्तम ।
प्रीयतां मे जगद्योनिर्वास्तुरूपी जनार्दनः ॥

मत्स्यपुराणे ।

प्राप्ते दानदिने कार्यमैशान्यां हस्तसंमितम् ।
चतुरस्रं समं कुण्डं मेखलायोनिभूषितम् ॥
पूर्वोत्तरे हस्तमिता च वेदी गृहादिदेवेश्वरपूजनाय ।
अत्रार्चनं ब्रह्मशिवाच्युतानां सूर्यस्य कार्यं फलपुष्पगन्धैः ॥

ब्रह्मादिप्रतिमालक्षणमुक्तं तुलापुरुषे ।

द्वारेषु कार्याणि च तोरणानि पत्रैरपि क्षीरवनस्पतीनाम् ।
मध्ये च संस्थाप्य च पूर्णकुम्भं स्रग्गन्धधूपाम्बररत्नयुक्तम् ॥
गृह्योक्तेन विधानेन कृत्वा चाग्निमुखं ततः ।
गव्येन पयसा दिव्यं स्थालीपाकं चरुं श्रपेत् ॥
ततश्च तं चैव चरुं जुहोमि मध्यस्थिताभ्यो गृहदेवताभ्यः ।
बलिं च सम्यग्विधिसंप्रयोगात् क्षीरेण धारापरितस्तु दद्यात् ॥
ब्राह्मणं त्वर्चयेत् पूर्वं परितुष्टं क्षमापयेत् ।
शय्यां दक्षिणभागे तु सोपधानां सदीपिकाम् ॥
सितवस्त्रैश्च संछन्नां लक्ष्मीनारायणान्विताम् ।

लक्ष्मीनारायणलक्षणं देवतादानप्रकरणे लक्ष्मीनारायणदाने वक्ष्यते । तद्रूपं च सुवर्णमयं यथाशक्ति निर्माय-

सिताम्बरं कुण्डलहेमभूषितं केयूरकण्ठाभरणाभिरामम् ।
पत्नीसमेतं च करे गृहीत्वा दाता पठेन्मन्त्रमिमं गृहस्थः ॥
एह्येहि नारायण दिव्यरूप सर्वामरैर्वन्दितपादपद्म ।
शुभाशुभानन्दसुधाम धीर लक्ष्मीयुतस्त्वं हि गृहं गृहाण ॥
नमः कौस्तुभनाथाय हिरण्यकवचाय च ।
क्षीरोदार्णवसुप्ताय जगद्धात्रे नमो नमः ॥
नमो हिरण्यगर्भाय जगन्नाथाय वै नमः ।

चराचरस्य जगतो गृहभूताय वै नमः ॥
भूर्लोकप्रमुखा लोकास्तव देहे व्यवस्थिताः ।
नन्दन्ति यावत् कल्पान्तं तथा तस्मिन् भवान् गृही ॥
त्वत्प्रसादेन देवेश पुत्रैः पौत्रैर्युतो गृही ।
पञ्चयज्ञक्रियायुक्तो वसेदाचन्द्रतारकम् ॥
एवमुक्त्वा तु देवेशं सपत्नीकं द्विजोत्तमम् ।
तिलप्रस्थोपरिस्थायां शय्यायामुपवेश्य च ॥
वदेदिदं ततो वाक्यं सर्वधान्ययुतं त्विदम् ।
सर्वोपस्करसंयुक्तं गृहं गृह्ण द्विजोत्तम ॥
तद्योपकरणं सर्वं दाम्पत्यस्य निवेदयेत् ।
पादुकोपानहच्छत्रभूषणासनभाजनैः ॥
सम्पन्नं चार्थसम्पन्नं गृहोपस्करभूषणम् ।
सर्वसंपूर्णमेवास्तु पठित्वैवं निवेदयेत् ॥

ब्रह्मवैवर्त्ते ।

गृहोपकरणैस्तुल्यां दक्षिणां भवनं विना ।
उपदेष्टुरपीच्छन्ति तन्मूलत्वान्महर्षयः ॥
सुयतीन् पूजयित्वा तु ततः स्वभवनं व्रजेत् ।
दद्यादनेन विधिना बह्वन्येकमथो गृहम् ॥
न सङ्ख्यानियमः कार्यः शक्तिरत्र नियामिका ।
शीतवातातपहरं दत्त्वा तृणकुटीरकम् ॥
इष्टान् कामानवाप्नोति प्रेत्य स्वर्गे महीयते ।
ऋग्नितम्बा यजुर्मध्या सामस्वरविभूषिता ॥
अत्यन्तसुखलब्धेन देया ब्रह्मपुरी प्रिया ।
गोभूहिरण्यदानानि नियमाः संयमास्तथा ॥

गृहदानस्य कौन्तेय कलां नार्हन्ति षोडशीम् ।

वह्निपुराणे ।

एवं दत्त्वा गृहं राजन् सर्वोपस्करसंयुतम् ।
नरो विष्णुपुरं याति सेव्यमानोऽप्सरोगणैः ॥
तत्र कल्पत्रयं भुक्त्वा भोगान् देवैः सुदुर्लभान् ।
कालादिह समायातो राजा भवति धार्मिकः ॥
पुनर्विष्णुपुरं लब्ध्वा सप्तजन्मनि पार्थिवः ।
रूपसौभाग्यसंपन्नो दीर्घायुर्निरुपद्रवः ॥
पुत्रपौत्रयुतो लक्ष्म्या वियोगरहितः सुखी ।
भवेन्नरो महाराज गृहं तस्मात् प्रदीयते ॥

मत्स्यपुराणे ।

य एवं सर्वसंपन्नं पक्केष्टं विनिवेदयेत् ।
कल्पकोटिशतं यावद्ब्रह्मलोके महीयते ॥
शैलजं दारुजं वाऽपि यो दद्याद्विधिपूर्वकम् ।
वसेत् क्षीरार्णवे रम्ये नारायणसमोपतः ॥
मृण्मयं चैव यो दद्याद्गृहं चोपस्करान्वितम् ।
पुरेषु लोकपालानां प्रीत्या मन्वन्तरं वसेत् ॥
कलिकलुषविमुक्तः पूजितः सिद्धसङ्घै-
　रमरचमरमालावीज्यमानोऽप्सरोभिः ।
पितृशतमपि बन्धून् पुत्रपौत्रप्रपौत्रा-
　नपि नरकनिमग्नाँस्तारयेदेक एव ॥
दिव्यभोगाँस्ततो भुक्त्वा राजराजो भवेद्भुवि ।
नारायणबलोपेतो नारायणपरायणः ॥
नारायणकथासक्तो जीवेद्वर्षशतं सुखी ।

भविष्यत्पुराणे ।

य: कारयेत् सुदृढहर्म्यवर्तो महार्थां
सत्सेवितां द्विजपुरीं सुजनोपभोग्याम् ।
दिव्याप्सरोभिरभिनन्दितचित्तवृत्तिः
प्राप्नोत्यसावनुपमं पदमिन्दुमौलेः ॥

इति गृहदानविधिः ।

सुमन्तुरुवाच ।

मृण्मयं दारुजं शैलं पक्केष्टकमथापि वा ।
कृत्वाऽनन्तगृहं वाऽपि यथाविभवसंभवात् ॥
सर्वोपकरणोपेतं सर्वधान्यसमन्वितम् ।
सूर्यायेत्थं गृहं दत्त्वा सर्वान् कामानवाप्नुयात् ॥

इति भविष्यत्पुराणोक्तः सूर्यगृहदानविधिः ।

महाभारते ।

तथा गवार्थे शरणं शीतवातहरं शुभम् ।
आसप्तमं तारयित्वा कुलं भरतसत्तम ॥

स्कन्दपुराणे ।

य: कारयित्वा सुदृढं विस्तीर्णं सुसमस्थलम् ।
शीतवातातपहरं सिकताभिर्मृदूकृतम् ॥
शरीरकण्डूतिहरं स्तम्भसम्भारसङ्कुलम् ।
भक्ष्यप्रकल्पितानेकतृणाधारवदण्डकम् ॥
अतीक्ष्णाग्रसुखस्पर्शदामनीशङ्कुसङ्कुलम् ।
हर्त्तुं धूमैश्च दंशादीन् प्रकृष्टासनमाश्रयम् ॥
कृतकूपनिपानादिजलाशयनिवेशनम् ।
अवस्करतिरस्कारकारिकर्मकरान्वितम् ॥

तृणोदकादिनिर्वाहक्षमकल्पितवृत्तिकम् ।
एवंविधं महारम्यं प्राकारद्वारभूषितम् ॥
कृत्वा गृहं गवामर्थे यः पर्वणि निवेदयेत् ।
स राजराजो भवति भाग्यारोग्यसमन्वितः ॥
सुरभीलोकमासाद्य दिव्यभोगसमन्वितम् ।
क्रीडित्वा सुचिरं कालं ततो मानुष्यमागतः ॥
धनरूपसमायुक्तः कुले महति जायते ।

इति गोगृहदानम् ।

## अथाश्रयदानं कालिकापुराणे ।

शङ्करात् परमं नान्यदतस्तस्मै विकल्पयेत् ।
यतीनामाश्रयं वाऽपि कृत्वा पक्केष्टकामयम् ॥

'विकल्पः' संकल्पः ।

सुशीलं चारुनिर्वातं परिचारसमन्वितम् ।
व्याख्यामण्डपसंयुक्तमासनैर्विविधैर्युतम् ॥
पुष्पोद्यानसमायुक्तं सोदकं शङ्करालयम् ।
ग्रामं दीपेन्धनाद्यर्थं प्रेष्याणां चैव चेतने ॥
कौपीनोपानहाद्यर्थमाश्रये विनियोजयेत् ।
ततोऽभ्यर्च्य यतीन् भक्त्या भोजयित्वा विशेषतः ॥
वस्त्रैश्चैव प्रपूज्येशं भक्त्या तेभ्यो निवेदयेत् ।
प्रीयतां मे महादेवश्चन्द्रमौलिर्महेश्वरः ॥
इत्युक्त्वा पुण्यदिवसे दत्त्वा चैवात्र दक्षिणाम् ।
अनेनाश्रयदानेन सर्वकामयुतो नरः ॥
तस्मिँस्त्वमरलोकानां भोगान् गच्छेत् तदालयम् ।

'तदालयं' शङ्करालयम् ।

शैवपुराणे ।

स्थावरं जङ्गमं चैव द्विविधं लिङ्गमुच्यते ।
प्रासादे स्थावरं कार्यं जङ्गमं तु मठे हितम् ॥
स्थावराज्जङ्गमं श्रेष्ठमिति प्राहुर्महर्षयः ।
दीक्षादिस्थापनं चैव ज्ञानक्रियाप्रकाशनम् ॥
जङ्गमात् तु प्रवर्त्तेत तेनाधिक्यं तु जङ्गमे ।
तस्माज्जङ्गमलिङ्गेभ्यो विद्यापीठस्य गुप्तये ॥
कारयित्वा मठं दिव्यं शुद्धशैलेष्टकामयम् ।
शयनासनसंयुक्तं पुष्पारामादिशोभनम् ॥
श्रद्धया परयोपेतं पुण्यकाले समुत्सृजेत् ।

ब्रह्मवैवर्त्ते मठदानमधिकृत्याह मार्कण्डेयः ।

यावत् संतिष्ठते भूमौ स मठो जनसेवितः ।
तावद्वर्षप्रमाणेन कर्त्ता च शुभभाग्भवेत् ॥
यः कारयेन्मठं शैलं शिवायतनसन्निधौ ।
स शैवं पदमासाद्य कल्पायुतशतं वसेत् ॥
तस्मात् पुण्यक्षयादेत्य पृथिवीमीश्वरप्रियः ।
लभेद्दीर्घायुरारोग्यं सम्पदैश्वर्यसन्ततिम् ॥
त्रेतायुगे नृपाधीशः सहस्रक्रतुकृद्भवेत् ।
विष्णोरायतने पुण्ये सन्निधौ कारयेन्मठम् ॥
यः स स्यात् सकलैश्वर्यसम्पदामालयः सदा ।

भगवतीपुराणे ।

विजयायैव कर्त्तव्यं पुण्याराममठादिकम् ।
सजलं कारयेत् तस्मान्मठारामादिकं नरः ॥
कृत्वा मठं प्रयत्नेन शयनासनसंयुतम् ।

पुण्यकाले द्विजेभ्योऽथ यतिभ्यो वा निवेदयेत् ॥
सर्वान् कामानवाप्नोति निष्कामो मोक्षमाप्नुयात् ।

ब्रह्मप्रोक्ते ।

मठं प्रतिश्रयं वाऽपि सर्वोपकरणैर्युतम् ।
कारयित्वा द्विजातिभ्यः पुण्यकाले समुत्सृजेत् ॥
तस्य पुण्यकृतो लोका क्षीयन्ते न कदा चन ।

अगस्त्यः ।

सर्वकाममवाप्नोति तस्य सम्पद्यते सदा ।
देवायतनकर्त्ता च यतीनामाश्रयस्य च ॥
सत्रमण्डपकारी च क्रीडन् याति गृहोत्तमैः ।

देवीपुराणे ।

प्रासादमण्डपगृहे मठे चित्रशिलातले ।
ऊढतो पट्टशालायां सर्वे संपूजयन्ति ये (?) ॥
स्वारामान्तर्जलोपेतं मठं भूमित्रयोच्छ्रितम् ।
शान्तिधामाग्निव्याख्यानविद्याकोशजपादिभिः ॥
युक्तं देवाय दातव्यं सर्वकामप्रदायकम् ।
महापापारिशमनं समस्तभूमलापहम् ॥
राज्यायुःसुतसौभाग्यवर्धनं कीर्त्तनं तथा ।
विजलं नैव कुर्वन्ति मठाराममविवर्जितम् ॥
सर्वेषां विघ्नदं कर्त्तुर्नृप लोकभयावहम् ।

तथा ।

देवायतनकोटिस्थं कुर्याद्धेमाण्डभूषणम् ।
एकं सर्वेश्वरं धाम कृतं तस्याधिकं फलम् ॥

गङ्गोदके च यत् पुण्यं स्नात्वा च परिकीर्त्तितम् ।
तत् पुण्यं स्वजनैः स्नाप्य तामीशानगतिं लभेत् ॥

स्कन्दपुराणे मठदानमधिकृत्याह ।

यः कारयेन्महद्रम्यं सुवेदीसंस्थितं मठम् ।
पञ्चभौमं त्रिभौमं वा शिवज्ञानरतात्मनाम् ॥
गुह्यापवरकैर्युक्तं मन्त्रस्थानसमन्वितम् ।
वास्तुविद्याविभक्तं च प्राकारपरिवारितम् ॥
धूमनिर्गमनोपेतं पूर्वतः सत्रमण्डलम् ।
गन्धपुष्पगृहं कार्यमैशान्यां मठसंयुतम् ॥
भाण्डागारं च कौवेर्यां कोष्ठागारं च वायवे ।
जलाशयं च वारुण्यां वातायनसमन्वितम् ॥
समित्कुशेन्धनस्थानमायुधानां च नैर्ऋते ।
अभ्यागतालयं चैव रम्यं शय्यासमन्वितम् ॥
तोयाग्निदीपसद्भृत्यैर्युक्तं दक्षिणतो भवेत् ।
गृहान्तराणि सर्वाणि सजलैः कदलीगृहैः ॥
पञ्चवर्णैश्च कुसुमैः शोभितानि प्रकल्पयेत् ।
प्राकारं च बहिर्दद्यात् पञ्चहस्तप्रमाणतः ॥
प्राकाराच्च बहिः कुर्यात् सर्वदिक्षु समन्ततः ।
दिव्यं शिवाश्रयं रामं नानापुष्पोपशोभितम् ॥
सर्वर्त्तुकुसुमोपेतं नानावृक्षसमन्वितम् ।
प्रियङ्गुशिखराशोकपुत्रजीवकरिष्टकैः ॥
पुन्नागवकुलैश्चैव पाटलाविल्वचम्पकैः ।
श्वेतमन्दारविजयैर्जातीतगरकुष्ठकैः ॥
सुवर्णश्वेतयूथीभिर्वर्णाम्लानकुरण्टकैः ।

करवीरैः कर्णिकारैर्नानावर्णैरनेकशः ॥
स्थानविन्यासचरितैः सन्मार्गाधारसंयुतैः ।
वृक्षैर्बहुविधैर्युक्तं दिग्विदिक्षु जलान्वितम् ॥
सितरक्ताब्जकुसुमैर्नीलरक्तोत्पलैर्युतम् ।
लतावितानगृहकैः क्वचित् क्वचिदवस्थितैः ॥
कदलैः स्तम्भखण्डैश्च दाडिमाद्यैर्विराजितम् ।
इति कृत्वा बहिस्तस्य प्राकारं कारयेन्महत् ॥
कपाटगोपुरोपेतं परिखावटसंयुतम् ।
तृतीयाच्च पुरादूर्ध्वं विद्याव्याख्यानमण्डपम् ॥
गवाक्षनिर्गमोपेतं विचित्रं परिकल्पयेत् ।
पुराच्च पञ्चमं कार्यं शिवस्य वसती गृहम् ॥
षड्ढस्तमष्टहस्तं वा दारुपट्टविनिर्मितम् ।
तत्र मृद्दारुशैलं वा स्थापयेद्विधिवच्छिवम् ॥
सर्वविद्याविधातारं सर्वज्ञं कुलमीश्वरम् ।
वृतं शिष्यप्रशिष्यैश्च व्याख्यानोद्यतपाणिकम् ॥
पद्मासनस्थं सुश्वेतं प्रसन्नवदनं गुरुम् ।
एवं शिवाश्रयं कृत्वा भक्त्या वित्तानुसारतः ॥
तत्प्रतिष्ठां ततः कुर्यात् पूजालङ्कारलक्षणाम् ।
विद्यादानोक्तविभवैः शोभां कृत्वा मठाग्रतः ॥
पञ्चभिः पञ्चगव्यैस्तं स्थाप्यैशान्यां दिशि क्रमात् ।
स्नापयेद्गन्धतोयाद्यैः शिवशास्त्रपरिश्रुतैः ॥
तूर्यघोषैस्तमानीय स्थापयेत् पुष्पमण्डपे ।
ततश्चन्दनपुष्पाद्यैः पूजयित्वाऽधिवासयेत् ॥
जप्त्वा पञ्चविधं स्तोत्रं शिवं विज्ञाप्येत् ततः ।

अद्याधिवासनं देव श्वः प्रतिष्ठा भवेत् तव ॥
भक्तानामनुकम्पार्थं सान्निध्यमुपकल्पय ।
प्रातः संस्नाप्य देवेशं पूजयित्वा प्रवेशयेत् ॥
पवित्रैः स्थापयेद्वेद्यां पादादारभ्य पञ्चभिः ।
ततः सुगन्धगन्धाद्यैर्नित्यं शोध्यं शिवालयम् ॥
शिवं च पूजयेत् पुष्पैः स्नानवस्त्रयुगान्वितैः ।
सशिष्यस्तं प्रणम्येशं गुरुर्व्याख्यां प्रवर्त्तयेत् ॥
प्राङ्मुखोदङ्मुखो वाऽपि पुण्याहार्थं शिवाग्रतः ।
ततः संपूजयेद्भक्त्या यजमानः स्वयं गुरुम् ॥
दक्षिणाभिर्विचित्राभिर्भोजनाद्यैश्च पूजयेत् ।
निवेदयेत् ततः स्थानं सर्वेषां शिवयोगिनाम् ॥
सर्वोपकरणोपेतं प्रणिपत्य पुनः पुनः ।
एवं यः कारयेदाढ्यः श्रीमच्छिवपुरं महत् ॥
सर्वपापविनिर्मुक्तः शिवलोके महीयते ।
स्वगोत्रवंशकोपेतः सभृत्यपरिवारितः ॥
पुत्रमित्रादिसंयुक्तः शान्तः पुरपरिच्छदः ।
सुविचित्रैर्महायानैरसङ्ख्यैः सर्वकामिकैः ॥
शिववत् क्रीडते भोगैरणिमादिगुणैर्युतः ।
ततः कालेन महता विद्यादानप्रभावतः ॥
ज्ञानयोगं समासाद्य तत्रैव प्रतिमुच्यते ।
स्थपतिस्थापका वृक्षा बलीवर्दाश्च कर्मिणः ॥
यान्ति रुद्रपुरं सर्वे तदध्यक्षाश्च ये नराः ।
ये चान्ये वृत्तिभृतकाः शिवायतनकर्मिणः ॥
तेऽपि यान्ति मृताः स्वर्गं शिवकर्मानुभावतः ।

भविष्यत्पुराणे ।

कारयित्वा दृढस्तम्भं शुभं पक्वेष्टकामयम् ।
मठं कमठपृष्ठाभमाभासितदिगन्तरम् ॥
सुधानिलिप्तं गुप्तं च सुखशालाविराजितम् ।
दद्यादनन्तफलदं शैववैष्णवयोगिनाम् ॥

वाराहपुराणे ।

त्रिभौमं वा द्विभौमं वा कुर्यादथैकभूमिकम् ।
मठं विचित्रशालाढ्यं विराजन्मत्तवारणम् ॥
ध्यानाध्ययनहोमादिव्याख्यानस्थानभूषितम् ।
सुधया वा शिलाभिर्वा सम*मक्लिप्तभूमिकम् ॥
विन्यस्तपुस्तकाधारभूतनूतनशङ्कुकम् ।
नानाफलाकुलोद्यानराजिमण्डलमण्डितम् ॥
निर्मलस्वादुपानीयसुसम्भृतजलाश्रयम् ।
यतीनां पथिकानां च निवासमुपसेदुषाम् ॥
पादुकोपानहच्छत्रकौपीनेन्धनवाससाम् ।
उपयोगिपदार्थानामन्येषामपि लब्धये ॥
ग्रामं वा विपुलां भूमिं प्रदद्याच्छ्रद्धयाऽन्वितः ।
एवं समाश्रयं कृत्वा तापसानां हितावहम् ॥
अन्येषामपि लोकानां दुःखिनामाश्रयार्थिनाम् ।
समाश्रयं प्रयच्छामि प्रीयतां मे जगन्निधिः ॥
एवं दत्त्वा महाराज सुविचित्रं समाश्रयम् ।
अश्वमेधसहस्रस्य फलमाप्नोत्यसंशयम् ॥

---

* सुश्लक्ष्णभूमिकमिति न० प्र० पु० पा० ।

शिव*विष्णुपुरे स्थित्वा तद्रूपबलविक्रमः ।
भोगानपि बहून् भुक्त्वा परं निर्वाणमृच्छति ॥

यः कारयेदिति विचित्रविशालशालमालाकुलं रुचिरकुड्यवितानयुक्तम् । दिव्याङ्गनापरिवृतोऽथ भवेन्मुरारेः पारे भवार्णवजलस्य स सौख्यमेति ॥

इत्याश्रयदानम् ।

## अथ प्रतिश्रयदानं भविष्यत्पुराणे ।

प्रतिश्रये सुविस्तीर्णे कारिते सजलेन्धने ।
दीनानाथजनार्थाय ततः किं न कृतं †भवेत् ॥

## वह्निपुराणे ।

कारयित्वा दृढस्तम्भं शुभं पक्केष्टकामयम् ।
प्रतिश्रयं सुविस्तीर्णं सुभूमिं लक्षणान्वितम् ॥
सुधानुलिप्तं गुप्तं च सुखशालाविराजितम् ।
दद्यादनन्तफलदं शैववैष्णवयोगिनाम् ॥
प्रतिश्रयं सुविस्तीर्णं सदन्नं सुजलान्वितम् ।
दीनानाथजनार्थाय कारयित्वा गृहं शुभम् ॥
निवेदयेत् पथिस्थेभ्यः शुभद्वारं मनोहरम् ।

## देवीपुराणे । शक्र उवाच ।

पुरस्य पश्चिमे भागे दक्षिणे चोत्तरेऽथ वा ।
पूर्वे वा मध्यतो वाऽपि ये कुर्वन्ति प्रतिश्रयम् ॥
देवता तत्र का स्थाप्या का न स्थाप्या द्विजोत्तम ।
दिग्विभागगतां ब्रूहि स भवेद्येन शान्तिदः ॥

---

* चिरं विष्णुपदे इति न· प्र· पु· पा· ।
† त्वकृतिः सत्कृतिर्भवेदिति न· प्र· पु· पा· ।

ब्रह्मोवाच ।

दक्षिणोत्तरपूर्वेण पश्चिमेन सुरेश्वरः ।
अथ मध्यगतः शक्रः कार्योऽयं तत्प्रतिश्रयः ॥
यत्र श्रान्ताश्च खिन्नाश्च विश्राम्यन्ति द्विजातयः ।
प्रतिश्रयस्य कर्त्तारः स्वर्गे तिष्ठन्ति ते चिरम् ॥
तस्मात् प्रतिश्रयः कार्यो दृष्टादृष्टफलार्थिभिः ।
देवताधिष्ठितः शक्रः सर्वसौख्यप्रदो भवेत् ॥
देवतानां त्रयं प्रोक्तं चतुर्थी नोपपद्यते ।
महिषघ्नीं तथा यक्षं नायकं चात्र कारयेत् ॥
महिषघ्नी भवेन्मध्ये ज्येष्ठस्थाने न चान्यथा ।
वामतो नायकः कार्यो दक्षिणे यक्षराट् तथा ॥
अथ वा दिग्गता कार्या तत्रापि कथयामि ते ।
यद्द्वारं संमुखं तस्य देवीं तत्र प्रतिष्ठयेत् ॥
न यक्षं नायकं कार्यं द्वाराभ्यां मध्यतः स्थितम् ।
एवं कृते फलं यत् तु वक्तुं तत् केन शक्यते ॥
केवलं फलमेतस्य सुखं राज्यं यशः श्रियम् ।

यमः ।

आसनं पादशौचं च दीपमन्नं प्रतिश्रयम् ।
ददात्येतानि यः पञ्च स यज्ञः पञ्चदक्षिणः ॥
अन्नदः प्राणदो ज्ञेयो रूपदो वस्त्रदः स्मृतः ।
स हि सर्वप्रदो नाम यो ददाति प्रतिश्रयम् ॥
अश्वमेधसहस्रस्य राजसूयशतस्य च ।
पुण्डरीकसहस्रस्य योगिष्ववसथो नरः ॥

विष्णुः ।

प्रतिश्रयं तथा शय्यापादाभ्यङ्गश्च दीपकम् ।
प्रत्येकदानेनाप्नोति गोप्रदानसमं फलम् ॥

दक्षः ।

आश्रमे च यतिर्यस्य विश्राम्यति मुहूर्त्तकम् ।
*किं तस्यान्येन धर्मेण कृतकृत्यो हि स स्मृतः ॥
जन्मप्रभृति यत् पापं गृहस्थेन तु सञ्चितम् ।
निर्मार्जयति तत् सर्वमेकरात्रोषितो यतिः ॥

तथा ।

तपोजपैः कृशीभूतो व्याधितोऽवसथार्हकः ।
वृद्धो ग्रहगृहीतश्च तथाऽन्यो विकलेन्द्रियः ॥
नीरुजश्च युवा चैव भिक्षुर्नावसथार्हकः ।
नीरुजश्च युवा चैव ब्रह्मचर्याद्विनश्यति ॥
ब्रह्मचर्याद्विनष्टस्तु कुलं गोत्रं च नाशयेत् ।
वसन्नवसथे भिक्षुर्मैथुनं यदि सेवते ॥
तस्यावसथनाशस्य मूलान्यपि निकृन्तति ।

बृहस्पतिः ।

आगतस्यासनं दद्याच्छ्रान्तस्य शयनं तथा ।
तृषितस्य तु पानीयं क्षुधितस्य तु भोजनम् ॥
चक्षुर्दद्यान्मनो दद्याद्वाचं दद्याच्च सूनृताम् ।
एष साधारणो धर्मश्चातुर्वर्ण्योऽब्रवीन्मनुः ॥
प्रीयते स्वागतेनाग्निरासनेन शतक्रतुः ।
पितरः पादशौचेन भोजनेन प्रजापतिः ॥

---

* तस्यातिथिधर्मेणेति क्वचित् पाठः ।

मनुविष्णुशातातपाः ।

येषामनश्नन्नतिथिर्विप्राणां व्रजते गृहात् ।
ते वै खरत्वमुष्ट्रत्वमश्वत्वं प्रतिपेदिरे ॥
यस्य चैव गृहे विप्रो वसेत् कश्चिदभोजितः ।
न तस्य देवाः पितरो हव्यं कव्यं च भुञ्जते ॥
अतिथिर्यत्र वै ग्रामे भिक्षमाणः प्रयत्नतः ।
शेते निरशनस्तत्र ब्रह्महत्या विधीयते ॥
अपि शाकम्पचानस्य शिलोञ्छेनापि जीवतः ।
स्वदेशे परदेशे वा नातिथिर्विमना वसेत् ॥
एकरात्रं तु निवसन्नतिथिर्ब्राह्मणः स्मृतः ।
अनित्यं हि स्थितो यस्मात् तस्मादतिथिरुच्यते ॥

यमः ।

तिथिपर्वोत्सवाः सर्वे त्यक्ता येन महात्मना ।
सोऽतिथिः सर्वभूतानां शेषानभ्यागतान् विदुः ॥
व्रती यतिर्वैकरात्रं निवसन्नुच्यतेऽतिथिः ।
यस्मान्नित्यं न वसति तस्मात् तमतिथिं विदुः ॥

'पर्वाणि' अमावास्यादीनि । 'उत्सवा' विवाहादयः । तिथिस्तद्व्यतिरिक्ता दीपालिका प्रतिपदादिः । एतान्यर्चविशेषप्राप्तिहेतूनि येन धर्मपरेण त्यक्तानि सोऽतिथिरित्यर्थः ।

गौतमः ।

असमानग्रामोऽतिथिरेकरात्रिकोऽधिवृक्षसूर्योपस्थायीति ।

'एकरात्रिकः' एकरात्रवसनशीलः । 'अधिवृक्षसूर्यशब्दः' सायङ्कालपरः ।

दक्षः ।

सुधावस्तूनि वक्ष्यामि शिष्टे च गृहमागते ।

मनश्चक्षुर्मुखं वाचं सौम्यं दद्याच्चतुष्टयम् ॥

'सुधावस्तूनि' अनायाससम्पाद्यानि ।

अभ्युत्थानमिहागच्छ पूर्वालापः प्रियान्वितः ।
उपासनमनुव्रज्या कार्याण्येतानि यत्नतः ॥

'उपासनं' समीपे स्थितिः ।

ईषद्वस्तूनि चान्यानि भूमिरापस्तृणानि च ।
पादशौचं तथाऽभ्यङ्गमाश्रयः शयनं तथा ॥

'ईषद्वस्तुत्वं' चाल्पायाससाध्यत्वात् ।

किञ्चिद्द्वात्रौ यथाशक्तिर्नाश्यानश्नन् गृहे वसेत् ॥

**मनुः ।**

आसनाशनशय्याभिरद्भिर्मूलफलेन वा ।
नास्य कश्चिद्वसेद्गेहे शक्तितोऽनर्चितोऽतिथिः ॥

**मार्कण्डेयपुराणे ।**

कुर्यात् प्रतिश्रयगृहं पथिकानां हितावहम् ।
निजगेहैकदेशे वा साधून् पान्थान् निवासयेत् ॥
अक्षयं पुण्यमुद्दिष्टं तस्य स्वर्गापवर्गदम् ।
सर्वकामसमृद्धोऽसौ देववद्दिवि मोदते ॥

इति प्रतिश्रयदानम् ।

**अथ कन्यादानमुच्यते । तत्र लिङ्गपुराणे ।**

कन्यादानं प्रवक्ष्यामि सर्वदानोत्तमोत्तमम् ।

**बृहस्पतिः ।**

सहस्रमेव धेनूनां शतं चानडुहां समम् ।
दशानडुत्समं यानं दशयानसमो हयः ॥
*दशयानसमा कन्या भूमिदानं च तत्समम् ।

---

* दशवाजिसमा कन्येति क्वचित् पाठः ।

तस्मात् सर्वेषु दानेषु कन्यादानं विशिष्यते ॥

अत्रिः ।

वालुकायाः कृतो राशिर्यावत् सप्तर्षिमण्डलम् ।
गते वर्षसहस्रे तु पलमेकं विशीर्यते ॥
क्षयश्च दृश्यते तस्याः कन्यादाने न विद्यते ।

महाभारते ।

करन्धमस्य पुत्रस्तु मरुतो नृपतिस्तथा ।
कन्यामङ्गिरसे दत्त्वा दिवमाशु जगाम ह ॥
राजा मित्रसहश्चापि वशिष्ठाय महात्मने ।
दमयन्तीं प्रियां दत्त्वा तया सह दिवं गतः ॥
मदिराश्वश्च राजर्षिर्दत्त्वा कन्यां सुमध्यमाम् ।
हिरण्यहस्ताय गतो लोकान् देवैरभिष्टुतान् ॥
लोमपादश्च राजर्षिः शान्तां दत्त्वा सुतां प्रभुः ।
ऋष्यशृङ्गाय विपुलां सर्वकामैरयुज्यत ॥

कश्यपः ।

अग्निष्टोमातिरात्राणां शतं शतगुणं शतम् ।
लभते कन्यकां दत्त्वा मन्त्रहोमैरलङ्कृताम् ॥
अनडुहां सहस्राणां दशानां धुर्यवाहिनाम् ।
सुपात्रे विधिवद्दानं कन्यादानं च तत्समम् ॥

देवलः ।

तिस्रः कन्या यथान्यायं पालयित्वा निवेद्य च ।
न पिता नरकं याति नारी वा स्त्रीप्रसूयिनी ॥

वशिष्ठः ।

सर्वेषामेव दानानामेकजन्मानुगं फलम् ।

हाटकक्षितिगौरीणां सप्तजन्मानुगं फलम् ॥

संवर्त्तः ।

अलङ्कृत्य तु यः कन्यां भूषणाच्छादनाशनैः ।
दत्त्वा स्वर्गमवाप्नोति पूज्यते वासवादिभिः ॥

वह्निपुराणे ।

कन्यां ये तु प्रयच्छन्ति यथाशक्त्या स्वलङ्कृताम् ।
ब्रह्मदेयां द्विजश्रेष्ठ ब्रह्मलोकं व्रजन्ति ते ॥

कूर्मपुराणे ।

कन्यामलङ्कृतां वित्तशक्त्या दत्त्वा सकौतुकम् ।
गौरीलोकमवाप्नोति विप्राय गुणशालिने ॥

नारदीयपुराणे ।

चतुर्णामाश्रमाणां तु गृहस्थः श्रेष्ठ उच्यते ।
गृहस्थाच्च गृहं श्रेष्ठं गृहाच्छ्रेष्ठा वरस्त्रियः ॥
तस्मात् कन्याप्रदानस्य नान्यदानैस्तुला स्मृता ।
अतः प्रदेया विद्वद्भिः कन्या सर्वार्थकाङ्क्षिभिः ॥

याज्ञवल्क्यः ।

पिता पितामहो भ्राता सकुल्यो जननी तथा ।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥

नारदः ।

पिता दद्यात् स्वयं कन्यां भ्राता वाऽनुमते पितुः ।
मातामहो मातुलश्च सकुल्या बान्धवास्तथा ॥
माता त्वभावे सर्वेषां प्रकृतौ यदि वर्त्तते ।
तस्यामप्रकृतिस्थायां दद्युः कन्यां स्वजातयः ॥

स्कन्दपुराणे ।

आत्मीकृत्य सुवर्णेन परकीयां तु कन्यकाम् ।
धर्मेण विधिना दातुमसगोत्रोऽपि युज्यते ॥

विवाहाधिकारिणमाह मनुः ।

वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम् ।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत् ॥
गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाविधि ।
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम् ॥

याज्ञवल्क्योऽपि ।

वेदं व्रतानि वा पारं नीत्वाऽप्युभयमेव वा ।
अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ॥

विश्वामित्रः ।

कन्यामलङ्कृतां दत्त्वा समाहूय नराधिप ।
विद्यार्थिने ब्राह्मणाय कन्यादानं तदुच्यते ॥

भविष्यत्पुराणे ।

कन्यामलङ्कृतां दद्यादनादाय नराधिप ।
द्विजाय वेदविदुषे कन्यादानं तदुच्यते ॥
दद्याद्गुणवते कन्यां नग्निकां धर्मचारिणीम् ।
अपि नो गुणहीनाय नोपरुध्याद्रजस्वलाम् ॥

तथा ।

कन्या देया श्रोत्रियाय ब्राह्मणाय तपस्विने ।
साक्षादधीतवेदाय विधिना ब्रह्मचारिणे ॥

ब्रह्माण्डपुराणे ।

कन्यां तु परया भक्त्या अलङ्कृत्य प्रयत्नतः ।

कुलीनाय सुरूपाय गुणज्ञाय विशेषतः ॥
कन्यां वरयमाणाय दद्यादेष विधिः स्मृतः ।

गारुडपुराणे ।

सुशीलाय सुवृत्ताय सुविद्याय तपस्विने ।
कन्या देया प्रयत्नेन नेतरस्मै कथं चन ॥

परिणेयकन्यालक्षणानि तु स्कन्दपुराणे ।

सुरूपां लक्षणोपेतामव्यङ्गाङ्गीं कुलोद्भवाम् ।
कन्यां भ्रातृमतीं चैव धर्मार्थार्थी समुद्वहेत् ॥
विशालनेत्रां सुमुखीं नीलकुञ्चितमूर्धजाम् ।
आताम्रपाणिपादाग्रां कम्बुग्रीवां सुमध्यमाम् ॥
विशालजघनां चारुनितम्बस्थलभूषिताम् ।
अस्थूलगुल्फदशनामरथामाधरतालुकाम् ॥
अपिङ्गाक्षीमकपिलामस्फुरच्चरणां शुभाम् ।
अस्थूलगण्डनासाग्रां शस्तामाहुर्मनीषिणः ।
उद्वहेत् तादृशीं कन्यां नरो दोषविवर्जिताम् ॥

वर्जनीयकन्यानिरूपणं वह्निपुराणे ।

महान्त्यपि समृद्धानि गोजाविकनधान्यथ ।
स्त्रीसम्बन्धे दशेमानि कुलानि परिवर्जयेत् ॥
हीनजातिसुपाषण्डसुजनोद्वेगकारिणाम् ।
छद्मामयसदावाच्यश्वित्रिकुष्ठिकुलानि च ॥
यस्यास्तु न भवेद्भ्राता न च विज्ञायते पिता ।
नोपयच्छेत तां प्राज्ञः पुत्रिकां धर्मशङ्कया ॥

अथाह संवर्त्तः ।

अष्टवर्षा भवेद्गौरी नवमे नग्निका भवेत् ।

दशमे कन्यका प्रोक्ता द्वादशे वृषली स्मृता ॥

आहाङ्गिराः ।

अप्राप्तरजसा गौरी प्राप्ते रजसि रोहिणी ।
अव्यञ्जनकृता श्यामा कुचहीना तु नग्निका ॥

काश्यपः ।

सप्तवर्षा भवेद्गौरी दशवर्षा तु कन्यका ।
प्राप्ते तु द्वादशे वर्षे कुमारीत्यभिधीयते ॥
रोमकाले तु सम्प्राप्ते सोमो भुञ्जीत कन्यकाम् ।
रजःकाले तु गन्धर्वाः शक्रस्तु कुचदर्शने ॥
तस्मादुद्वाहयेत् कन्यां यावन्नर्त्तुमती भवेत् ।
विवाहस्त्वष्टवर्षायाः कन्यायाः शस्यते बुधैः ॥

अत्राह मनुः ।

चतुर्णामपि वर्णानां प्रेत्येह च हिताहितान् ।
अष्टाविमान् समासेन स्त्रीविवाहान् निबोधत ॥
ब्राह्मो दैवस्तथा चार्षः प्राजापत्यस्तथाऽऽसुरः ।
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमो मतः* ॥
चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो विदुः ।
राक्षसं क्षत्रियस्यैवमासुरं वैश्यशूद्रयोः ॥
पञ्चानां च त्रयो धर्म्या द्वावधर्म्यस्थिताविह ।
पैशाचश्चासुरश्चैव न कर्त्तव्यौ कथञ्चन ॥
पृथक् पृथग्विमिश्रौ वा विवाहौ पूर्वनोदितौ ।
गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ ॥

---

* अधम इति पुस्तकान्तरे पाठः ।

पैठीनसिः ।

गान्धर्वासुरो राजन्यस्य राक्षसो वैश्यस्य पैशाचः शूद्रस्य सर्वेषामार्षः प्रमाणम् ।

आह प्रचेताः ।

पैशाचोऽसंस्कृतप्रसूतानां प्रतिलोमजानां च ।

मनुः ।

यो यश्चैषां विवाहानां मनुना कीर्त्तितो गुणः ।
सम्यक् शृणुत तं विप्राः सर्वं कीर्त्तयतो मम ॥
दश पूर्वान् परान् वंश्यानात्मानं चैकविंशकम् ।
ब्राह्मीपुत्रः सुकृतकृन्मोचयत्येनसः पितॄन् ॥
दैवोढाजः सुतश्चैव सप्त सप्त परावरान् ।
आर्षोढाजः सुतस्त्रीँस्त्रीन् षट्कं कायोढजः सुतः ॥
ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः ।
ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसम्मताः ॥
रूपसत्त्वगुणोपेता धनवन्तो यशस्विनः ।
पर्याप्तभोगा धर्मिष्ठा जीवन्ति च शतं समाः ॥
इतरेषु च शिष्टेषु नृशंसानृतवादिनः ।
जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः ॥
अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा ।
निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान् विवर्जयेत् ॥

अथ तेषां लक्षणानि । तत्र विष्णुः ।

आहूय गुणवते कन्यां कन्यादानं स ब्राह्मः ।

बौधायनः ।

श्रुतशीले विज्ञाय ब्रह्मचारिणेऽर्थिने देयेति स ब्राह्मः ।

प्रचेताः ।

सवर्णाय नग्निकामुदकेन दद्यात् स ब्राह्मो विवाहः ।

व्यासः ।

आच्छाद्यालङ्कृतां कृत्वा त्रिः परिक्रम्य पावकम् ।
नामगोत्रे समुद्दिश्य दद्याद्ब्राह्मो विधिस्त्वयम् ॥

मनुः ।

यज्ञे तु वितते सम्यक् ऋत्विजे कर्म कुर्वते ।
अलङ्कृत्य सुतां दानं दैवं धर्मं प्रचक्षते ॥
एकं गोमिथुनं द्वे वा वरादादाय धर्मतः ।
कन्याप्रदानं विधिवदार्षो धर्मः स उच्यते ॥

हारीतः ।

अनिन्द्यमन्यैरवितर्कयन् विधिवद्वस्त्रयुगं दत्त्वाऽनया सह धर्मश्चर्यतामिति प्राजापत्यः ।

मनुः ।

सहोभौ चरतां धर्ममिति वाचाऽनुभाष्य तु ।
कन्यादानं समभ्यर्च्य प्राजापत्यो विधिः स्मृतः ॥
ज्ञातिभ्यो द्रविणं दत्त्वा कन्यायै चैव शक्तितः ।
कन्याप्रदानं स्वाच्छन्द्यादासुरो धर्म उच्यते ॥
इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च ।
गान्धर्वः स च विज्ञेयो मैथुन्यः कामसम्भवः ॥
हत्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं गृहात् ।
प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते ॥
सुप्तां* मत्तां रहश्छद्म कृत्वा यत्रोपनीयते ।

* सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छतीति पाठान्तरम् ।

स पापिष्ठो विवाहानां पैशाचः प्रथितोऽष्टमः ॥

अथ वह्निपुराणे ।

ब्राह्मेण तु विवाहेन यस्तु कन्यां प्रयच्छति ।
ब्रह्मलोकं व्रजेत् क्षिप्रं ब्रह्माद्यैः पूजितः सुरैः ॥
दैवेन तु विवाहेन यस्तु कन्यां प्रयच्छति ।
भित्वा द्वारं तु सूर्यस्य स्वर्गलोकं च गच्छति ॥
गान्धर्वेण विवाहेन यस्तु कन्यां प्रयच्छति ।
गन्धर्वलोकमासाद्य क्रीडते देववच्चिरम् ॥
शुल्केन दत्वा यः कन्यां तां पश्चात् सम्यगर्चयेत् ।
स किन्नरैश्च गन्धर्वैः क्रीडते कालमक्षयम् ॥

भविष्यत्पुराणे ।

विलोक्य गोत्रनक्षत्रे राशिकूटादिकं शुभम् ।
सुलग्ने सुमुहूर्त्ते च दद्याच्चैव यथाविधि ॥
उभयस्यापि पक्षस्य मनोऽभ्युदयपूर्वकम् ।
कुमार्यास्त्वष्टवर्षायाः शस्यते पाणिपीडनम् ॥

आह पैठीनसिः ।

पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते ।
असवर्णास्वयं ज्ञेयो विधिरुद्वाहकर्मणि ॥
शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया ।
वसनस्य दशा ग्राह्या शूद्रयोत्कृष्ट*वेदने ॥

ऋष्यशृङ्गः ।

वरगोत्रं समुच्चार्य प्रपितामहपूर्वकम् ।
नाम संकीर्त्तयेद्विद्वान् कन्यायाश्चैवमेव हि ॥

---

* शूद्रयोक्तः स्ववेदने इति न· प्र· पु· पा· ।

तिष्ठेत् पूर्वमुखो दाता वरः प्रत्यङ्मुखो भवेत् ।
मधुपर्कार्चितां चैनां तस्माद्दद्यात् सदक्षिणाम् ॥
उदपात्रं ततो गृह्य मन्त्रेणानेन दापयेत् ।
गौरीं कन्यामिमां विप्र यथाशक्ति विभूषिताम् ॥
गोत्राय शर्मणे तस्मै दत्तां विप्रसमाश्रयाम् ।

## इदमिह दानवाक्यम् ।

ॐ अद्यामुकसगोत्रस्यामुकप्रवरस्यामुकशर्मणः प्रपौत्राय अमुकसगोत्रस्यामुकप्रवरस्यामुकशर्मणः पौत्राय अमुकसगोत्रस्यामुकप्रवरस्यामुकशर्मणः पुत्राय अमुकसगोत्रायामुकप्रवरायामुकशर्मणे वराय अमुकसगोत्रस्यामुकप्रवरस्यामुकशर्मणः प्रपौत्रीममुकसगोत्रस्यामुकप्रवरस्यामुकशर्मणः पौत्रीममुकसगोत्रस्यामुकप्रवरस्यामुकशर्मणः पुत्रीममुकसगोत्राममुकप्रवराममुकाभिधानामिमां कन्यां सालङ्कारां प्रजापतिदैवताममुककामस्तुभ्यमहं संप्रददे ।

एतत्कन्यादानप्रतिष्ठार्थं दक्षिणामिदं हिरण्यं सम्प्रददे न मम–इत्युच्चार्य ।

दानमन्त्रं पठेत् प्रतिग्रहीता तु प्रणवपूर्वं स्वस्तीत्युक्त्वा कोऽदादिति मन्त्रमुदाहरेत् ।

भूमिं गावश्च दासीश्च वासांसि च स्वशक्तितः ।
महिषीर्वाजिनश्चैव दद्यात्स्वर्णमणीनपि ॥
ततः स्वगृह्यविधिना होमाद्यं कर्म कारयेत् ।
यथाचारं विधेयानि मङ्गल्यकुतुकानि च ॥

## लिङ्गपुराणे ।

कन्यां लक्षणसम्पन्नां सर्वदोषविवर्जिताम् ।
मातापित्रोस्तु संवादं कृत्वा दत्त्वा धनं महत् ॥

आत्मीकृत्य तु संस्थाप्य वस्त्रं दत्त्वा नवं शुभम् ।
भूषणैर्भूषयित्वा च गन्धमाल्यैरथार्चयेत् ॥
निमित्तानि समीक्ष्याथ गोत्रनक्षत्रकादिकम् ।
उभयोश्चित्तमालोच्य उभौ संपूज्य यत्नतः ॥
दातव्या श्रोत्रियायैव ब्राह्मणाय तपस्विने ।
साक्षादधीतवेदाय विधिना ब्रह्मचारिणे ॥
दासीदासासनाद्यं च भूषणानि विशेषतः ।
क्षेत्राणि च धनं वाऽपि तथाऽन्यानि प्रदापयेत् ॥
यावन्ति सन्ति रोमाणि कन्यायाश्च तनौ पुनः ।
तावद्वर्षसहस्राणि रुद्रलोके महीयते ॥

वह्निपुराणे ।

एवं यच्छन्ति ये कन्यां यथाशक्त्या स्वलङ्कृताम् ।
विवाहकाले संप्राप्ते यथोक्ते सदृशे नरे ॥
क्रमात् क्रमं क्रतुशतमनुपूर्वं लभन्ति ते ।
श्रुत्वा कन्याप्रदानं च पितरः प्रपितामहाः ॥
विमुक्ताः सर्वपापेभ्यो ब्रह्मलोकं व्रजन्ति ते ।

तथा ।

न मन्युं कारयेत् तासां पूज्याश्च सततं गृहे ।
ब्रह्माद्यो विशेषेण ब्रह्मभोज्यं सदा भवेत् ॥
अप्रजायाश्च कन्याया न भुञ्जीयात् कदा चन ।
दौहित्रस्य मुखं दृष्ट्वा किमर्थमनुशोचसि ॥
महासत्त्वसमाकीर्णान्नास्ति ते नरकाद्भयम् ।
तीर्णस्त्वं सर्वदुःखेभ्यः परं स्वर्गमवाप्स्यसि ॥
दौहित्रस्य तु दानेन नन्दन्ति पितरः सदा ।

यत् किञ्चित् कुरुते दानं तदानन्त्याय कल्पते ॥
दत्त्वा कन्यां न शोचेत क्षुधिता ताडिताऽपि वा ।
नाना*दुःखाभिभूता वा तेथैवाशरणा कृशा ॥
कुर्यान्मन्युं न चैवास्या आगतां चैव पोषयेत् ।
शोचन्ति यामयो यत्र विनश्यत्याशु तत्कुलम् ॥
न भुञ्जन्ति† च यत्रैव निर्दहन्त्यप्रपूजिताः ।
तस्मादेताः सदाभ्यर्च्या भूषणाच्छादनाशनैः ॥
भूतिकामैर्नरैर्नित्यं सुतापुत्रस्तु सर्वदा ।
सन्तुष्टः स्यात् तथा पूज्यः स श्राद्धेषूत्सवेषु च ॥
यस्मिन्नेवं कुले नित्यं कल्याणं तत्र वै ध्रुवम् ।
इह कीर्त्तिर्भवेत् स्वर्गः परत्र द्विजसत्तम ॥
तिलराशिः कृतो यावद्दिवाकरसमुच्छ्रितः ।
वर्षान्ते गृह्यते तस्मात् तिल एकस्तु यावता ॥
संक्षयं लभते तावद्ब्रह्मलोकस्य निश्चितम् ।
शतगव्यूतिमानेन सञ्चितैर्वृषरोमभिः ॥
विशीर्यते तु वा लिङ्गं वर्षे कन्याप्रदस्तथा ।
तावत् स्वर्गं लभेद्यावत् सर्वलोम्नां तु संक्षयः ॥
महीदातुश्च गोदातुः कन्यादातुश्च ये रथाः ।
कन्यादानानुगाः पश्चात् समं यान्ति त्रयो रथाः ॥
अयाचितप्रदातुश्च सत्यवादिन एव च ।
नित्यं स्वाध्यायशीलस्य समं यान्ति त्रयो रथाः ॥
कूकुदश्चाश्वमेधी च प्राणदाता द्विजेषु च ।

---

* नानेति न० प्र० पु० पाठः ।

† न शोचन्ति चेति क्व चित् पाठः ।

समं यान्ति रथा ह्येते त्रयो वै नात्र संशयः ॥

अलङ्कृत्य कन्याप्रदाता 'कूकुदः' ।

कन्यादानं दरिद्रस्य यो ददाति परिष्कृतम् ।
पूर्त्तं धर्ममवाप्नोति यथावद्विधिकल्पितम् ॥
तस्मात् कन्या प्रयत्नेन दातव्या श्रेय इच्छता ।

स्कन्दपुराणे ।

वैवाहिकप्रदानं वा यो ददाति दयापरः ।
विमानेन विचित्रेण किङ्किणीजालमालिना ॥
महेन्द्रभवने याति सेव्यमानोऽप्सरोगणैः ।

इति कन्यादानविधिः ।

अथ द्विजस्थापनं तत्र दक्षः ।

मातापितृविहीनं तु संस्कारोद्वहनादिभिः ।
यः स्थापयति तस्येह पुण्यसङ्ख्या न विद्यते ॥

कालिकापुराणे ।

कारयित्वा तथोद्वाहं श्रोत्रियाणां कुलेषु च ।
वेदवच्छीलवृत्तेषु द्विजेष्वेकादशस्वथ ॥
ततो गृहाणि रम्याणि कुर्यादेकादशैव तु ।
कारयित्वा तु धान्यैश्च विविधैश्च प्रपूरयेत् ॥
दासीगोमहिषीश्चापि शयनासनपादुकाः ।
भाजनानि विचित्राणि ताम्रमृण्मयकानि च ॥
पात्राणि भोजनार्थे च कृत्स्नं चोपस्करं च यत् ।
लोहं च कनकं चैव वस्त्राणि तु विशेषतः ॥
संभृत्यैतं सुसम्भारं तद्गृहेषु नियोजयेत् ।
योजयेच्चैव वृत्त्यर्थं शक्तितो वा शतं शतम् ॥

पृथक् पृथग्लाङ्गलानां निवर्त्तनशतार्धतः ।
विषयं कर्वटं खेटं ग्रामं ग्रामार्धमेव वा ॥
योजयेत् सोममूर्त्तिं च चिन्तितेषु द्विजेषु वै ।
एकादशैव तास्तत्र दाम्पत्यं माहरात्मकाः ॥
विचिन्त्य परया भक्त्या तद्गृहेषु प्रवेशयेत् ।
ग्राहयेदग्निहोत्राणि प्रवेश्यैतान् द्विजोत्तमान् ॥
विधिपूर्वं यथान्यायमात्मनः श्रेयसे नरः ।
अदुष्टकुलजानां च विधिरेषां चिरन्तनः ॥
शिवभक्त्या विभक्तानां द्विजानां कारयेत् सदा ।
यश्च प्रेष्यान् द्विजान् मूढो योजयेद्धव्यकव्ययोः ॥
न भवेत् तत् फलं तस्य वैदिकीयं श्रुतिर्ध्रुवा ।
यज्ञदानं व्रताद्यं च तीर्थयात्रादिकं च यत् ॥
यस्त्वेवं कारयेज्जन्तुं तेन सर्वमनुष्ठितम् ।
स यात्यर्कसमानाभं विमानं रत्नमालिनम् ॥
आरुह्य तत्पदं पुण्यं सुरस्त्रीभिरलङ्कृतम् ।
विमानैश्चापरैर्दिव्यैः सहस्रैः परिवारितः ॥
सर्वलोकगतान् भोगान् भुक्त्वा तस्मिन् प्रपद्यते ।
ज्ञात्वा स्ववित्तसामर्थ्यमेकं चोद्वाहयेद्द्विजम् ॥
तेन प्राप्नोति तत्स्थानं शिवभक्तो नरो ध्रुवम् ।
स्थानेन स्थानसम्प्राप्तिर्विधिदत्तेन जायते ॥

अथ राजस्थापनम् । आदित्यपुराणे बृहस्पतिश्रुतौ च ।

भूमिपालं च्युतं राज्याद्यस्तु संस्थापयेत् पुनः ।
तस्य वासो मुनीन्द्रेह नाकपृष्ठे न संशयः ॥

विष्णुधर्मोत्तरे ।

भूपालं यं च्युतं राज्यात् स्वराज्ये स्थापयेत् पुनः ।
स याति शक्रसालोक्यं यावच्छक्राश्चतुर्दश ॥
ततो मानुष्यमासाद्य राजा भवति धार्मिकः ।
तस्माद्दानं श्रीविहीने दातव्यं भूतिमिच्छता ॥
श्रीविहीनेषु यद्दत्तं तदनन्तं प्रकीर्त्तितम् ।

तथा ।

स्थानभ्रष्टस्य यः कुर्याद्भूयस्त्वारोपणं नरः ।
नाकलोकमवाप्नोति चिरं तेनेह कर्मणा ॥

कन्यादानप्रसङ्गेन द्विजातिस्थापनमुक्तम् । क्रमप्राप्तस्य कपिलादानस्य गोदानप्रकरणे निरूपितत्वात् पर्यवसितानि दशमहादानानीति ।

इति श्रीमहाराजाधिराजश्रीमहादेवस्य समस्तकरणाधीश्वरसकलविद्याविशारदश्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ दानखण्डे दशमहादानप्रकरणम् ॥ ६ ॥



## अथ कृष्णाजिनदानान्यभिधीयन्ते ।

यो मन्यते सततमध्वरदीक्षणेषु
क्षौमाम्बरादपि मृदूनि मृगाजिनानि ।
हेमाद्रिरेष तदशेषमशेषमुक्तं
कृष्णाजिनप्रमुखदानविधानमाह ॥

## तत्संग्रहश्लोकास्तु सौरपुराणे ।

कृष्णाजिनं च महिषी मेषी च दश धेनवः ।
ब्रह्मलोकप्रदायीनि तुलापुरुष एव च ॥

## तत्र कृष्णाजिनदाने यमः ।

गोभूहिरण्यसंयुक्तं मार्गमेकं ददाति यः ।
सर्वदुष्कृतकर्माऽपि सायुज्यं ब्रह्मणो व्रजेत् ॥

## मरीचिः ।

कृष्णाजिनोभयमुखीं यो दद्यादाहिताग्नये ।
सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति ॥

## कात्यायनः ।

कृष्णाजिने तिलान् कृत्वा सर्सर्पिर्मधुकाञ्चनान् ।
यः प्रयच्छति विप्राय सोऽपि पापैः प्रमुच्यते ॥

## आह सुमन्तुः ।

कृष्णाजिने तिलान् कृत्वा हिरण्यं मधुसर्पिषी ।
ये प्रयच्छन्ति विप्राय न ते शोच्याः कृताकृते ॥
सर्वांश्च लोकाँश्चरति कामचारविहङ्गमः ।

आभूतसंप्लवं यावत् स्वर्गलोके महीयते ॥
कृष्णाजिनसमं दानं न चास्ति भुवनत्रये ।
प्रतिग्रहोऽपि पापीयानिति वेदविदो विदुः ॥
कृष्णाजिनं तु यो भक्त्या ब्राह्मणाय प्रयच्छति ।
स तिष्ठेद्वैष्णवे लोके यावच्चन्द्रार्कतारकम् ॥
कृष्णाजिनं तु यः पश्येद्दीयमानं तु भक्तितः ।
सोऽपि पापैः प्रमुच्येत आजन्मजनितैरपि ॥
ब्रह्मणा सर्वरूपं तु कृष्णाजिनं* विनिर्मितम् ।
संसिद्धये च यागानां श्राद्धानां च सुसिद्धये ॥
अह्नो रूपं सितं तस्य कृष्णं रात्रिमयं वपुः ।
बहुरूपं तु सन्ध्याया विज्ञेयं तन्नराधिप ॥
कृष्णाजिनस्य सामानि शुक्लानि च ऋचस्तथा ।
यजूंषि बहुरूपाणि श्रुतिदेहश्चरेन्मृगः ॥
स्वेच्छया रमते यत्र स देशो याज्ञिकः स्मृतः ।
इतरे म्लेच्छदेशास्तु श्रुतिधर्मविवर्जिताः ॥
न कृष्णेन विना यज्ञो न श्राद्धं न क्रिया क्वचित् ।
भवन्ति धर्मशास्त्राणि वेदकार्याणि पार्थिव ॥
तद्दानं सर्वदानानामधिकं श्रुतिकर्मणाम् ।

आह विष्णुः ।

अथ वैशाख्यां पौर्णमास्यां कृष्णमृगाजिनं सखुरं सशृङ्गं रौप्यखुरं मुक्तालाङ्गूलभूषितं कृत्वाऽऽविकेन च वस्त्रेण प्रसारिते प्रसारयेत् । ततस्तिलैः प्रच्छादयेत् । सुवर्णनाभं च कुर्यादहतेन वासोयुगेन प्रच्छाद-

---

* कृष्णसारमिति क्वचित् पाठः ।

येत् । सर्वरत्नगन्धैश्चालङ्कुर्यात् । चतसृषु च दिक्षु चत्वारि तैजसानि पात्राणि क्षीरदधिमधुसर्पिःपूर्णानि निधायाहिताग्नये ब्राह्मणाय वासोयुगप्रच्छादिताय दद्यात् ।

अत्र च गाथा भवन्ति ।

यस्तु कृष्णाजिनं दद्यात् सखुरं शृङ्गसंयुतम् ।
तिलैः प्रच्छाद्य वासोभिः सर्वरत्नैरलङ्कृतम् ॥
ससमुद्रगुहा तेन सशैलवनकानना ।
चतुरन्ता* भवेद्दत्ता पृथिवी नात्र संशयः ॥
कृष्णाजिने तिलान् कृत्वा हिरण्यं मधुसर्पिषी ।
ददाति यस्तु विप्राय सर्वं तरति दुष्कृतम् ॥

मत्स्यपुराणे मनुरुवाच ।

कृष्णाजिनप्रदानस्य विधिं कालं ममानघ ।
ब्राह्मणं च समाचक्ष्व तत्र मे संशयो महान् ॥

मत्स्य उवाच ।

वैशाखी पौर्णमासी च ग्रहणं शशिसूर्ययोः ।
पौर्णमासी तु या माघे आषाढी कार्त्तिकी तथा ॥
उत्तरायणद्वादशी वा तस्यां दत्तं महाफलम् ।
आहिताग्निर्द्विजो यश्च तद्देयं तस्य पार्थिव ॥
यथा येन विधानेन तन्मे निगदतः शृणु ।
गोमयेनोपलिप्ते तु शुचौ देशे च पार्थिव ॥
आदावेव समास्तीर्य शोभनं वस्त्रमाविकम् ।
ततः सशृङ्गं सखुरमास्तरेत् कृष्णमार्गणम् ॥

---

* बहुरत्ना इति क्वचित् पाठः ।

कर्त्तव्यं रुक्मशृङ्गं च रौप्यदन्तं तथैव च ।
लाङ्गलं मौक्तिकैर्युक्तं तिलच्छन्नं तथैव च ॥
तिलैरात्मसमं कृत्वा* वाससाऽऽच्छादयेद्बुधः ।
सुवर्णनाभं तत् कुर्यादलङ्कुर्याद्विशेषतः ॥
रत्नैर्गन्धैर्यथाशक्त्या तस्य दिक्षु च विन्यसेत् ।
कांस्यपात्राणि चत्वारि दिक्षु दद्याद्यथाक्रमम् ॥
मृण्मयेषु च पात्रेषु पूर्वादिषु क्रमेण तु ।
घृतं क्षीरं दधि क्षौद्रमेवं दत्त्वा यथाविधि ॥

अत्र सरत्नानि कांस्यपात्राणि चतसृषु दिक्षु विन्यसेत् । अन्यानि च मृण्मयानि पात्राणि घृतक्षीरदधिमधुपूर्णानि यथाक्रमं पूर्वादिदिक्षु स्थापनीयानीति ।

पञ्चकस्य तथा शाखामव्रणं कुम्भमेव च ।
बाह्योपस्थानकं कृत्वा शुभचित्तो निवेशयेत् ॥
जीर्णवस्त्रेण वीतेन सर्वाङ्गानि च मार्जयेत् ।

'बाह्योपस्थानकमिति' दानप्रदेशाद्बाह्ये उप समीपे स्थानं यस्य स तथेति कुम्भविशेषणम् । 'मार्जयेदिति' दानानन्तरं स्नात्वा जीर्णवस्त्रेण प्रच्छादयेदित्यर्थः ।

धातुमयानि पात्राणि पादेष्वस्य प्रदापयेत् ।
यानि काम्यानि पापानि मया लोभात् कृतानि वै ॥
लोहपात्रप्रदानेन प्रणश्यन्तु ममाशु वै ।
तिलपूर्णं तु तत् कृत्वा वामपादे निवेशयेत् ॥
यानि पापानि कास्यानि कर्णोत्थानि कृतानि च ।
कांस्यपात्रप्रदानेन तानि नश्यन्तु मे सदा ॥
मधुपूर्णं तु तत् कृत्वा पादे वै दक्षिणे न्यसेत् ।

एतत् पात्रद्वयं पश्चिमपादयोः स्थापनीयम् ।

---

* तिलैस्तु शिखरं कृत्वेति क्वचित् पाठः ।

परापवादपैशून्यात् पृष्ठमांसस्य* भक्षणात् ।
तत्रोत्थितं च मे पापं ताम्रपात्रात् प्रणश्यतु ॥
कन्यानृतं गवां चैव परदारप्रधर्षणम् ।
रौप्यपात्रप्रदानेन क्षिप्रं नाशं प्रयान्तु मे ॥
ऊर्ध्वपादे त्विमे कार्यौ ताम्रस्य रजतस्य च ।

'ऊर्ध्वपादे' अग्रपादयोः । एकवचनमत्राविवक्षितम् । अत्र ताम्रपात्रं मधुपूर्णं दक्षिणपादे रजतपात्रं तिलपूर्णं वामपादे स्थापनीयम् ।

जन्मजन्मसहस्रेषु कृतं पापं कुबुद्धिना ।
सुवर्णपात्रदानात् तन्नाशयाशु जनार्दन ॥

एतच्च सुवर्णपात्रमक्षतपूर्णं मध्यदेशे स्थापयेत् ।

हेममुक्ताविद्रुमं च दाडिमं बीजपूरकम् ।
प्रशस्तपत्रं श्रवणे खुरे शृङ्गाटकानि च ॥
एवं कृत्वा यथोक्तेन सर्वशाकफलानि च ।
तत्प्रतिग्रहविद्विद्वानाहिताग्निर्द्विजोत्तमः ॥
स्नातो वस्त्रयुगच्छन्नः स्वशक्त्या चाप्यलङ्कृतः ।
प्रतिग्रहश्च तस्योक्तः पुच्छदेशे महीपते ॥
सुवर्णनाभिकं दद्यात् प्रीयतां वृषभध्वजः ।

## इदमिह दानवाक्यम् ।

ॐ अद्यामुकसगोत्राय—इत्यादि इदं कृष्णाजिनं कुशोपरिगतकम्बलोपरि स्थितं वस्त्रयुगप्रच्छादिततिलराशिं सुवर्णशृङ्गं रौप्यखुरं रौप्यदन्तं मुक्ताफललाङ्गूलं सुवर्णनाभं पञ्चरत्नालङ्कृतं गन्धपुष्पान्वितं चतुर्दिगवस्थितघृतक्षीरदधिमधुपूर्णपात्रचतुष्टयसहितं सकांस्यपात्रं शिवदैवतममुककामस्तुभ्यमहं सम्प्रददे न मम इति ।

---

* पृष्ठमांसस्येति न० प्र० पु० पा० ।

ॐ अद्यामुकसगोत्राय—इत्यादि एतत् कृष्णाजिनदानप्रतिष्ठार्थं दक्षिणामिदं सुवर्णं तुभ्यमहं सम्प्रददे न मम इति ।

अनेन विधिना दद्याद्यथावत् कृष्णमार्गणम् ।
न स्पृश्यः स द्विजो राजन् चितियूपसमो हि सः ॥
दाने च श्राद्धकाले च दूरतः परिवर्जयेत् ।
स्वगृहात् प्रेष्य तं विप्रं मण्डले स्नानमाचरेत् ॥
तद्वस्त्रं कुम्भसहितं नीत्वा क्षेप्यं चतुष्पथे ।

'अहतम्' अपरिहितमप्रक्षालितं च वीतः कृतपरिधानः ।

दक्षिणासङ्ख्या तु गरुडपुराणे ।

शतनिष्कसमोपेतं तदर्धार्धमथापि वा ।
अतो न्यूनं न दातव्यमधिकं फलमूर्जितम् ॥
उत्तमं तु शतेनैव मध्यमं तु तदर्धतः ।
तदर्धेन कनिष्ठं तु देयं कृष्णमृगाजिनम् ॥
न वित्तशाठ्यं कुर्वीत फलहानेस्तु कारणात् ।

मत्स्यपुराणे ।

कृतेनानेन या तुष्टिर्न सा शक्या सुरैरपि ।
वक्तुं च नृपतिश्रेष्ठ तथाऽप्युद्देशतः शृणु ॥
समग्रभूमिदानस्य फलं प्राप्नोति मानवः ।
सर्वांस्तु लोकांश्चरति कामचारी विहङ्गमः ॥
आहूतसम्प्लवं यावत् स्वर्गमाप्नोत्यसंशयम् ।
न पितृपुत्रमरणं वियोगं भार्यया सह ॥
धनदेशपरित्यागं न चैवेहाप्नुयात् क चित् ।
कृष्णाजिनं कृष्णमृगस्य चर्म दत्त्वा द्विजेन्द्राय समाहिताय ।
यथोक्तमेतन्मरणं न शोचेत् प्राप्नोत्यभीष्टं मनसः फलं तत् ॥

वैष्णवपदाधिकारे कालिकापुराणे ।

येऽपि रुक्मादिपात्रे च हुत्वा वह्निं ददन्ति वा ।
तिलद्रोणसमायुक्तं वस्त्रयुग्मेन वेष्टितम् ॥
पलार्धार्धमथार्धं वा वित्तवान् हेमसंयुतम् ।
सूक्ष्मयुग्मेन वस्त्रेण अन्येनाच्छादयेद्द्विजम् ॥
सोदकं चापरं रुक्मं सतिलं न्यस्य तत् करे ।
ततः कृष्णाजिनं दद्यात् तिलद्रोणान्वितं च यत् ॥
दत्त्वा तु भोजयेत् तत्र नत्वा चैव विसर्जयेत् ।
अयने विषुवे चैव चन्द्रसूर्यग्रहे तथा ॥
युगादौ वा प्रयच्छन्ति विधिना ये तु वै द्विजे ।
तेऽपि तत्पदमासाद्य दशांशं ब्रह्म आयुषः* ॥
क्रीडन्ति विविधैर्भोगैः कलारूपगुणान्विताः ।
अनेन च विधानेन दशद्रोणप्रदायकः ॥
आब्रह्माण्डभवं कालं मोदते स पुरोत्तमे ।
यो घटं पयसा पूर्णं हेमपद्मनियोजितम् ॥
संपूज्य वस्त्रयुग्मेन दद्यात् सोऽपि व्रजेद्ध्रुवम् ।

आदित्यपुराणे ।

वैशाख्यां पूर्णमास्यां च तिलदानं ददन्ति ये ।
कृष्णाजिनं च संपूर्णं प्रच्छाद्याष्टौ तिलस्य वै ॥
स्वर्णशृङ्गं रौप्यखुरं मुक्तालाङ्गूलभूषितम् ।
श्वेतवस्त्रयुगोपेतं कृष्णचैलाद्यलङ्कृतम् ॥
लोहभाजनचतुष्कं घृतक्षौद्रेण पूरितम् ।
दधिक्षीरं तथा चैव संपूर्णं च ततः परम् ॥

परीक्षिते गुणाधारे ब्राह्मणे सुसमाहिते ।
अग्निहोत्ररते शान्ते देवद्विजपरायणे ॥
नित्यस्नाते शौचपरे सर्वशास्त्राद्यलङ्कृते ।
तस्मै तद्दीयते दानं कृष्णाजिनमनुत्तमम् ॥
सप्तद्वीपसागरां वै सशैलवनकाननाम् ।
पृथिवीं रत्नसंपूर्णां दत्त्वा भवति यत् फलम् ॥
उद्धृत्य नरकाद्घोरात् कुलान्येकोत्तरं शतम् ।
गच्छति ब्रह्मलोकं च विमानैश्चन्द्रसन्निभैः ॥
चामरैर्धूयमानस्य गीतवंशमनोरमैः ।
अप्सरोभिः परिवृतः पताकाध्वजसङ्कुलः ॥
जयघोषश्च क्रियते तस्याग्रे सुरकिन्नरैः ।
ब्रह्मलोकं ततः प्राप्य प्रविश्य च पुरीमिमाम् ॥
सर्वरत्नोज्ज्वलां दिव्यां मुक्ताजालविभूषिताम् ।
प्रवालस्तम्भशोभाढ्यां सौवर्णालङ्कृतां मुने ॥
त्रिंशत्कोट्यस्तु लक्षाणि अशीत्यभ्यधिका पुरा ।
सिंहासनोपविष्टस्तु श्वेतवस्त्रपरिच्छदः ॥
वसते तत्र वै कालं यावदाभूतसंप्लवम् ।
यदि मानुष्यमायाति कदा चित् कालपर्यये ॥
चतुर्वेदगृहे जन्म जायते महतां कुले ।
रूपवान् बलवाँश्चैव दीर्घायुः प्रियदर्शनः ॥
वल्लभः सर्वनारीणां दाता भोक्ता तथैव च ।

इति कृष्णाजिनदानविधिः ।

**अथ वह्निपुराणे । ब्रह्मोवाच ।**

विधिना केन दातव्या कृष्णाजिनयुतास्तिलाः ।

एतन्मे सर्वमाचक्ष्व यदि तुष्टोऽसि मे प्रभो ॥

यम उवाच ।

ग्रहणे ह्ययने चैव संक्रान्तौ सर्वपर्वसु ।
युगादिषु युगान्तेषु द्वादश्यां नियतः शुचिः ॥
समुपोष्य समभ्यर्च्य केशवं कल्मषापहम् ।
द्वादश्यां तु चतुर्दश्यां कृष्णायां तु विशेषतः ॥
संलिप्य गोमयेनाथ चतुर्हस्तप्रमाणतः ।
वस्त्राणि प्रस्तरेद्भूम्यामजिनं तत्र विन्यसेत् ॥
कृष्णैस्तिलैस्तु संछन्नं कृत्वा तत्रोपरि न्यसेत् ।
मधुसर्पिर्युतं पात्रं हैमं चौदुम्बरं तथा ॥
सुवर्णं प्रक्षिपेत् तत्र पलं वा त्रिपलं शतम् ।
शक्तितो दानमेवं हि भक्तिरेवात्र कारणम् ॥
संछाद्य तच्छुभैर्वस्त्रैः पात्रं यज्ञोपवीतिनम् ।
कुम्भांश्चाष्टौ तथा दिक्षु सवस्त्राः पात्रसंयुताः ॥
तान् स्थाप्य हवनं कृत्वा विधिवत् पूज्य केशवम् ।
कृष्णाजिनं समभ्यर्च्य ब्राह्मणायोपपादयेत् ॥
कृष्णोऽस्मि कर्मणा कृष्ण कृष्णाजिनमतस्तिलैः ।
कृष्णैर्युतं प्रतीच्छस्व कृष्णः संप्रीयतामिति ॥
एवं दत्त्वा द्विजेभ्यस्तु दद्यात् पश्चाच्च दक्षिणाम् ।
तिलाहारो भवेत् तत्र ब्राह्मणान् भोजयेत् ततः ॥
एवं कृष्णाजिनं दत्त्वा नरो विगतकल्मषः ।
पितामहान् समुद्धृत्य स्वर्गं याति न संशयः ॥
तत्र भोगांश्चिरं भुक्त्वा पितृपितामहैर्वृतः ।

स नरोऽस्य प्रभावाद्धि याति विष्णोः परं पदम् ॥

इत्यपरकृष्णाजिनदानविधिः ।

## अथ मध्यमकृष्णाजिनदानम् । तत्र पुलस्त्यः ।

अथातः कृष्णाजिनदानविधिं वक्ष्यामः । कार्त्तिक्यां पौर्णमास्यां वैशाख्यां वा चन्द्रसूर्यग्रहे विषुवत्ययनयोर्वा कृष्णमृगाजिनं सखुरं सशृङ्गमव्रणं मनोहरं हिरण्यशृङ्गं रौप्यखुरं मुक्तालाङ्गूलभूषितमन्तर्मांसं बहिर्लोमं प्राग्ग्रीवं स्यात् । गोमयलिप्तायां भुवि कुतपानाविस्तीर्य तस्मिन्नाविकं वस्त्रं प्रसार्य तस्मिन्नजिनं हिरण्यनाभं कृत्वा तिलैः प्रच्छाद्य तद्रूपं कृत्वा वस्त्रयुगेन तिलान् प्रच्छादयेत् । चतसृषु दिक्षु चत्वारि पात्राणि ताम्ररौप्यकांस्यसौवर्णानि यथाशक्तितः पूर्वस्यां दिशि क्षीरपूर्णं दक्षिणस्यां दिशि दधिपूर्णं पश्चिमस्यां दिशि घृतपूर्णमुत्तरस्यां दिशि क्षौद्रपूर्णं निदध्यात् । चतसृषु दिक्षु चतस्रो गृष्टीर्निदध्यात् । पश्चिमे भागे सुसमिद्धमग्निं कृत्वा परिसमूह्य पर्युक्ष्य परिस्तीर्य प्रागग्रे दर्भे महाव्याहृतिभिस्तिलान् घृताक्तान् जुहुयात् । शूद्रस्य नमस्कारेणेति । तत आहिताग्नये ब्राह्मणाय सर्वाङ्गसम्पूर्णाय पात्रसंयुक्ताय विदुषे वस्त्रयुगोपच्छन्नायालङ्कृताय दद्यात् । सर्वगुणविशिष्टं कृष्णाजिनं ददामीति नाभिं स्पृशन्नदितये कृष्णाजिनं प्रतिगृह्णामीति । असावपि गृह्णीयात् प्रतिग्रहं वाचयेत् ।

अत्र हिरण्यशृङ्गमित्यादौ हिरण्यादिपरिमाणं यथारुचि वित्तशाठ्यरहितेनाचरणीयम् । 'बहिर्लोमेति' उत्तरलोमेत्यर्थः । 'कुतपाः' कुशाः । 'आविकं' वस्त्रकम्बलः । 'गृष्टिः' सकृत्प्रसूता गौः । 'नाभिं स्पृशन्निति' तिलमयीं सुवर्णाद्यलङ्कृतां नाभिं दाता स्पृशन्नित्यर्थः । 'अदितये कृष्णाजिनमिति' प्रतिग्रहमन्त्रः । 'असाविति' प्रतिग्रहीता स्वनामोच्चारयन् पुच्छदेशे प्रतिगृह्णीयात् ।

## विष्णुधर्मोत्तरे ।

कृष्णाजिनविधिं ब्रूहि मम माधव पृच्छतः ।

अन्यान्यपि तु दानानि सर्वपापहराणि च ॥

श्रीभगवानुवाच ।

वैशाख्यां पौर्णमास्यां च कार्त्तिक्यां विषुवे तथा ।
अयने ग्रहणे वाऽपि दद्यात् कृष्णमृगाजिनम् ॥
भूमौ गोमयलिप्तायां दर्भानास्तीर्य मानवः ।
तत्राविकं तथा वस्त्रं प्रागग्रं च प्रसारितम् ॥
तस्मिन् कृष्णाजिनं भूप निर्मांसं संप्रसारयेत् ।
प्राग्ग्रीवमुत्तरमुखं सशृङ्गं सखुरं तथा ॥
स्वर्णशृङ्गं रौप्यखुरं मुक्तालाङ्गूलभूषितम् ।
तिलैः संच्छाद्य कृष्णैस्तु यथाशक्त्या यथाविधि ॥
सौवर्णं क्षीरपात्रं तु पूर्वस्यां दिशि दापयेत् ।
राजतं दधिपात्रं तु दक्षिणस्यां निधापयेत् ॥
ताम्रपात्रं घृतपूर्णं पश्चिमायां निधापयेत् ।
शङ्खं सुनाभिं सुमुखं क्षौद्रपूर्णं तथोत्तरे ॥
चतसृषु तथा दिक्षु चतस्रो गृष्टिकाः क्रमात् ।
तत्स्वरूपं तु राजेन्द्र तिलानाच्छाद्य वाससा ॥
पश्चिमे तु ततो भागे विधिना स्थाप्य पावकम् ।
तिलान् घृताक्तान् जुहुयात् व्याहृतिभिः समाहितः ॥
आहिताग्निं ततो विप्रमव्यङ्गाङ्गं सुपाठकम् ।
प्रवक्तारं याज्ञिकं च दातारं स्मृतिवित्परम् ॥
संपूज्य वस्त्रयुग्मेन अलङ्कारैस्तु शोभितैः ।
दिशः संप्रोक्ष्य गायत्र्या तिलमिश्रेण वारिणा ॥
कृष्णाजिनं द्विजश्रेष्ठ सशिरो गृष्टिभिर्युतम् ।
ददामि प्रतिगृह्णीष्व प्रीयतां धर्मराडिति ॥

नाभिं स्पृशँस्तन्निनयेत् प्रतिगृह्णात्वसाविति ।
अदितिर्द्यौरिति जपेत् प्रणवेनादिना ततः ॥

सप्रणवं मन्त्रं प्रतिग्रहाद्यन्तयोः प्रतिग्रहीता जपेत् ।

गोभूहिरण्यसंयुक्तं मार्गमेतद्ददाति यः ।

'गोभूहिरण्यसंयुक्तम्' इत्यत्र यथाशक्त्या गोभूहिरण्यं दक्षिणा ।

स सर्वपापकर्माऽपि सायुज्यं ब्रह्मणो व्रजेत् ।

इति मध्यमकृष्णाजिनदानविधिः ।

अथ महाकृष्णाजिनदानम् । विष्णुधर्मोत्तरे श्रीभगवानुवाच ।

मुण्डिते यातना प्रोक्ता प्रायश्चित्तपरा भवेत् ।
हत्यायां ब्राह्मणस्यैव तां प्रवक्ष्यामि मानद ॥
भूमिं प्राक्प्रवणां शुद्धां गोमयेनानुलेपयेत् ।
तस्यां हरितदर्भाँस्तु घनानास्तीर्य यत्नतः ॥
मध्ये कृष्णाजिनं राजन् नार्द्रं सर्वाङ्गिकं दृढम् ।
आस्तीर्य शृङ्गसहितं प्राग्ग्रीवं शिरसा सह ॥
केतितं ब्राह्मणं पूर्वं पात्रलक्षणलक्षितम् ।

'केतितमिति' निमन्त्रितमित्यर्थः ।

प्रक्षाल्य पादौ तस्यैव दद्यात् कृष्णे तु वाससी ।
सौवर्णे कुण्डले देये कण्ठाभरणमेव च ॥
सौवर्णे कङ्कणे देये हस्ताभरणमेव च ।
स्रग्दामभिस्तु संपूज्य शृङ्गयोर्मध्यदेशतः ॥
प्राङ्मुखं ब्राह्मणं स्थाप्य मृगं सौवर्णशृङ्गिकम् ।
तिलैः प्रच्छादयेत् कृष्णैर्ब्राह्मणं शिरसा सह ॥
यदा शिरो ब्राह्मणस्य मग्नं भवति भूभुज ।

जपेद्वै मूलमन्त्रं तु गायत्रीं वा समाहितः ॥
पापं संचिन्त्य चित्तेन हननं ब्राह्मणस्य तु ।
नाभिमात्रं समुद्धृत्य तिलैः संछादयेत् पुनः ॥
संछादिते पुनर्विप्रे जपेन्मन्त्रं तु पूर्ववत् ।
पुनरुद्धृत्य विप्रं तु नाभिमात्रं तु पार्थिव ॥
पुनः संछादयेत् तस्य शिरः कृष्णैस्तिलैस्तथा ।
त्रिकृत्वस्तु निमज्यैवं दाता दद्यान्मृगाजिनम् ॥
पात्रं मनसि संचिन्त्य तोयमप्सु विनिक्षिपेत् ।
प्रीयतां विश्वकर्मा तु विश्वात्मा विश्वरूपधृक् ॥
एवं कृष्णाजिनं दत्त्वा ब्रह्महत्यां व्यपोहति ।
पापिष्ठः परमं स्थानं याति यत्र न शोचति ॥
इति ते गुह्यमाख्यातं दानं सर्वाघनाशनम् ।
मुण्डितेन तु कृच्छ्राय ब्राह्मणे घातिते सति ॥
सहस्रं दक्षिणां दद्यान्नियतं ब्राह्मणाय तु ।

इति महाकृष्णाजिनदानविधिः ।

अथ कृष्णाजिनप्रसङ्गेन मृगदानमुच्यते । आह बौधायनः ।

हरिणं कारयेत् ताम्रं घनं तु दशभिः पलैः ।
तदर्धेन तदर्धेन शृङ्गे रूप्यमये दृढे ॥
तण्डुलोपरि संस्थाप्य ब्राह्मणाय निवेदयेत् ।
आढकत्रितयं वाऽपि तदर्धं वा स्वशक्तितः ॥
पादेषु चतुर्षु स्थाप्य कांस्यपात्रचतुष्टयम् ।
वायुदैवतमन्त्रैश्च होमं तत्र प्रकल्पयेत् ॥
समिदाज्यचरुं कृत्वा शतमष्टोत्तरं द्विज ।

अष्टाविंशतिरेवाथ दानमन्त्रेण कारयेत् ॥
वायो चरसि भूतानामन्तस्त्वं लोकपावन ।
वाहनस्य प्रदानेन वातव्याधिं विनाशय ॥
अनेन कृतमात्रेण यथोक्तेन विधानतः ।
वातव्याधिविनिर्मुक्तो नीरुजः सुखमश्नुते ॥

इति मृगदानविधिः ।

वायुपुराणे ।

गुरोरलीकनिर्बन्धादपतन्त्री भवेन्नरः ।
वक्ष्ये तस्य प्रतीकारं दानं होमादिसंयुतम् ॥
पलेन वा तदर्धेन तदर्धेनाथ वा पुनः ।
कारयेद्धरिणं हैमं वायोर्वाहनमुत्तमम् ॥
शृङ्गे च राजते कार्ये पर्वत्रयसमन्विते ।
तण्डुलोपरि संस्थाप्य ब्राह्मणाय निवेदयेत् ॥
आढकत्रितयं यद्वा तदर्धं वाऽथ शक्तितः ।
पादेषु चतुर्षु स्थाप्य कांस्यपात्रचतुष्टयम् ॥
वायुदैवतमन्त्रैश्च होमं तत्र प्रकल्पयेत् ।
समिदाज्यचरुं हुत्वा शतमष्टोत्तरं द्विजः ॥
आचार्यः सर्वशास्त्रज्ञः सर्वविद्यासु निष्ठितः ।
एतद्दानप्रयोगज्ञो वेदवेदाङ्गपारगः ॥
अग्नेरीशानदिग्भागे सुकुम्भं स्थापयेत् सुधीः ।
नवरत्नानि देयानि अलाभे स्वर्णमेव तु ॥
निक्षिपेन्मृत्तिकां वाऽपि रोचनां गुग्गुलं तथा ।
चतुर्भिर्ब्राह्मणैश्चापि शान्तिकर्म प्रकल्पयेत् ॥
आपो हिष्ठादिभिर्मन्त्रैर्हिरण्यादिभिरेव च ।

पवमानानुवाकेन देवस्य त्वेति चैव हि ॥
ततः पीठे समासीनमभिषिञ्चेयुरादृताः ।
वस्त्रेणावेष्टितं कुम्भमादाय चतुरो द्विजाः ॥
ततः शुक्लाम्बरधरो नरो शुक्लानुलेपनः ।
आचार्येण समं पूजां हरिणस्य प्रकल्पयेत् ॥
वायोः शतेन मन्त्रेण तल्लिङ्गेनाथ वा पुनः ।
ततस्तं हरिणं दद्यात् प्राङ्मुखाय ह्युदङ्मुखः ॥
मन्त्रेणानेन विधिना आचार्यायाथ भक्तितः ।
वायो चरसि भूतानामन्तस्त्वं लोकपावन ॥
प्राणापानव्यानोदानसमानाद्यभिधानतः ।
अलीकं यत् कृतं देव पूर्वजन्मनि* मारुत ॥
त्वं वेत्सि सर्वमेतद्धि परमात्मा यथैव हि ।
वाहनस्य प्रदानेन अपतन्त्रं विनाशय ॥
ब्राह्मणानां चतुर्णां च यथाशक्त्या च दक्षिणा ।
अचार्यस्त्वहतं वासो गृहीत्वा शुक्लमेव तु ॥
तेन तस्य यथालिङ्गमङ्गानि विमृजेत् सुधीः ।
अक्षिभ्यामनुवाकेन यथा लिङ्गं प्रयत्नतः ॥
दर्भाग्रमुष्टिना चैव दर्भपिञ्जलकैरपि ।
हिरण्यवर्णाः शुचय आपो हिष्ठेति वै पुनः ॥
पवमानानुवाकेन आपो अस्माँस्तथैव च ।
अन्यैश्च पावनैर्मन्त्रैर्यजुर्भिर्लोकपूजितैः ॥
ब्राह्मणान् भोजयेच्चापि यथाविभवतो नरः ।
एवं कृत्वा तु नियतमपतन्त्राद्विमुच्यते ॥

---

* सप्तजन्मनीति न० प्र० पु० पाठः ।

आयुरारोग्यसम्पन्नः सुस्थो भवति मानवः ।
महाव्याधिषु चान्येषु दानमेतत् करोति यः ॥
तत्तद्दोषैर्विनिर्मुक्तो नीरुजो भवति प्रभो ।

इत्यपरमगदानविधिः ।

## अथ महिषीदानम् । विश्वामित्रः ।

महिषीं सुप्रजां राजन् क्षीराढ्यां युवतीं तथा ।
दत्त्वा चैव तु कार्त्तिक्यां धेनूपस्करसंयुताम् ॥
दशधेनुप्रदानेन यत् फलं तत् समश्नुते ।
प्राप्नोति पुत्रपौत्रांश्च सूर्यलोकं च गच्छति ॥

## भविष्योत्तरे । श्रीभगवानुवाच ।

महिषीदानमाहात्म्यं कथयामि युधिष्ठिर ।
पुण्यं पवित्रमायुष्यं सर्वकामसुखप्रदम् ॥
चन्द्रसूर्यग्रहे पुण्ये कार्त्तिक्यामयने तथा ।
शुक्लपक्षचतुर्दश्यां सूर्यसङ्क्रान्तिवासरे ॥
यदा वा जायते वित्तं चित्तं च कुरुनन्दन ।
तदैव देया महिषी संसारभयभीरुणा ॥
सुपयोधरा सुजघना सुश्रृङ्गी सुखुरा तथा ।
प्रथमप्रसूता तरुणी सुशीला दोषवर्जिता ॥
सुवर्णश्रृङ्गतिलका घण्टाभरणभूषिता ।
रक्तवस्त्रावृता रम्या ताम्रदोहनिकान्विता ॥
पिण्याकपिटकोपेता सहिरण्या च शक्तितः ।
सप्तधान्ययुता देया ब्राह्मणे वेदपारगे ॥
पुराणपाठके तद्वज्ज्योतिःशास्त्रविदे तथा ।
देया न वेदरहिते न वक्रव्रतिने क्वचित् ॥

द्रव्यैरेभिः समायुक्ता पुण्येऽह्नि विधिपूर्वकम् ।
दद्यान्मन्त्रेण राजेन्द्र पुराणपठितेन तु ॥
इन्द्रादिलोकपालानां या राजमहिषी शुभा ।
महिषीदानमाहात्म्यात् साऽस्तु मे सर्वकामदा ॥
धर्मराजस्य साहाय्ये यस्याः पुत्रः प्रतिष्ठितः ।
महिषासुरस्य जननी या साऽस्तु वरदा मम ॥

दानमन्त्रः ।

दद्यात् प्रदक्षिणीकृत्य ब्राह्मणे तां पयस्विनीम् ।
प्रतिग्रहः स्मृतस्तस्याः पृष्ठदेशे स्वयम्भुवा ॥

## अत्रेदं दानवाक्यम् ।

ॐ अद्यामुकसगोत्राय—इत्यादि इमां महिषीं प्रथमप्रसूतां तरुणीं सुवर्णशृङ्गीं सुवर्णतिलकां सुवर्णाभरणां घण्टाताम्रदोहनकान्वितां पिण्याकपिटकोपेतां सप्तधान्ययुतां पादुकवतीं यमदैवताममुककामस्तुभ्यमहं सम्प्रददे न मम इत्युक्त्वा पूर्वोक्तं मन्त्रमुदाहरेत् ।

अमुकसगोत्राय—इत्यादि एतन्महिषीदानप्रतिष्ठार्थं दक्षिणामिदं हिरण्यं तुभ्यमहं सम्प्रददे न मम इति ।

एवं दत्त्वा विधानेन ब्राह्मणस्य गृहं नयेत् ।
क्षमापयेत् ततो विप्रान् सुसंतुष्टो भवेति च ॥
अनेन विधिना दत्त्वा महिषीं द्विजपुङ्गवे ।
सर्वान् कामानवाप्नोति इह लोके परत्र च ॥
या स्त्री ददाति महिषीं सा राजमहिषी भवेत् ।
महाराजः पुमान् राजन् व्यासस्य वचनं यथा ॥
यज्ञयाजी भवेद्विप्रः क्षत्रियो विजयी भवेत् ।
वैश्यस्तु धान्यधनवान् शूद्रः सर्वार्थसंयुतः ॥

तस्मान्नरेण दातव्या महिषी विभवे सति ।
पुत्रपौत्रप्रपौत्रार्थमात्मनः शुभमिच्छता ॥
दशधेनुसमां राजन् महिषीं नारदोऽब्रवीत् ।
विंशद्धेनुसमां व्यासः सर्वदानोत्तमां कविः ॥
सगरेण ककुत्स्थेन धुन्धुमारेण गाधिना ।
दत्ताः संस्कृत्य विप्रेभ्यो महिष्यः सर्वकामदाः ॥
महिषीदानमाहात्म्यं यः शृणोति सदा नरः ।
सर्वपापविनिर्मुक्तः शिवलोके महीयते ॥
दुग्धाधिकां हि महिषीं नवमेघवर्णां
सन्तुष्टतर्णकवतीं जघनाभिरामाम् ।
दत्त्वा सुवर्णतिलकां द्विजपुङ्गवाय
लोकद्वयं च जयतीह किमत्र चित्रम् ॥

इति महिषीदानविधिः ।

अथ मेषीदानम् । तत्र कश्यपः ।

योऽपि दद्यादविं चात्र ब्राह्मणाय मनोरमाम् ।
सोऽप्यग्निलोकमासाद्य भुङ्क्ते भोगान् सुशोभनान् ॥

विष्णुधर्मोत्तरे ।

मेषीमशेषपापघ्नीं दत्त्वा याति परं पदम् ।
वारुणं लोकमाप्नोति दत्त्वोरभ्रं नरोत्तम ॥

भविष्योत्तरे । श्रीभगवानुवाच ।

शृणु पार्थ परं दानं सर्वकिल्बिषनाशनम् ।
यद्दत्त्वा विविधं पापं सद्यो विलयमृच्छति ॥
सुवर्णरोमां सौवर्णीं प्रत्यक्षां वा सुशोभनाम् ।

सुवर्णतिलकोपेतां सर्वालङ्कारभूषिताम् ॥
कौशेयपरिधानां च दिव्यचन्दनभूषिताम् ।
दिव्यपुष्पोपहारां तु सर्वधातुरसैर्युताम् ॥
सप्तधान्यसमायुक्तां फलपुष्पवतीं तथा ।
शतेन कारयेत् तां च सुवर्णस्य प्रयत्नतः ॥
यथाशक्त्याऽथ वा कुर्याद्वित्तशाठ्यं न कारयेत् ।
अयने विषुवे पुण्ये ग्रहणे शशिसूर्ययोः ॥
दुःस्वप्नदर्शने चैव जन्मर्क्षे तिथिसंक्षये ।
यदा वा जायते वित्तं चित्तं श्रद्धासमन्वितम् ॥
तदैव दानकालः स्याद्यतोऽनित्यं हि जीवितम् ।
दद्यात् तीर्थे गृहे वाऽपि यत्र वा रमते मनः ॥
तत्र संस्थाप्य देवेशमुमया सह शङ्करम् ।
ब्रह्माणं सह गायत्र्या सश्रीकं श्रीधरं तथा ॥
रत्या सह तथाऽनङ्गं लोकपालान् ग्रहानपि ।
ताँस्तु पूज्य विधानेन गन्धपुष्पनिवेदनैः ॥

## उमाशङ्कररूपमाह विश्वकर्मा ।

चर्माम्बरश्चतुर्बाहुः शूलखट्वाङ्गपाशधृक् ।
वृषाङ्कः शङ्करो गौरी वामोत्सङ्गे स्थिता भवेत् ॥

ब्रह्मगायत्रीरूपं तु पद्मपुराणोक्तब्रह्माण्डदाने द्रष्टव्यम् । लक्ष्मीनारायणयोस्तु हेमहस्तिरथदाने । रत्यनङ्गयोस्तु कल्पपादपदाने । लोकपालानां च ब्रह्माण्डदाने । ग्रहरूपाणि च ग्रहदानेषु वक्ष्यन्ते । तानि च यथाशक्ति सुवर्णमयानि कर्त्तव्यानीति ।

तदग्रे कारयेद्धोमं तिलाज्येन महीतले ।
अलङ्कृत्य द्विजं शान्तं वासोभिः परिपूज्य च ॥
तल्लिङ्गमन्त्रैर्होमश्च कर्त्तव्यो ज्वलितेऽनले ।

ततस्ताँस्तिलकुम्भस्थान् लवणाभिमुखस्थितान् ॥
पूजयित्वा विधानेन मन्त्रमेतमुदीरयेत् ।
रोमत्वङ्मांसमज्जाद्यैः सर्वोपकरणैः सदा ॥
जगतः संप्रवृत्तोऽसि त्वामतः प्रार्थयेच्छिवम् ।
वाङ्मनःकायजनितं यत् किञ्चिन्मम दुष्कृतम् ॥
तत् सर्वं विलयं यातु त्वद्दानमुपसेवितम् ।
एवमुच्चार्य तां दद्याद्ब्राह्मणाय कुटुम्बिने ॥

दानवाक्यं तु महिषीदानवदवगन्तव्यम् । केवलं महिषीस्थाने मेषीप्रयोग इति।

नाभिभाषेत् ततो दत्त्वा न मुखं चावलोकयेत् ।
दुष्टप्रतिग्रहहतो विप्रो भवति पातकी ॥
नोर्णायुर्दक्षिणाहीना दातव्या नाविधानतः ।
दक्षिणा विधिना हीना दुःखशोकावहा भवेत् ॥
पुरा दत्तमिदं दानं गौर्या दक्षगृहस्थया ।
तेन शुभपतिर्लब्धः सर्वदेवनमस्कृतः ॥
इन्द्राण्या स्वर्णरोमाणां शतं दत्तं विधानतः ।
सर्वदेवपतिर्लब्धः साऽद्यापि दिवि मोदते ॥
नलेन दत्तमेतद्धि राज्यं कृत्वा दिवं गतः ।
रुक्मिण्याऽहं पतिर्लब्धः सौभाग्यमतुलं तथा ॥
दानस्यास्य प्रभावेण पुत्रा बहुबलान्विताः ।
अपुत्रो लभते पुत्रमधनो लभते धनम् ॥
दत्त्वा दानं शुभां कान्तिं विपुलां च तथा श्रियम् ।
य इमं शृणुयान्नित्यं दानकल्पमनुत्तमम् ॥
अहोरात्रकृतात् पापान्मुच्यते नात्र संशयः ।

मेषीमशेषकलुषापहरातिशस्तां
दाने सदैव रसधातुयुतां सधान्याम् ।
तामादरेण कुरुनन्दन देहि दत्त्वा
येनास्तपापतिमिरः सवितेव भासि ॥

इति मेषीदानविधिः ।

## अथ मेषदानम् । तत्र बौधायनः ।

अग्नेर्मान्द्यं भवेत् तस्य यश्चैताग्निविनाशकः ।
वक्ष्यामि तत्प्रतीकारं यथोक्तं ब्रह्मणा पुरा ॥
पलार्धेन तदर्धेन तदर्धार्धेन वा पुनः ।
राजतं कारयेत् सौम्यमग्नेर्वाहनमुत्तमम् ॥
सौवर्णाश्च खुराः कार्याः श्वेतवस्त्रेण वेष्टयेत् ।
श्वेतमाल्यैः श्वेतगन्धैर्धूपं दद्यान्मधूत्कटम् ॥
तण्डुलोपरि संस्थाप्य पुनस्तं पूजयेत् सुधीः ।
तण्डुलानां परीमाणं द्रोणद्वयमुदाहृतम् ॥
आग्नेय्यां दिशि होमश्च समिदाज्यतिलैरपि ।
आचार्येण विनीतेन सर्वशास्त्रार्थवेदिना ॥
बह्वृचेन च कर्त्तव्यस्तत्र मन्त्रानिमान् शृणु ।
अग्निर्मूर्धेति मन्त्रेण समिद्धोमः प्रशस्यते ॥
अग्ने नयेत्याज्यहोमोऽप्यग्निनाऽग्निस्तिलाक्षतैः ।
मन्त्राध्यायोक्तमन्त्रेण चाग्निसंस्थापनं भवेत् ॥
अग्नेः प्रागुत्तरे देशे शुभं कुम्भं तु विन्यसेत् ।
प्रणीतामोक्षपर्यन्ते कृते स्नानं विधीयते ॥
आपो हिष्ठेत्यपि त्र्यृचं हिरण्येति चतूरृचम् ।
पवमानानुवाकेन मार्जयेद्रोगिणं ततः ॥

शन्नो देव्यनुवाकेन शान्तिं चापि प्रकल्पयेत् ।
तस्मै हुतवते रोगी प्राङ्मुखाय ह्युदङ्मुखः ॥
पूजिताय यथाशक्त्या दद्यात् तं तु सदक्षिणम् ।
देवानां यो मुखं हव्यवाहनः सर्वपूजितः ॥
तस्य त्वं वाहनं पूज्यं देवैः सेन्द्रैर्महर्षिभिः ।
अग्निमान्द्यं पूर्वकर्मविपाकोत्थं तु यन्मम ॥
तत् सर्वं नाशय क्षिप्रं जठराग्निं प्रवर्धय ।

दानमन्त्रः ।

एवं विप्राय यो दद्यादग्नेर्वाहनमुत्तमम् ।
बलवानग्निमान्मर्त्यो जीवेद्वर्षशतं पुनः ॥
ततः स्वबन्धुभिर्विप्रैः स्नात्वा भुञ्जीत मानवः ।

इति मेषदानम् ।

अथ क्रमप्राप्तानां दशधेनुदानानां प्रागभिहितत्वान्मेषीदानप्रसङ्गादजादानमारभ्यते । अत्राह सुमन्तुः ।

प्रजापतिस्तपस्तप्त्वा प्रजामुत्पाद्य यत्नतः ।
यज्ञार्थं तत्सुतं कल्प्य पशुं यज्ञसमुद्धृतौ ॥
द्विरूपं त्रिपुरं श्लक्ष्णं कृष्णसारं युवानकम् ।
असमाप्तेस्तु यज्ञानां सत्राणां पितृकर्मणाम् ॥
तत्समं विहितं देवैस्तद्दानं च निगद्यते ।
अजापालो महीपालो ह्यजादानैर्दिवं गतः ॥
अयने विषुवे चैव युगादौ ग्रहणेषु च ।
अमावास्यामजादानं पौर्णमास्यां च शस्यते ॥
विधिं तस्य प्रवक्ष्यामि विश्वामित्रेण निर्मितम् ।
सर्वरत्नोपसम्पन्नां सप्तधान्योपरि स्थिताम् ॥
वस्त्रमाल्योपमालां च भूषितां पशुजानकीम् ।

वज्रनेत्रां हेमशृङ्गीं ताम्रपृष्ठां सदोहनीम् ॥
ससुतां रौप्यपादां च कुक्षौ दद्यात् तिलोदकम् ।
गोदानवत् प्रयुञ्जीत मन्त्रेणानेन संयतः ॥
मन्त्रवासे अजे श्लक्ष्णे यज्ञसंपत्करे शुभे ।
सृष्टा त्वं दह मे पापं जन्मान्तरशतैः कृतम् ॥

दानमन्त्रः ।

एवं समुच्चरेद्भक्त्या द्विजहस्ते जलं क्षिपेत् ।
प्रीयतां यज्ञनाथाय वासुदेवाय वै नमः ॥
एवं प्रदक्षिणीकृत्य सूर्यं समवलोकयेत् ।
ततश्च गच्छेत् स्वगृहं हरिं संस्मृत्य मानवः ॥
ये बालत्वे कृताः पापाः कामतो वाऽप्यकामतः ।
यौवने वार्द्धकोन्मादे प्रसङ्गेनापि पातकम् ॥
अजादानस्य माहात्म्यान्निष्पापो जायते नरः ।
पुत्रपौत्रसमायुक्तः सदाचारमतिश्चिरम् ॥

## महाभारते ।

अजामलङ्कृतां दत्त्वा वह्निलोके महीयते ।
तमेव लोकमाप्नोति दत्त्वाऽजं विधिवन्नरः ॥
सर्वान् कामानवाप्नोति ये ये चेतसि संस्थिताः ।

## तथा ।

अजाविकं च महिषं दत्त्वा विप्राय शक्तितः ।
घृतक्षीरवहा नद्यो यत्र यत्र स मोदते ॥

## विष्णुधर्मोत्तरे ।

उष्ट्रं वा गर्दभं वाऽपि यः प्रयच्छति तु द्विजे ।

अजामुरभ्रं तुगरं यथाशक्त्या सदक्षिणम् ॥
अलकां स समासाद्य यक्षेन्द्रैः सह मोदते ।
सर्वकामसमृद्धात्मा सर्वयज्ञफलं लभेत् ॥
तस्मादजां प्रयच्छ त्वं ततः सर्वमवाप्स्यसि ।
मन्त्रेणानेन विधिवदलङ्कृत्य स्वशक्तितः ॥
त्वं पूर्वं ब्रह्मणा सृष्टा पवित्रा भवती परम् ।
त्वत्प्रसूतोत्थिता यज्ञास्तस्माच्छान्तिकरो भव ॥
प्रतिगृह्णीत तां चैव पृष्ठदेशे द्विजोत्तमः ।

*दानवाक्यं तु महिषीदानवद्विज्ञेयम् ।

एवं प्रदाय विप्राय सर्वपापैः प्रमुच्यते ।
अश्वमेधफलं प्राप्य मोदते वैष्णवे पुरे ॥

इत्यजादानविधिः ।

इति श्रीमहाराजाधिराजश्रीमहादेवस्य समस्तकरणाधीश्वरसकलविद्याविशारद-
श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ दानखण्डे कृष्णाजिनादि-
दानप्रकरणम् ॥ १० ॥



## अथ देवतादानानि ।

आहूता यस्य यज्ञेष्वनवरतपरीरम्भसम्भोगलीला-
शर्मं स्वर्मानिनीनां कथमपि शिथिलीकृत्य नाकान्निवृत्ताः ।
गीर्वाणश्रेणिमुख्यास्त्रिभुवनजयिभिर्यच्चरित्रैः पवित्रां
धात्रीमासाद्य सद्यः स्वभवनगमनं विस्मिता विस्मरन्ति ॥
विश्वोपकृतिशीलेन तेन हेमाद्रिसूरिणा ।
क्रमेण देवतादानमिदानीमुपवर्ण्यते ॥

तत्र बौधायनः ।

सौवर्णं राजतं ताम्रं कारयेत् कांस्यतोऽपि वा ।
यद्वाऽर्कमूलकाष्ठेन विघ्नं विभवतो नरः ॥
पुष्करं कल्पयेद्धैमं सौवर्णं लोचनद्वयम् ।
आखुं च कल्पयेत् तस्य यथा देवो विनिर्मितः ॥
नागयज्ञोपवीतं च कल्पयेत् तस्य गुल्मवान् ।
अनन्तरं तं वासोभिश्चन्दनागुरुपूजितम् ॥
सहिरण्यं ब्राह्मणाय स्वशक्त्या पूजिताय तु ।
कृतहोमाय शान्ताय सर्वशास्त्रार्थवेदिने ॥
मन्त्रेणानेन विधिवद्दक्षिणाभिमुखाय तु ।
विनायक गणेशान सर्वदेवनमस्कृत ॥
पार्वतानन्दन मम गुल्ममाशु विनाशय ।

दानमन्त्रः ।

कृतेनानेन दानेन निरोगी जायते नरः ।

इति विनायकदानविधिः ।

तथा ।

ब्राह्मणश्वासरोधेन ह्यपस्मारी भवेन्नरः ।
वक्ष्ये तस्य प्रतीकारं दानहोमक्रियादिभिः ॥
पलेन वा तदर्धेन तदर्धार्धेन वा पुनः ।
विनायकप्रतिकृतिं कुर्यात् स्वर्णेन शोभनाम् ॥
राजतं च तथा नागमुपवीतं प्रकल्पयेत् ।
पुष्करं पद्मरागेण हस्तं रत्नैः प्रकल्पयेत् ॥
विनायकार्धमानेन चाखुं देवस्य कल्पयेत् ।
तस्याप्यङ्गे प्रदेयानि रत्नानि विविधानि च ॥
माणिक्येन प्रकुर्वीत चक्षुषी तस्य शोभने ।
पूर्वेद्युर्मण्डपं कुर्याद्धस्तैः षोडशभिर्दृढम् ॥
यद्वा द्वादशभिः कुर्यादष्टाभिर्वा प्रयत्नतः ।
मण्डपस्य चतुर्भागां वेदिकामपि कल्पयेत् ॥
रात्रौ विनायकस्यापि ह्यधिवासनमिष्यते ।
चतुर्भिर्ब्राह्मणैः सार्धमाचार्यः सर्वशास्त्रवित् ॥
स्वयमेव हि आचार्यो धर्मज्ञः सत्यवाक् शुचिः ।
कुलीनो न च वृद्धश्च सर्वप्राणिहिते रतः ॥
रात्रौ जागरणं कृत्वा मध्यरात्रे वलिं हरेत् ।
मत्स्यमांसेन सहितं तथा क्षीरौदनेन च ॥
आचार्यः प्रयतो भूत्वा मन्त्रेणानेन संयतः ।
पूर्वस्यां दिशि तं दद्याद्बलिं वै सार्वकामिकम् ॥
आदित्या वसवो रुद्रा देवा भूतानि सर्वशः ।
सर्पाः पिशाचा डाकिन्यः शाकिन्यः पान्थदेवताः ॥
अपस्मारा भिदैवं च वेताला नैर्ऋतास्तथा ।

बलिदानेन दत्तेन शान्तिं कुर्वन्तु सर्वशः ॥

बलिदानमन्त्रः ।

ततः प्रभाते विमले स्नात्वा स्वहतवाससः ।
भूषिताः कटकैः सम्यगुपवीताङ्गुलीयकैः ॥
कुण्डानि दिक्षु चत्वारि मेखलासम्भृतानि तु ।
कुर्यात् तेषु प्रकुर्वन्ति होमं मन्त्रैः स्वकैः सदा ॥
पूर्वस्मिन् बह्वृचः कुर्यात् समिदाज्यचरूत्कटम् ।
विनायकं समुद्दिश्य गणानां त्वेति मन्त्रतः ॥

तत् पुरुषाय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्ती प्रचोदयात् ॥

अध्वर्युर्दक्षिणे कुण्डे कुर्याद्धोमं समाहितः ।
छन्दोगः पश्चिमे वाऽपि तद्दैवत्येन होमयेत् ॥
आथर्वणश्चोत्तरे च कुण्डे होमं प्रकल्पयेत् ।
विनायकाय देवाय सर्वभूतहिताय च ॥
गाणपत्ये नियुक्ताय हुँफट् स्वस्ति स्वधा नमः ।
समिदाज्यचरुं हुत्वा पूर्णाहुत्यन्तमेव हि ॥
आचार्यः प्रतिमानां तु ब्राह्मणैः सह संयुतः ।
आसने वेदिकामध्ये वितानादिसुशोभिते ॥
तिलानामुपरि स्थाप्य गन्धमाल्यैः प्रपूजयेत् ।
वस्त्रैर्नानाविधैः शुभ्रैः केयूरकटकादिभिः ॥
उपचारैः षोडशभिर्नैवेद्याय च मोदकाः ।
यथा देवे तथाऽऽचार्येऽप्यलङ्कारादि कल्पयेत् ॥
आचार्यः परया भक्त्या गणेशाय प्रकल्पयेत् ।
अपूपादि तथाऽन्यच्च कारयेद् भक्ष्यकादिकम् ॥
निवेद्य पार्वतीं चापि देवदेवं महेश्वरम् ।

पूजयेत् परया भक्त्या आचार्यं स्वयमेव हि ॥
तथैव रोगवान् भक्त्या संपूज्य गणनायकम् ।
गणानां त्वेति मन्त्रेण तूष्णीं शूद्रस्तु पूजयेत् ॥
ततो मध्यन्दिने प्राप्ते प्रतिमां दक्षिणायुताम् ।
मन्त्रणानेन दद्याच्च स रोगी प्राङ्मुखः स्वयम् ॥
उदङ्मुखोपविष्टाय ब्राह्मणायातिभक्तितः ।
विनायक प्रपन्नार्त्तिहर विघ्नविनायक ॥
त्वं देवैः प्रथितः पूर्वं विघ्न विघ्नपरायणैः ।
ब्राह्मणश्वासरोधेन यज्जातं मम वैकृतम् ॥
पूर्वकर्मविपाकेन ह्यपस्मारोन्मदादिकम् ।
जाड्यं वाऽप्यथ बाधिर्यं नास्तिक्यं वाऽथ भाषिणम् ॥
त्वदर्चायाः प्रदानेन रोगमाशु विनाशय ।

दानमन्त्रः ।

चतुर्णां ब्राह्मणानां च यथाशक्त्या च दक्षिणाम् ।
एवं कृत्वा गणपतेर्दानं मर्त्यः सुखी भवेत् ॥

इति विनायकदानविधिः ।

**तथा ।**

सौवर्णं राजतं ताम्रं कांस्यपित्तलतोऽपि वा ।
यद्वाऽर्कमूलकाष्ठेन विघ्नं विभवतो नरः ॥
पुष्करं कल्पयेद्धैमं सौवर्णं लोचनद्वयम् ।
आखुं च कल्पयेत् तस्य पादेन च सुवर्णकम् ॥
नागाकारं चोपवीतं सुवर्णेन प्रकल्पयेत् ।
तिलाढकद्वये वस्त्रयुग्मस्योपरि स्थापयेत् ॥
भूमौ शुद्धप्रदेशे तु भक्त्या प्रयतमानसः ।

वस्त्रेणावेष्ट्य मतिमान् पूजयेत् तं विनायकम् ॥
चन्दनागुरुधूपैश्च कुङ्कुमेनोपलेपयेत् ।
पूजयेद्वाहनं वाऽपि यथा देवं तथैव हि ॥
आचार्यस्तु तिलैर्होमं कुर्यादष्टोत्तरं शतम् ।
गणानां त्वेति मन्त्रेण तथैवाज्याहुतीः क्रमात् ॥
तस्मै होमं कृतवते शान्ताय प्रयतात्मने ।
धर्मशास्त्रप्रवीणाय वेदवेदाङ्गवेदिने ॥
स्वाचारायातिशिष्टाय दक्षिणाभिमुखाय च ।
शुक्लपक्षे चतुर्थ्यां तु सर्वमेतत् प्रकल्पयेत् ॥
पूजयेत् तं तथाऽऽचार्यं वस्त्रेण प्रयतः शुचिः ।
पूर्वकर्मविपाकेन इह कर्मकृतेन च ॥
प्लीहगुल्मोदराष्ठीला उदरव्याधयस्तु ये ।
तत् सर्वं नश्यते तूर्णं दाने दत्ते न संशयः ॥
मन्त्रेणानेन विधिवद्भक्त्या परमया युतः ।
विनायक गणेशान सर्वदेवनमस्कृत ॥
पार्वतीनन्दन मम शमय व्याधिमौदरम् ।
गुल्मं प्लीहानमष्ठीलं व्याधिजातं यदौदरम् ॥
तव दानेन महता शुक्लेनाखुरतेन हि ।
नाशयाशु महेशानपुत्र भक्तस्य च प्रभो ॥

दानमन्त्रः ।

एवं कुर्याद्गणपतेर्दानं व्याधिविमोचनम् ।

इति विघ्नेशदानविधिः ।

## अथ सरस्वतीदानं वायुपुराणे ।

वाग्विरोधं गुरोः कृत्वा भवेद्गद्गदवाङ्नरः ।

तस्य वक्ष्ये प्रतीकारं दानेन ऋषिभाषितम् ॥
पलेनाथ तदर्धेन तदर्धार्धेन वा पुनः ।
सारस्वतीं च प्रतिमां कुर्याद्भुजचतुष्टयाम् ॥
वरदं चाक्षसूत्रं च बिभ्रतीं दक्षिणे करे ।
पुस्तकं चाभयं वामे दधानां हंसवाहनाम् ॥
अतिशुभ्रेण रौप्येण कूटस्वर्णेन वा भवेत् ।
आसनं च प्रकुर्वीत सौवर्णं पद्ममुत्तमम् ॥
तस्योपरि च संवेश्य देवीं वागीश्वरीं पराम् ।
मुक्तादामभूषिताङ्गीं शुक्लवस्त्रेण संयुताम् ॥
वागीश्वरेण मन्त्रेण पूजयेत् सिततण्डुलैः ।
श्वेतपुष्पैः श्वेतगन्धैः संस्कृत्य विधिपूर्वकम् ॥
ब्राह्मणः सर्वशास्त्रज्ञः कुशलः सर्वसम्मतः ।
मन्त्रवादप्रवीणश्च तेन होमं च कारयेत् ॥
पायसं जुहुयादष्टशतं शालिमयं तथा ।
जुहुयात् समिधश्चापि तथाऽऽज्यं च तिलानपि ॥
सरस्वति प्रेदमव इति या मन्त्र इष्यते ।
कृते ब्रह्मोद्वासने तामाचार्याय निवेदयेत् ॥
मन्त्रेणानेन विधिवत् प्राङ्मुखाय ह्युदङ्मुखः ।
सम्पूज्य ब्राह्मणं सम्यग्वस्त्रालङ्कारपूर्वकम् ॥
या वक्त्रे ब्रह्मणो देवी या सा वागीश्वरी परा ।
ब्रह्मविष्णुशिवैश्चान्यैः पूजिता सर्ववन्दिता ॥
तुष्टा भवतु दानेन दत्तेनानेन वाक्परा ।
वाग्विरोधं गुरोः कृत्वा यन्मे गद्गदभाषणम् ॥
तत् सर्वं क्षपय क्षिप्रं ब्राह्मी त्वं लोकपावनी ।

दानमन्त्रः ।

अनुज्ञाप्य ब्राह्मणं तं स्वयं भुञ्जीत मानवः ॥

इति सरस्वतीदानविधिः ।

तथा ।

स्वरोपघाती वाचां च हर्त्ता मूकः प्रजायते ।
वक्ष्ये तस्य प्रतीकारं दानहोमैर्नरोत्तमः ॥
पलार्धेन तदर्धेन तदर्धार्धेन वा पुनः ।
रजतेन सुशुद्धेन कुर्यात् प्रतिकृतिं शुभाम् ॥
सरस्वतीं चतुर्हस्तां पाशाङ्कुशकमण्डलुम् ।
तथैवाभयहस्तां च श्वेतवस्त्रेण संयुताम् ॥
श्वेतमाल्यैः श्वेतगन्धैर्मूलमन्त्रेण पूजयेत् ।
होमं च कारयेत् तत्र समिदाज्यचरूत्कटम् ॥
सरस्वतिप्रेदमव इति मन्त्रश्च चोदितः ।
आचार्यः सर्वशास्त्रज्ञः स्वाचारः संयतेन्द्रियः ॥
धर्मज्ञः सत्यवादी च मेधावी सुपदस्तथा ।
एवं लक्षणसंयुक्तः सर्वत्राचार्य इष्यते ॥
प्रणम्य गृहमानीय पूजयेद्भक्तिपूर्वकम् ।
एवं होमं च कृत्वा तु पूजयेच्च सरस्वतीम् ॥
सरस्वत्यै नम इति यथा लिङ्गं तु मन्त्रतः ।
तस्मै हुतवते तां तु देवीं दद्यात् सदक्षिणाम् ॥
मन्त्रेणानेन विधिवत् प्राङ्मुखाय ह्युदङ्मुखः ।
सौम्ये देवि महाभागे सर्वदेवनमस्कृते ॥
पद्मासनगते सर्वजगतामार्त्तिहारिणि ।
स्वरोपघातान्मदीयं प्रज्ञाजाड्यमपानुद ॥

दानमन्त्रः ।

प ं दत्त्वा तु प्रकृतिं सरस्वत्याः प्रयत्नतः ।
स्वरोपघातजनितात् प्रज्ञाजाड्याद्विमुच्यते ॥
मेधाकरमिदं दानं सर्वेषां च विशेषतः ।
विशेषश्चायमुदितो जपस्योपक्रमो भवेत् ॥
तदेतत् प्रथमं दानं कृत्वा जपमुपक्रमेत् ।
नैवेद्यं पायसं दद्यात् स्वयं तदुपयोजयेत् ॥
पूर्वेद्युरुपवासं च कृत्वैवोपक्रमो भवेत् ।
कायशुद्धिश्च कर्त्तव्या यावता लवणो भवेत् ॥

इत्यपरसरस्वतीदानविधिः ।

## अथ घण्टादानं ब्रह्मवैवर्त्तपुराणे ।

गुरुणा ह्यननुज्ञातो यो वेदाध्ययनं चरेत् ।
स प्रज्ञया विहीनस्तु संसारे जायते नरः ॥
वक्ष्यामि तत्प्रतीकारं शुद्धकांस्यमयीं दृढाम् ।
शोभनां घाटयेद्घण्टां शुभरेखाविभूषिताम् ॥
पलैस्तु कुर्याद्विंशद्भिस्त्रिंशद्भिर्वा तदर्धतः ।
सुस्वरां तामतिश्लक्ष्णां पञ्चगव्येन धावयेत् ॥
श्वेतवस्त्रेण संवीतां तण्डुलोपरि विन्यसेत् ।
तण्डुलानां परीमाणं द्रोणानां त्रयमेव च ॥
तदर्धमथ वा ग्राह्यं परीमाणं स्वशक्तितः ।
आचार्यः सर्वशास्त्रज्ञो वेदवेदाङ्गपारगः ॥
धर्मशास्त्रे च कुशलः स्वाचारः सञ्जितेन्द्रियः* ।
आहूय परया भक्त्या स्वयमेव गृहं गतः ॥

---

* संयतेन्द्रिय इति पुस्तकान्तरं ।

तेनैव कारयेत् पूजां घण्टायाः शास्त्रचोदितैः ।
उपचारैः षोडशभिर्मन्त्रेणानेन भक्तितः ॥
आवाहयेत् तु वागीशां घण्टायां परमेश्वरीम् ।
एह्येहि देवि सर्वेशि घण्टायां सन्निधिं कुरु ॥
सर्वसत्त्वोपकारी त्वं ज्ञानमुद्रे परात् परे ।

आवाहनमन्त्रः ।

एवमावाह्य तां घण्टां ब्राह्मणं चापि पूजयेत् ।
ब्रह्मयज्ञानमन्त्रेण घण्टां पूज्य तथाऽम्बरम् ॥
मन्त्राध्यायोक्तमार्गेण प्रतिष्ठाप्याथ भक्तितः ।
होमं कुर्यात् प्रयत्नेन समिदाज्यतिलैरपि ॥
नैवेद्यं पायसं दद्याद्देव्यै च ब्रह्मणे तथा ।
सरस्वति प्रेदमवमन्त्रः सर्वत्र सम्मतः ॥
तस्मै हुतवते दद्यात् तां घण्टां पूजिताय तु ।
मन्त्रेणानेन विधिवद्रोगी पूर्वमुखः शुचिः ॥
उदङ्मुखोपविष्टाय सतोयामथ भक्तितः ।
गुरोरवज्ञया यच्च स्वाध्यायाध्ययनं कृतम् ॥
सरस्वति जगन्मातर्जगज्जाड्यापहारिणी ।
साक्षाद्ब्रह्मकलत्रं त्वं विष्णुरुद्रादिभिः स्तुता ॥
तन्ममाध्ययनोत्पन्नं जाड्यं हर वरानने ।
घण्टादानेन तुष्टा त्वं ब्रह्माणी लोकपावनि ॥
एवं दानं च दत्त्वा च तमाचार्यं क्षमाप्य च ।
अन्येभ्यः शक्तितो दद्याद्ब्राह्मणेभ्यश्च भोजनम् ॥
ततः स्वबन्धुभिः सार्धं स्नात्वा भुञ्जीत मानवः ।
एवं यः कुरुते दानं प्रज्ञाहीनो जडोऽथ वा ॥

प्रज्ञावानजडो जन्तुर्जायते वाक्पतिर्यथा ।
जायते वाक्प्रवाहश्च साक्षाद्गङ्गाप्रवाहवत् ॥

इति घण्टादानविधिः ।

## अथ लक्ष्मीदानं लिङ्गपुराणे ।

लक्ष्मीदानं प्रवक्ष्यामि महदैश्वर्यवर्धनम् ।
लूतादिव्रणनाशाय विशेषेण शिवोदितम् ॥
पूर्वोक्तमण्डपं कृत्वा वेदिकोपरिमण्डले ।
श्रीदेवीमतुलां कृत्वा हिरण्येन यथाविधि ॥
सहस्रेण तदर्धेन तदर्धार्धेन वा पुनः ।
अष्टोत्तरशतेनापि सर्वलक्षणसंयुताम् ॥
मण्डले विन्यसेल्लक्ष्मीं सर्वालङ्कारसंयुताम् ।
तस्यास्तु दक्षिणे भागे स्थण्डिले विष्णुमर्चयेत् ॥

'पूर्वोक्तेति' कुण्डमण्डपमण्डलवेदिकावितानादि लिङ्गपुराणोक्ततुलापुरुषविहितमिति वेदितव्यम् । सहस्रादिसङ्ख्या चात्र निष्कैः परिपूरणीया । लिङ्गपुराणोक्तदानेषु प्रायशस्तैरेव व्यवहारदर्शनात् ।

लक्ष्मीलक्षणमुक्तं कल्पपादपप्रदाने ।

अर्चयित्वा विधानेन श्रीसूक्तेन सुरेश्वरीम् ।
अर्चयेद्विष्णुगायत्र्या विष्णुं विश्वगुरुं हरिम् ॥
आराध्य विधिना सिद्धिं पूर्वतो होममारभेत् ।
समिद्धूत्या विधानेन आज्याहुतिमुपाचरेत् ॥
पृथगष्टोत्तरशतं होमयेद्ब्राह्मणोत्तमः ।

'श्रीसूक्तं' हिरण्यवर्णां हरिणीमित्यादि ।

## विष्णुगायत्री तु लिङ्गपुराणोक्तैव ।

नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् इति ।

पूर्वोक्तमण्डले लक्ष्मीं विन्यस्य तस्या दक्षिणतः स्थण्डिले विष्णुदैवत्या गायत्र्या विष्णुदेवमाराध्य ततः पञ्चदशर्चेन श्रीसूक्तेन षोडशोपचारैः श्रियं पूजयेत् । 'आराध्य सिद्धिमिति' सिद्धिर्लक्ष्मीः ।

कामिके तु ।

श्रीमन्त्रेण यजेल्लक्ष्मीं श्रीसूक्तेनाथ वाऽर्चयेत् ।
पूर्ववच्छिवपूजा च होमश्चैव विशेषतः ॥
एकहोमं तु वा कुर्यात् प्रागुक्तविधिना गुरुः ।
सहस्रकलशाद्यैश्च श्रियमच्र्य श्रियं ददेत्–इति ॥

होमश्च श्रीसूक्तेनैव ।

आहूय यजमनं तु तस्याः पूर्वदिशि स्थले ।
तस्मै तां दर्शयेद्देवीं दण्डवत् प्रणमेत् क्षितौ ॥
प्रणम्य विष्णुं तत्रस्थं शिवं पूर्ववदर्चयेत् ।

'पूर्ववदिति' लिङ्गपुराणोक्ततुलापुरुषवदित्यर्थः ।

तस्या विंशतिभागस्तु दक्षिणा वै प्रकीर्त्तिता ।
तद्दशांशात् तु दातव्या इतरेषां यथार्हतः ॥
ततस्तान् भोजयेद्विप्रान् वेदवेदाङ्गपारगान् ।

'तस्या' लक्ष्मीप्रतिमायाः विंशांशस्य समानतोऽन्यद्धनं गुरवे दक्षिणादशांशमानं प्रत्येकमृत्विग्भ्यः । इतरेभ्यो द्वारजापकेभ्योऽपि ऋत्विगर्धम् ।

तदुक्तं वातुले ।

लक्ष्मीं प्रणम्य विद्वद्भ्यः श्रोत्रियेभ्यः समर्पयेत् ।
तस्माद्विंशतिभागस्तु दक्षिणा देशिकस्य हि ॥
तद्दशांशस्तु दातव्यो जप्त्रे वेदविदां वरः ।
पुण्याहवाचकानां तु पूर्वोक्तं दापयेत् तथा ॥

इति लक्ष्मीदानविधिः ।

## अथ नारायणदानं ब्रह्मप्रोक्तम् ।

यज्ञविघ्नकरो मर्त्यो जायते चान्त्रवृद्धिमान् ।
वक्ष्यामि तत्प्रतीकारं दानहोमादिकर्मणा ॥
कुर्यात् स्वर्णमयीं मूर्त्तिं शुभां नारायणस्य तु ।
व्यावहारिकनिष्काभ्यामेकेनाथ तदर्धतः ॥

नारायणलक्षणमुक्तं हेमहस्तिरथदाने ।

प्रक्षाल्य पञ्चगव्येन स्थापयेत् कुङ्कुमोपरि ।
श्वेतवस्त्रेण संवेष्ट्य गन्धमाल्यैः समर्चयेत् ॥
उपचारैः षोडशभिराचार्यो वैष्णवः शुचिः ।
सर्वशास्त्रार्थतत्त्वज्ञो ब्रह्मविद्यासु निष्ठितः ॥
होमं च कारयेत् तत्र ह्याग्नेय्यां दिशि शास्त्रतः ।
समिदाज्यतिलैश्चैव मूलमन्त्रेण वै समित् ॥
आज्यं नारायणायेति तिलान् व्याहृतिभिर्हुनेत् ।
रोगी तथाऽर्चयेद्देवं नारायणमनामयम् ॥
मूलमन्त्रेण विधिवन्नैवेद्यं चरुरिष्यते ।
नमोऽन्तं नाम सोङ्कारं मूलमन्त्रः प्रकीर्त्तितः ॥
ततस्तां प्रतिमां दद्यात् प्राङ्मुखाय ह्युदङ्मुखः ।
मन्त्रेणानेन विधिवद्भक्त्या परमया युतः ॥
नारायण जगन्नाथ शङ्खचक्रगदाधर ।
पूर्वजन्मनि यज्ञादेर्विघ्नाद्यद्दैकृतं मम ॥
अन्त्रवृद्धिमहारोगं दानेनानेन तोषितः ।
चक्रहस्त गदापाणे शमयाशु जगत्पते ॥

दानमन्त्रः ।

एवं दत्त्वा तु तं देवं क्षमाप्य ब्राह्मणं ततः ।

विप्राणां भोजनं दद्यात् स्नात्वा भुञ्जीत बन्धुभिः ॥
एवं कृत्वा समाप्नोति नीरोगत्वं नरो भुवि ।
आरोग्ययुक्तो नित्यं स सुचिरं सुखमेधते ॥

इति नारायणमूर्त्तिदानविधिः ।

## अथ गोपालमूर्त्तिदानम् । तथा ।

नक्तान्ध्यं जायते तस्य यो गवां नयनद्वये ।
करोति शूलप्रक्षेपं तस्य वक्ष्यामि निष्कृतिम् ॥
विष्णोः श्रीगोपवेषस्य यथाशक्त्या च भक्तितः ।
सुवर्णेन प्रतिकृतिं वेणुवादनतत्पराम् ॥
वर्हापीडकसंयुक्तां द्विभुजामूर्ध्वसंस्थिताम् ।
कारयित्वा शुभाकारां प्रक्षाल्य शुभवारिणा ॥
वस्त्रेण वेष्टयित्वाऽथ गन्धमाल्यैः समर्चयेत् ।
तण्डुलोपरि संस्थाप्य यथा विभवतः स्वयम् ॥
पूजां च मूलमन्त्रेण कुर्याद्देवस्य भक्तितः ।
आचार्यः सर्वशास्त्रज्ञो वेदवेदाङ्गपारगः ॥
एवम्भूतं समानीय तेन पूजां प्रकल्पयेत् ।
होमं चैव प्रकुर्वीत समिदाज्यतिलैरपि ॥
इदं विष्णुः प्रतद्विष्णुर्विष्णोर्नुकमिति क्रमात् ।
मन्त्राध्यायोक्तमार्गेण चाग्नेः संस्थापनं भवेत् ॥
प्रणीतामोक्षपर्यन्तं कृत्वा देवं प्रपूजयेत् ।
देवस्य दद्यान्नैवेद्यं हविः सर्वं समन्ततः ॥
अष्टोत्तरशतेनापि मूलमन्त्रेण वै श्रुतम् ।
जुहुयादथ रोगी तु प्राङ्मुखः प्रयतः शुचिः ॥
शुक्लाम्बरधरः शुक्लगन्धमाल्यानुलेपनः ।

सदक्षिणां च तां दद्यात् प्राङ्मुखाय ह्युदङ्मुखः ॥
मन्त्रेणानेन विधिवन्नमस्कृत्यातिभक्तितः ।
गोविन्द गोपीजनवल्लभेश कंसासुरघ्न त्रिदशेन्द्रवन्द्य ।
गोवर्धनाद्रिप्रवरैकहस्त संरक्षिता शेषगवामनीक ॥
गोचक्षुषां चातिनिरोधजेन पापेन मे नाशय आन्ध्यमेतत् ।
त्वदीयदानेन सुहृष्टरूपं नक्तान्ध्यमेतत् समुपाकरोतु ॥

दानमन्त्रः ।

एवं कृत्वा प्रतीकारं गोपवेषधरस्य तु ।
तत्क्षणादेव हि सुखी जायते नात्र संशयः ॥

इति गोपालमूर्त्तिदानविधिः ।

## अथ वराहदानं भविष्योत्तरे । श्रीकृष्ण उवाच ।

दानमादिवराहस्य कथयामि युधिष्ठिर ।
धरण्यां यत् पुरा प्रोक्तं वराहवपुषा मया ॥
पुण्यं पवित्रमायुष्यं सर्वदानोत्तमोत्तमम् ।
महापापादिदोषघ्नं पूजितं मुनिसत्तमैः ॥
देयं सङ्क्रमणे भानोर्ग्रहणे द्वादशीतिथौ ।
यज्ञोत्सवविवाहेषु दुःस्वप्नाद्भुतदर्शने ॥
यदा वा जायते वित्तं चित्तं श्रद्धासमन्वितम् ।
तदैव तस्य कालः स्यादध्रुवं जीवितं यतः ॥
कुरुक्षेत्रादितीर्थेषु गङ्गाद्यासु नदीषु च ।
गोष्ठे देवालये वाऽपि रम्ये वाऽथ गृहाङ्गणे ॥
देयं पुराणविधिना ब्राह्मणाय कुटुम्बिने ।
अव्यङ्गाय सुशीलाय वेदवेदाङ्गवादिने ॥
देशं कालं च पात्रं च यथावत् ते मयोदितम् ।

शृणु दानविधिं पुण्यं सर्वपापहरं परम् ॥
पूर्वोत्तरप्लवां भूमिं गोमयेनोपलेपयेत् ।
कुशैरास्तीर्य तां पार्श्वे प्रणवाक्षरमन्त्रितैः ॥
उपरिष्टात् तिलैस्तेषां वराहं परिकल्पयेत् ।
द्रोणैश्चतुर्भिः सम्पूर्णं तदर्धेनाथ वा पुनः ॥
आढकेनापि कुर्वीत वित्तशाठ्यं न कारयेत् ।
सुवर्णेन खुरौ कार्यौ भुजौ चक्रगदान्वितौ ॥
राजतीं कारयेद्दंष्ट्रां पद्मरागविभूषिताम् ।
शङ्खं च स्थापयेत् पार्श्वे वनमालां हिरण्मयीम् ॥
पुष्पैर्वा कारयेद्विद्वान् पादौ रौप्यमयौ तथा ।
दंष्ट्राग्रलग्नवसुधां सौवर्णीं कारयेच्छुभाम् ॥
सर्वधान्यरसोपेतां वस्त्रालङ्कृतविग्रहाम् ।

द्रोणादिलक्षणमुक्तं परिभाषायाम् । पृथ्वीलक्षणं च धरादाने द्रष्टव्यम् ।

प्रच्छाद्य वस्त्रैर्देवेशं वराहं सर्वकामदम् ।
रोमराजिं कुशैः कृत्वा गन्धपुष्पैरथार्चयेत् ॥
नवग्रहमखः कार्यो होमश्चात्र तिलैः स्मृतः ।
एवं संस्थाप्य विधिवत् ततः स्तोत्रमुदीरयेत् ॥
वराहाशेषदुष्टानि सर्वपापफलानि च ।
मर्द मर्द महादंष्ट्र भास्वत्कनककुण्डल ॥
शङ्खचक्रासिहस्ताय हिरण्याक्षान्तकाय च ।
दंष्ट्रोद्धृतक्षितिपते त्रयीमूर्त्तिमते नमः ॥
इत्युच्चार्य नमस्कृत्य त्रिः कृत्वा तु प्रदक्षिणाम् ।
ततस्तं ब्राह्मणे दद्याद्यथाऽलङ्कारविग्रहम् ॥
प्रतिग्रहश्च तस्योक्तः पादयोः परमर्षिभिः ।

अनेन विधिना दत्त्वा वराहं दक्षिणान्वितम् ॥
आचार्यमथ संपूज्य प्रणिपत्य क्षमापयेत् ।
एवं दत्त्वा महीनाथ वराहं सर्वकामदम् ॥
यत् फलं समवाप्नोति पार्थ तत् केन वर्ण्यते ।
सर्वदानेषु यत् पुण्यं सर्वक्रतुषु यत् फलम् ॥
तत् फलं समवाप्नोति दत्त्वा देवं जनार्दनम् ।
यथा समुद्धृता देवी वराहेण वसुन्धरा ॥
तथा कुलं समुद्धृत्य विष्णुलोके महीयते ।
ब्राह्मणक्षत्रियविशां स्त्रीणां शूद्रजनस्य च ॥
एतत् साधारणं दानं शैववैष्णवयोगिनाम् ।
विप्राय वेदविदुषे नृवराहरूपं
दत्त्वा तिलानपि सुवर्णमयं सुवस्त्रम् ।
उद्धृत्य पूर्वपुरुषान् सकलत्रमित्रः
प्राप्नोति विष्णुभुवनं सुरसिद्धजुष्टम् ॥

इति वराहदानविधिः ।

## अथ नरसिंहदानं कालिकापुराणे ।

नृसिंहं चाथ रौक्मं तु कृत्वा चतुर्भुजं विभुम् ।
ताम्रपात्रे प्रतिष्ठाप्य रौप्ये दंष्ट्रे प्रकल्पयेत् ॥
चक्षुषी पद्मरागेण नखानां विद्रुमास्तथा ।
पुष्परागं भ्रुवोर्देशे कर्णयोर्हीरकावुभौ ॥

## नृसिंहरूपं तु विष्णुधर्मोत्तरे ।

कार्यस्तु भगवान् विष्णुर्नरसिंहवपुर्धरः ।
पीनस्कन्धकटिग्रीवः कृशमध्यः कृशोदरः ॥
सिंहासनो नृदेहश्च नीलवासाः प्रभान्वितः ।

आलीढस्थानसंस्थानः सर्वाभरणभूषणः ॥
ज्वालमालाकुलमुखो ज्वलत्केसरमण्डलः ।
हिरण्यकशिपोर्वक्षः पाटयन्नखरैः खरैः ॥
देवजानुगतः कार्यो हिरण्यकशिपुस्तथा ।
देवश्च शङ्खचक्राभ्यां भूषितोर्ध्वकरद्वयः–इति ॥
गन्धपुष्पैस्तथा धूपैर्जागरं तत्र कारयेत् ।
राजवर्त्म च वैदूर्यमिन्द्रनीलं सुमस्तके ॥
कृत्वा रूपमिदं रम्यं तत् पात्रं मधुना बुधः ।
पूरयेत् खण्डमिश्रेण तत्र देवं पुनर्न्यसेत् ॥
वस्त्रयुग्मेन संछन्नमासने विनिवेशयेत् ।
नैवेद्यं कल्पयेदग्र्यं भक्ष्यैर्नानाविधैर्बुधः ॥
वितानोपरि संयुक्तं पुष्पदामभिरर्चयेत् ।
गन्धपुष्पैस्तथा धूपैर्जागरं चार्च्य कारयेत् ॥
कृत्वा समस्तमेतत् तु हरये पूर्ववद्ददेत् ।
यत् किञ्चित् प्राग्विनिर्दिष्टं कुर्यात् सर्वमिहापि तत् ॥

'प्राग्विनिर्दिष्टमिति' वैष्णवमन्त्रेण पूजनं मूलमन्त्रेणाष्टोत्तरशतं तिलाज्यहोमो द्वादशेभ्यो ब्राह्मणेभ्यः सदक्षिणामन्नदानमिति ।

कार्त्तिक्यां वाऽथ वैशाख्यामाश्रित्य द्वादशीमथ ।
कृत्वा विधिमिमं सम्यगनूनं तत् पदमश्नुते ॥
अरण्ये वाऽथ संग्रामे तस्करैर्दंष्ट्रिभिर्वृते ।
न भयं जायते तस्य सकृद्यस्त्वेतदाचरेत् ॥
विदार्य चापदो घोरा धनमायुः प्रयच्छति ।
सन्ततिं चैव रूपं च सौभाग्यं च मनोरथान् ॥

एवं भवति यत् पुण्यं नृसिंहाकृतिदानतः ।
तेन विष्णोः पदं प्राप्य तत्र क्रीडन्ति देहिनः ॥
एतत्कृत्वा महत् पुण्यं सर्वपापैः प्रमुच्यते ।
धनमायुर्विवर्धेत श्रावकस्य विशेषतः ॥
श्रावके दक्षिणां दद्याच्छक्त्या चात्मविभूतये ।

इति नृसिंहदानविधिः ।

## अथ लक्ष्मीनारायणदानम् । तत्र बौधायनः ।

लक्ष्मीनारायणं रूपं सुवर्णेन प्रकल्पयेत् ।

लक्ष्मीनारायणरूपमुक्तं कामिके ।

पलेन वा तदर्धेन तदर्धेनाथ वा पुनः ।
पद्मासनगतं कुर्याद्देवदेवं चतुर्भुजम् ॥
दक्षिणाधःकरे पद्मं शङ्खमूर्ध्वकरे न्यसेत् ।
वामोर्ध्वे च भवेच्चक्रं लक्ष्मीपृष्ठे करोऽपरः ॥
वामोत्सङ्गगता लक्ष्मीरब्जपात्रकरा भवेत् ।
दक्षिणश्च भुजो देव्याः पृष्ठे देवस्य चक्रिणः—इति ॥
गरुडं राजतं कुर्याद्देवदेवस्य वाहनम् ।
पक्षौ च तस्य सौवर्णौ सौवर्णी चैव नासिका ॥
वस्त्रैरत्यन्तरुचिरैः परिधाप्यातिकौतुकम् ।
मुक्तादामपरिक्षिप्तं चन्दनागुरुलेपितम् ॥
अर्चयेत् कुसुमैर्गन्धं लक्ष्मीनारायणात्मकम् ।
प्रसन्नं रमणीयं च गरुडोपरिसंस्थितम् ॥
ततो विप्रं समाहूय सुशीलं लक्षणान्वितम् ।
आचारवन्तं धर्मज्ञं वेदवेदाङ्गपारगम् ॥
प्रतिग्रहनिवृत्तं च श्रुतिस्मृतिपथे स्थितम् ।

स्वयं भक्त्या समानीय पूजयेद्वस्त्रकुण्डलैः ॥
कुङ्कुमागुरुकर्पूरैरुपवीताङ्गुलीयकैः ।
पूर्वोक्तेन विधानेन होमं तत्र तु कारयेत् ॥
मन्त्रेणानेन तं दद्यात् सर्वलोकनमस्कृतम् ।

लक्ष्मीपते देवकिनन्दनेश क्षीराब्धि शायिन् वचसामगम्य ।
गोविन्ददामोदर वातरक्तं विनाशयाशु क्षपितारिवर्ग ॥

दानमन्त्रः ।

लक्ष्मीनारायणस्यैवं मूर्त्तिं दत्त्वाऽतिभक्तितः ।
आरोग्यवान् सुखी नित्यं जायते नात्र संशयः ॥

इति लक्ष्मीनारायणमूर्त्तिदानविधिः ।

## अथ गरुडदानं ब्रह्माण्डपुराणे ।

सौवर्णं राजतं वाऽपि गरुडं कारयेत् सुधीः ।
ताम्रेण वाऽथ पलतः स्वशक्त्या वाऽपि नारद ॥
नासिकां च स्वर्णमयीं कुर्यान्नेत्रद्वयं तथा ।

गरुडमूर्त्तिलक्षणं तु तिथिदानप्रकरणस्थितैकादशीविहितगारुडदाने विलोकनीयम् ।

श्वेतवस्त्रेण संवेष्ट्य ताम्रपात्रोपरि स्थितम् ।
चन्दनागुरुकर्पूरैः श्वेतमाल्यैर्विशेषतः ॥
पूजयेत् परया भक्त्या गायत्र्या गरुडाह्वयम् ।
होमं कुर्याच्च तत्रैव समिदाज्यतिलैस्तथा ॥
ब्राह्मणः सर्वशास्त्रार्थकुशलो निर्मलात्मवान् ।
वैष्णवो धार्मिकः शान्तः स्वाचारः सञ्जितेन्द्रियः * ॥

---

* संयतेन्द्रिय इति क्वचित् पाठः ।

तत् पुरुषाय विद्महे पक्षिराजाय धीमहि । तन्नः सुपर्णः प्रचोदयात्॥
तत् पुरुषाय विद्महे वायुवेगाय धीमहि । तन्नोऽमृतमथनः प्रचोदयात्॥
तत् पुरुषाय विद्महे वैनतेयाय धीमहि । तन्नस्तार्क्ष्यः प्रचोदयात् ॥

समिदाज्यतिलानां तु मन्त्रा एते यथाक्रमम् ।
ततः शुक्लाम्बरधरः* शुक्लगन्धानुलेपनः ॥
यजमानः स्वयं भक्त्या शुचिः प्रयतमानसः ।
ब्राह्मणाय प्रदद्यात् तं हृदि नारायणं स्मरन् ॥
मन्त्रेणानेन सम्पूज्य वस्त्राद्यैश्च स्वशक्तितः ।
विहङ्गराज पक्षीश सुपर्णीतनय प्रभो ॥
सर्पाशन वियद्गत्न पूर्वजन्मनि यत् कृतम् ।
देवद्रव्यापहरणं तेन यद्वैकृतं मम ॥
विनाशयाशु मे सर्वं श्रीनारायणवाहन ।
ततो निष्कल्मषो भूत्वा नीरुजो जायते नरः ॥
सप्तजन्मकृतात् पापाद्यस्माज्जातं हि वैकृतम् ।
ब्राह्मणान् भोजयेद्भक्त्या स्वशक्त्या तु विशेषतः ॥

इति गरुडदानविधिः ।

अथाह वृद्धगौतमः ।

कामली भक्तचौरः स्यात् तस्य वक्ष्यामि निष्कृतिम् ।
कुर्याच्च शतमानाभ्यां विष्णोर्वाहनमुत्तमम् ॥
सुवर्णेनातिशुद्धेन पक्षयोर्मौक्तिकद्वयम् ।
नासिकायां तथा वज्रमुत्तरीयं च राजतम् ॥
एवं कृत्वा गरुत्मन्तं घृतद्रोणोपरि न्यसेत् ।

---

* शुक्लमाल्याम्बरधर इति क्व चित् पाठः

श्वेतवस्त्रेण संवेष्ट्य श्वेतमाल्यैः समर्चयेत् ॥
सर्वशास्त्रार्थतत्त्वज्ञो वैष्णवो धर्मपाठकः ।
ब्राह्मणस्त्वर्चितो भक्त्या यजमानेन शक्तितः ॥
उपचारैः षोडशभिर्द्विजमभ्यर्च्चयेत् तथा ।
आग्नेय्यां दिशि होमश्च कर्त्तव्यः स्थण्डिले शुभे ॥
समिदाज्यं तिलैस्तत्र पलाशसमिधोऽपि च ।
मन्त्रो गरुडगायत्री समित् स्वाज्ये च कीर्त्तिता ॥
तिलहोमो व्याहृतिभिः कार्यः स्विष्टकृतं यजेत् ।

गरुडगायत्री प्रागभिहिता ।

स्थापयेदव्रणं कुम्भं सितवस्त्रेण वेष्टितम् ।
निक्षिपेन्नवरत्नानि मृत्तिकां रोचनां तथा ॥
अश्वस्थानाद्गजस्थानाद्वल्मीकात् सङ्गमाद्ध्रदात् ।
पञ्चत्वक्पल्लवानि स्युः पूरयेत् तीर्थवारिणा ॥
तेनाभिषेकं कुर्वीत आपोहिष्ठादिभिः क्रमात् ।
हिरण्यवर्णेति ऋचा पवमानेन चैव हि ॥
ततः स्नात्वा शुची रोगी विष्णोर्वाहनमुत्तमम् ।
सदक्षिणं मुदा युक्तः प्राङ्मुखाय निवेदयेत् ॥
मन्त्रेणानेन विधिवदाचार्याय ह्युदङ्मुखः ।
श्रीकृष्ण परमानन्द जगतः परिपालक ॥
पूर्वजन्मनि यत् पापं भक्तचौर्यं मया कृतम् ।
तेनावाप्तं तु वैरूप्यं यन्मया ह्यतिदुःसहम् ॥
कामलोऽयमिमं देव तव वाहनदानतः ।
विनाशयाशु मे कृष्ण जगतां पालको ह्यसि ॥

दानमन्त्रः ।

एवं गरुडदानं तु कृत्वा मर्त्यः सुखी भवेत् ।
आचार्यं भोजयित्वा च प्रणिपत्य विसर्जयेत् ॥

इत्यपरगरुडदानविधिः ।

## अथ पद्मपुराणे ।

जन्मान्तराक्षिरोगेण जायते ह्यक्षिवेदना ।
वक्ष्यामि तत्प्रतीकारं ब्रह्मणा भाषितं पुरा ॥
पलेन कारयेद्धेम्ना गरुडं विष्णुवाहनम् ।
राजतौ च तथा पक्षौ रत्नैर्नद्धौ सुविस्तृतौ ॥
कर्त्तव्यं चाक्षियुगलं माणिक्याभ्यां प्रकल्पयेत् ।
पादयोः स्वर्णकटकं रत्नाभ्यां परिकल्पयेत् ॥
ग्रैवेयकं स्वर्णमयं ग्रीवायामपि विन्यसेत् ।
नासिकां वज्रवैदूर्यं मौक्तिकोपरि कल्पयेत् ॥
वस्त्रैर्नानाविधैर्नद्धमलङ्कृत्य शुभाकृतिम् ।
स्थापयेत् पुरतो विष्णोः प्रीत्यर्थं च खगाधिपम् ॥
गन्धपुष्पाक्षतैर्वस्त्रैः पूजयेद्ब्राह्मणोत्तमः ।
वेदवेदाङ्गकुशलो ब्रह्मविद्यासु निष्ठितः ॥
होमश्च तत्र कर्त्तव्यो मन्त्रैस्तद्वाचकैः शुभैः ।
यद्वा गरुडगायत्र्या समिदाज्यतिलादिभिः ॥
अग्नेः प्रतिष्ठा कार्या तु स्वगृह्योक्तविधानतः ।

गरुडगायत्री प्रथमं गरुडदाने दर्शिता ।

पुण्याहवाचनं कार्यं ब्राह्मणैर्वेदपारगैः ।
तस्मै हुतवते दद्याच्छौरिप्रीत्यर्थमादृतः ॥
भक्त्या संपूज्य विधिवत् केयूरकटकादिभिः ।
मन्त्रेणानेन विधिवत् प्राङ्मुखायाक्षिरोगवान् ॥

देवदेव जगन्नाथ लक्ष्मीप्रिय परात् पर ।
वाहनस्य प्रदानेन तुष्टः कर्मविपाकजम् ॥
अक्षिरोगं जगन्नाथ नारायण जगन्मय ।
पुष्पं वा पटलं वाऽपि वातरक्तमथापि वा ॥
रक्तं वाऽप्यथ नक्तान्ध्यं तथाऽन्यद्बुद्बुदादिकम् ।

दानमन्त्रः ।

ततो विसृज्य विप्रेन्द्र शिष्टैरिष्टैश्च बन्धुभिः ।
स्नात्वा विप्रान् भोजयित्वा सुखी भवति मानवः ॥

इति गरुडमूर्त्तिदानविधिः ।

## अथोमामहेशदानम् । आह बैाधायनः ।

ब्राह्मणाङ्गानि यो हिंस्याद्द्रुरोगी भवेत् तु सः ।
तस्योपशमनं वक्ष्ये सुवर्णेन तु कारयेत् ॥
तदर्धेन तदर्धेन तदर्धार्धेन वा पुनः ।
उमामहेश्वरं रूपं वृषभेण त्वधिष्ठितम् ॥
चतुर्भुजं तु द्विभुजामुमां कुर्याद्विचक्षणः ।
पञ्चवक्त्रो भवेच्छम्भुस्त्रिनेत्रश्च महाभुजः ॥
अक्षमालां त्रिशूलं च तस्य दक्षिणहस्तयोः ।
देवीपृष्ठगतश्चैको वरदश्चापरः करः ॥
वामोत्सङ्गगता देवी शिवपृष्ठैकपाणिका ।
वृषभो राजतश्चात्र कार्यो घण्टादिसंयुतः ॥
स्वशक्त्या वित्तशाठ्यं तु कुर्वतो निष्फलं भवेत् ।
तत्राप्यारोप्य देवेशमुमया सहितं प्रभुम् ॥
वस्त्रैर्माल्यैस्तथा गन्धैर्मूलमन्त्रेण पूजयेत् ।
ततो ब्राह्मणमाहूय दरिद्रं धर्मकोविदम् ॥

श्रुतवृत्तोपसम्पन्नं शान्तं चैवात्मवेदिनम् ।
वस्त्राङ्गुलीयकैस्तस्य पूजां भक्त्या प्रकल्पयेत् ॥
होमं च कारयेत् तेन समिदाज्यतिलैरपि ।
मन्त्रश्च रुद्रगायत्री सर्वत्रेति विनिश्चयः ॥

## रुद्रगायत्री तु लिङ्गपुराणे ।

सर्वेश्वराय विद्महे शूलहस्ताय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥

यद्वा तु त्र्यम्बकेनैव समिधो जुहुयात् सुधीः ।
कद्रुद्रायेति मन्त्रेण जुहुयादाज्यमादृतः ॥
तिलाँश्च मूलमन्त्रेण सर्वत्रैवं क्रमो भवेत् ।
तथा ब्रह्मोद्वासनान्ते मिथुनं ब्राह्मणाय तु ॥
वृषभोपरि तिष्ठन्तं भक्त्या तु विनिवेदयेत् ।
मन्त्रेणानेन विधिवद्दद्रुरोगी जितात्मवान् ॥
कैलाशवासी भगवान् उमया सहितः परः ।
भगनेत्रहरो दद्रुरोगमाशु व्यपोहतु ॥

दानमन्त्रः ।

ततश्च ब्राह्मणं सम्यक् प्रणिपत्य क्षमापयेत् ।
ब्राह्मणान् भोजयेच्चापि स्वयं भुञ्जीत वाग्यतः ॥
एवं दत्त्वा महादानं दद्रुरोगाद्विमुच्यते ।

इति उमामहेश्वरदानविधिः ।

## अथ रुद्रमूर्त्तिदानं वायुपुराणे ।

अन्नचौरो भवेद्यस्तु सोऽकस्माज्जायते कृशः ।
वक्ष्ये तस्य प्रतीकारं दानहोमाभिषेचनैः ॥
पलेन वा तदर्धेन तदर्धेनाथ वा पुनः ।
सुवर्णेन प्रतिकृतिं कुर्याद्रुद्रस्य भक्तितः ॥

यद्वा विभवसारेण त्रिनेत्रं चतुराननम् ।
चतुर्बाहुं ध्यानपरमुपविष्टं सुखासने ॥
व्याघ्रचर्मपरीधानं नागयज्ञोपवीतिनम् ।
श्वेतवस्त्रेण संवेष्ट्य तण्डुलोपरि विन्यसेत् ॥
तण्डुलानां परीमाणं द्रोणानां तु चतुष्टयम् ।
यद्वा स्वविभवेनैव तत्र पूजां प्रकल्पयेत् ॥
गन्धमाल्यैः सुरभिभिः श्वेतैर्नानाविधैरपि ।
उपचारैः षोडशभि ाचार्यः सर्वशास्त्रवित् ॥
मूलमन्त्रेण सर्वं च कार्यं पूजादिकं चरेत् ।
होमश्च तत्र कर्त्तव्यः स्थण्डिले सुपरिष्कृते ॥
मन्त्राध्यायोक्तमार्गेण चाग्नेः संस्थापनं भवेत् ।
समिदाज्यतिलैर्मन्त्रानिमाँस्तत्र प्रकल्पयेत् ॥
त्र्यम्बकं कद्रुद्राय वामदेव इति क्रमात् ।
सङ्ख्या चाष्टोत्तरशतं प्रत्येकमिह गृह्यते ॥
हुत्वा हुत्वा च सम्पातान् पात्रे कृत्वा विधानतः ।
अग्नेः पूर्वोत्तरे देशे स्थापयेत् सकलं दृढम् ॥
वाससा वेष्टयित्वा च पञ्चपल्लवसंयुतम् ।
अश्वस्थानाद् गजस्थानाद्वल्मीकात् सङ्गमाद्ध्रदात् ॥
प्रक्षेप्तव्या मृत्तिका च रोचना गुग्गुलुं तथा ।
तेनाभिषेकं कुर्वीत होमान्ते च गुरुः स्वयम् ॥
आपो हिष्ठादिभिस्तद्वद्धिरण्यादिभिरेव च ।
पवमानानुवाकेन शन्नो वाकेन चैव हि ॥
शरीराभ्यञ्जनं कार्यं सम्पातैक्येन सर्वशः ।
ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ॥

यजमानः शुचिर्भूत्वा देवेशं पूज्य भक्तितः ।
मूलमन्त्रेण च पुनस्तस्मै हुतवतेऽर्चिते ॥
दद्यात् तां देवदेवस्य प्रतिमां शङ्करस्य तु ।
मन्त्रेणानेन विधिवत् प्राङ्मुखाय ह्युदङ्मुखः ॥
देवदेव महेशान वृषभध्वज शङ्कर ।
अन्नचौर्येण यत् पापं कृतं जन्मान्तरे मया ॥
तेन यज्जनितं कार्श्यमसह्यं मम देहजम् ।
तव दानेन दत्तेन पीनोऽस्मि रक्ष पापिनम् ॥

दानमन्त्रः ।

एवं यो विधिनाऽनेन शङ्करप्रतिमां नरः ।
ददाति विप्रवर्याय स कार्श्याद्विप्रमुच्यते ॥
पुण्याहवाचनं कृत्वा ब्राह्मणानपि भोजयेत् ।

इति रुद्रमूर्त्तिदानविधिः ।

## अथ दक्षिणामूर्त्तिदानं वायुपुराणे ।

श्रूयतां परमं गुह्यं दानं सर्वोत्तमोत्तमम् ।
नमस्कृत्य प्रवक्ष्यामि देवदेवस्य शूलिनः ॥
सर्वेषामेव पापानां येन नाशः प्रजायते ।
पापानां निष्कृतिः प्रोक्ता मुनिभिः शास्त्रदर्शिभिः ॥
तपोहोमजपप्राया सा हि कार्या प्रयत्नतः ।
एतत् तु सर्वपापानां प्रायश्चित्तमनुत्तमम् ॥
महापातकदोषेषु पातके चोपपातके ।
अन्येषामपि दोषाणां निष्कृतिः परिवर्त्तते ॥
पलत्रयेण देवेश सुवर्णस्य प्रकल्पयेत् ।
ईशानं दक्षिणामूर्त्तिं सर्वज्ञं लोकसाक्षिणम् ॥

गोमयेनोपलिप्तायां भूमौ विन्यस्य पङ्कजम् ।
नानारजोभिस्तन्मध्ये पुण्डरीकं न्यसेत् ततः ॥
तत्कर्णिकायां देवेशमर्चयेद्धेमरूपिणम् ।
सर्वज्ञं सर्वगं शान्तं सर्वकारणकारणम् ॥
सर्वदेवनमस्कृत्यं सर्ववेदान्तवेदिनम् ।
सर्ववेदान्तवेद्यं च भक्तवत्सलमच्युतम् ॥
पापेन्धनमहावह्निं संसारार्णवतारणम् ।
करुणौघमहासिन्धुं चन्द्रमौलिं महेश्वरम् ॥
वरदानाभयकरं सर्वाङ्गं च महार्णवम् ।
एवं संचिन्त्य देवेशमर्चयेद्ब्रह्म पङ्कजैः ॥
श्वेतैर्विकसितैः पद्मैः सितचन्दनवारिणा ।
कर्पूरविद्धमगुरुं धूपार्थं च निवेदयेत् ॥
क्षौमे च वाससी दद्यात् पायसं च निवेदयेत् ।
प्रदक्षिणं ततः कृत्वा निवेद्य परमात्मने ॥
आत्मानमर्चयित्वा तु ततो विप्रं समर्चयेत् ।
वेदवेदाङ्गविदुषं शान्तं शिवपरायणम् ॥
ज्ञाननिर्दग्धकर्माणं नित्यनैमित्तिके रतम् ।
तमेव देवं सङ्कल्प्य पूजयित्वा विधानतः ॥
प्रणिपत्य तु तं देवं ततो मन्त्रमुदीरयेत् ।
भगवन् सर्वभूतज्ञ सर्वज्ञामृतशङ्कर ॥
त्वत्प्रसादेन मे शेषं पापं नश्यतु सर्वतः ।
यत् पापं वाङ्मनःकायसम्भवं मम शङ्कर ॥
तव रूपप्रदानान्मे विलयं यातु सर्वतः ।
अज्ञे पापे निराचारे त्वमेव शरणं गते ॥

मयि सर्वौघनाशेन दयां कुरु महेश्वर ।
इत्यामन्त्र्य ततो दद्याच्छिव: संप्रीयतामिति ॥
क्रियाकलापमखिलमात्मानं मलसञ्चयम् ।
सर्वं निवेदयेत् तस्मै विश्वरूपाय शम्भवे ॥
अनेन विधिना यस्तु प्रदद्यात् सर्वनिष्कृतिम् ।
तस्य सर्वाणि पापानि विनश्यन्ति न संशयः ॥
यथा नश्यति सूर्यस्य सन्निधौ सकलं तमः ।
तथा शिवप्रदानेन सर्वं पापं विनश्यतु ॥
यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुते क्षणात् ।
तथाऽयं भगवान् शम्भुः शरणागतदुष्कृतम् ॥
सर्वधर्मविहीनस्य सर्वपापैः प्रमुच्यते ।
अपि चेत् स्यात् स सर्वेभ्यः पापेभ्यः कृतमानसः ॥
सर्वं शिवप्लवेनैव वृजिनं संतरिष्यति ।
तस्माद्यः सर्वमुत्सृज्य शरणं याति शङ्करम् ॥
भक्त्या परमया तस्य न भयं विद्यते क चित् ।
जीवतो हि भवेत् पापमवश्यं मानुषात्मनः ॥
तस्य पापस्य वै नास्ति प्रायश्चित्तं विना क्षयः ।
तस्मात् कुर्यात् प्रयत्नेन निष्कृतिं प्रतिवत्सरम् ॥
अनित्यं जीवितं यस्मात् सम्पदारोग्यमेव च ।
नरकोत्तारणं कार्यं तस्मादात्महितेच्छया ॥

इति दक्षिणामूर्त्तिदानविधिः ।

## अथ परशुदानं वायुपुराणे । ऋषय ऊचुः ।

समीरण नमस्तुभ्यं यत् प्रोक्तं भवता व्रतात् ।
प्रायश्चित्तमशेषेण तदस्माभिर्दृढीकृतम् ॥

वक्तुमर्हसि भूयो नः प्रसादसुमुख प्रभो ।
यत् तु मानसिकं पापं बुद्धिपूर्वं सुरोत्तम ॥
वक्तुमर्हसि दानेन तस्य पापक्षयो भवेत् ।

वायुरुवाच ।

मनसो दुर्विचारत्वाद्बहुत्वाच्च तपोधनाः ।
अवश्यमेव भवति महतामपि निश्चयः ॥
विना दानेन भूयोऽपि नरकाय प्रवर्त्तते ।
तस्मात् तस्य क्षयोपायं दानं वक्ष्यामि साम्प्रतम् ॥
उपपातकसंयुक्तं येन पापं विनश्यति ।
अष्टम्यां कृष्णपक्षस्य पूर्वाह्णे शालितण्डुलैः ॥
भारत्रयेण कुर्वीत रूपं वस्त्रेण शूलिनः ।
चतुर्बाहुं त्रिनेत्रं च सुखासीनं सरोरुहे ॥
तस्य दक्षिणहस्ते तु सुवर्णपलनिर्मितम् ।
परशुं कल्पयित्वा च ततः सम्प्रति पूजयेत् ॥
सर्वं परशुहस्ताय मन्त्रेणाराधनं भवेत् ।
विल्वपत्रैः कुशैश्चापि पूजयेत् परमेश्वरम् ॥
परशुं च पृथक् पुष्पैरक्तैरभ्यर्च्य शान्तधीः ।
पृथक्त्वं शिवभक्तं च ब्राह्मणं वेदपारगम् ॥
अर्चयित्वा यथा पूर्वं ततो मन्त्रमुदीरयेत् ।
नीललोहित देवेश सर्वपापभयापह ॥
परशुव्यग्रहस्तस्त्वं तवाहं शरणं गतः ।
यन्मया मनसा पापं कृतमाजन्मनः प्रभो ॥
तत् सर्वं क्षपयाशेष विभो परशुदानतः ।
अनेन सर्वपापानि मानसानि विनाशय ॥

मयि दीने दयां देव दर्शयाद्य प्रसादतः ।
इत्युक्त्वा तं द्विजेन्द्राय परशुं तण्डुलादिकम् ॥
त्रिवेदवेदकलशं भूमिदेवं द्विजोत्तमम् ।
इत्युक्तं परशोर्दानं मानसाघविनाशनम् ॥
यद्यत् करोति मनसा पापमाजन्मनः पुरा ।
निष्कृतिस्तस्य पापस्य दानमेतत् प्रयत्नतः ॥
मासि मासि ततो देयं दानमेतत् तपोधनाः ।
वत्सरे वत्सरे वाऽपि सर्वदोषापनुत्तये ॥

इति परशुदानविधिः ।

अथ शूलदानं वायुपुराणे । ऋषय ऊचुः ।

समीरण जगत्प्राण पवमानक्रियाविभो ।
वक्तुमर्हसि नो दानं येन पापं व्यपोहति ॥
कर्मणा मनसा वाचा यदबुद्धिकृतं भवेत् ।
पापं तस्य क्षयोपायं वक्तुमर्हसि नः प्रभो ॥
यस्माद्भोगादृते नास्ति क्षयः पापस्य कर्मणः ।
करदण्डेन वा चाऽथ प्रायश्चित्तेन वा पुनः ॥
राजदण्डः प्रकाशस्य पापस्य कथितः पुरा ।
अबुद्धिपूर्वं यत् पापमज्ञानाच्च महीपते ॥
निष्कृतिर्न कृता यस्य तस्य वैवस्वतः प्रभुः ।
तस्मात् तस्य क्षयोपायो वक्तव्यश्चरतां वर ॥

वायुरुवाच ।

अहं वः कथयिष्यामि शृणुध्वं मुनिसत्तमाः ।
या निष्कृतिस्तु पापानां कृतानां प्रज्ञया विना ॥
यत् पाशुपतमाख्यातमस्त्रं देवस्य शूलिनः ।

तस्य प्रदानात् सकलं तत् पापं सुप्रणश्यति ॥
कृष्णपक्षे चतुर्दश्यामष्टम्यां वा सितेतरे ।
कुर्याद्द्वादशनिष्केण त्रिशूलं लक्षणान्वितम् ॥
युगान्तकरणं घोरमघविध्वंसनक्षमम् ।
नानारजोविरचिते चक्रे षडारभूषिते ॥
नाभौ निधाय संपूर्णं तिलानां ताम्रनिर्मितम् ।
पात्रमाढकसंमानं तत्र शूलं न्यसेत् पुमः ॥
कुर्यात् तेनैव मन्त्रेण तस्य पूजामनुक्रमात् ।
विरूपाक्षं च तत्पार्श्वे कमलोपरि पूजयेत् ॥
अघोरेभ्योऽपि मन्त्रेण पूजान्ते प्रणिपत्य च ।

## अघोरमन्त्रस्तु लिङ्गपुराणे ।

ॐ अघोरेभ्यो घोरेभ्यो घोरघोरतरेभ्यश्च सर्वतः सर्वेयो नमस्तेऽस्तु रुद्ररूपेभ्यः—इति ।

विप्रं च ज्ञानिनं तद्वत् संपूज्य मुनिपुङ्गवाः ।
प्रदक्षिणं ततो गत्वा इमं मन्त्रमुदीरयेत् ॥
भगवन् भगनेत्रघ्न दक्षयज्ञविमर्दन ।
तवायुधप्रदानान्मे पापं नश्यतु शङ्कर ॥
युगान्ते येन लोकानां त्वमन्तकविनाशनम् ।
विदग्धं तन्मयाऽप्येतत् तेन पापं प्रणाशय ॥
येन दग्धं क्षणार्धेन त्रिपुरं सुरदुर्जयम् ।
तेन पाशुपतेनाशु मम पापं प्रणाशय ॥
यदबुद्धिकृतं पापं मम चाज्ञस्य मानसम् ।
तत् सर्वं क्षयमभ्येतु तव शूलप्रदानतः ॥
इत्यामन्त्र्य ततो दद्याच्छूलं तस्मै द्विजातये ।

यदात्मनः कृतं पापमज्ञानाद्यत् पुरा भवेत् ॥
निष्कृतिस्तस्य शर्वस्य शूलदानमिदं मतम् ।
अवश्यं कुरुते पापमज्ञानान्मानवो यतः ॥
वर्षे वर्षे ततो दद्यात् तस्य तस्यापनुत्तये ।

इति शूलदानविधिः ।

आह बौधायनः ।

अतः परं विपाकोत्थसर्वशूलविनाशनम् ।
दानं यद्ब्रह्मणा प्रोक्तं तत् सम्यक् कथयाम्यहम् ॥
सौवर्णं राजतं वाऽपि शूलं कुर्यात् प्रयत्नतः ।
यथावित्तानुसारेण पलार्धेनाथ वा पुनः ॥
ताम्रेणाथायसा वाऽपि खदिरेणाथ वा पुनः ।
महादेवप्रहरणं यथा तद्वत् प्रकल्पयेत् ॥
रक्तवस्त्रेण संवेष्ट्य रक्तचन्दनचर्चितम् ।
रक्तमाल्येन संवेष्ट्य तिलानामुपरि न्यसेत् ॥
तिलानां तु परीमाणं द्रोणं वाऽथ तदर्धकम् ।
तदर्धं वा यथाशक्त्या पूजयेद्ब्राह्मणः शुचिः ॥
अर्घ्यादि मूलमन्त्रेण षोडशैवोपचारकान् ।
क्रियाविद्ब्राह्मणं पूज्य कर्त्ता होमं प्रकल्पयेत् ॥
शूलस्य दक्षिणे पार्श्वे दक्षिणाग्निः* प्रणीयते ।
समिदाज्यतिलान् हुत्वा पुरुषस्येति वै समित् ॥
त्र्यम्बकेन च मन्त्रेण आज्यहोमं प्रकल्पयेत् ।
यत इन्द्रेण च तिलान् शन्नः शान्तिं प्रकल्पयेत् ॥
तेनोदकेन वा सिञ्चेच्छूलिनं रोगिणं नरम् ।

* स्थण्डिलेऽग्निरिति क्वचित् पाठः ।

ततो हुतवते शूलं संपूज्य च स्वशक्तितः ॥
दद्यात् सदक्षिणं तं तु प्राङ्मुखाय ह्युदङ्मुखः ।
मन्त्रेणानेन परया भक्त्या सर्वं परं स्मरन् ॥
त्वं शूल ब्रह्मणा सृष्टं त्वं पुराणं विनाशकम् ।
दैत्यानां दानवानां च शङ्करस्यायुधं सदा ॥
कुक्षिस्थमथ पार्श्वस्थमथ वा पृष्ठसङ्गतम् ।
शूलं विनाशय त्वं मे महादेवेन धारितम् ॥
ततः स्नात्वा च भुञ्जीत ब्राह्मणैर्बन्धुभिः सह ।
शूलहिंसासमुत्पन्नां वेदनामाशु नाशयेत् ॥

इत्यपरशूलदानविधिः ।

अथ सूर्यमूर्त्तिदानम् । आह वृद्धगौतमः ।

विभ्रामयति यो मूढानौषधादिप्रयोगतः ।
भ्रामणं जायते तस्य देहिनोऽतीव दुःसहम् ॥
वक्ष्यामि तत्प्रतीकारं दानहोमादिकर्मणा ।
व्यावहारिकनिष्कैस्तु त्रिभिर्द्वाभ्यामथापि वा ॥
एकेन वा स्वशक्त्या च सूर्यप्रतिकृतिं शुभाम् ।
कुर्याद्द्विहस्तामूर्ध्वं तु पद्मद्वयसुभूषिताम् ॥
रथोपरि स्थितां रक्तवाससा समलङ्कृताम् ।
कुङ्कुमेनाङ्कितां सम्यग्रत्नमाल्यैरलङ्कृताम् ॥
स्नापितां पञ्चगव्येन ताम्रपात्रोपरि न्यसेत् ।
पात्रस्य च परीमाणं तिलानामष्टकं विदुः ॥
तदर्धं वा तदर्धं वा यथाविभवतो भवेत् ।
पात्रं तिलानामुपरि विन्यसेद्दर्भसंस्तृते ॥
एवम्भूतां तु तां मूर्त्तिमाचार्यः पूजयेत् सुधीः ।

गन्धमाल्यैः सुरभिभिर्हंसः शुचिः षडित्यृचा ॥
उपचारैः षोडशभिर्नैवेद्यं पायसं क्षिपेत् ।
आग्नेय्यां दिशि होमश्च कर्त्तव्यः शुभमीप्सुभिः ॥
समिदाज्यतिलैश्चैव मन्त्रैरेभिर्यथाक्रमम् ।
चित्रं देवानां तच्चक्षुरुदुत्यं जातवेदसम् ॥
यदस्य कर्मणश्चेति स्विष्टकृद्धोम इष्यते ।
अग्नेरुत्तरतो भागे कलशस्थापनं भवेत् ॥
अभिषेकादिकं सर्वं शान्तिकर्मपुरःसरम् ।
सुखासनोपविष्टस्य कर्त्तव्यं ब्राह्मणैः शुभैः ॥
प्रणीतामोक्षपर्यन्तं ब्रह्मोद्वासनमेव च ।
ततः स्नातः शुचिर्हृष्टः शुक्लगन्धानुलेपनः ॥
शुक्लमाल्यैः शोभितश्च आचार्याय ह्युदङ्मुखः ।
प्राङ्मुखायोपविष्टाय दद्यात् प्रतिकृतिं शुभाम् ॥
सहस्रकिरणो देवः खगः पूषा गभस्तिमान् ।
सर्वदेवमयो ब्रह्म जगच्चक्षुस्त्रयीतनुः ॥
औषधादिप्रयोगेण पुरा यद्भ्रामणं कृतम् ।
विप्राणां पादमभ्यर्च्य यद्भूतं भ्रमणं मम ॥
प्रतिमायाः प्रदानेन तुष्टो देवो बृहस्पतिः ।
भ्रमणं देहगं सर्वं वासुदेवो व्यपोहतु ॥

दानमन्त्रः ।

एवं दत्त्वा तु तद्दानमाचार्यायातिभक्तितः ।
आसीमान्ता*दनुव्रज्य प्रणिपत्य क्षमापयेत् ॥

---

* आग्रमन्ता-इति न० प्र० पु० पा० ।

अन्येभ्योऽपि ब्राह्मणेभ्यो दद्याच्छक्त्या च दक्षिणाम् ।
एवं दानं पुरा प्रोक्तं दत्त्वा मर्त्योऽतिभक्तितः ॥
पूर्वकर्मविपाकोत्थं भ्रमं त्यक्त्वा सुखी भवेत् ।

इति सूर्यमूर्त्तिदानविधिः ।

तथा ।

ब्राह्मणं घातयेद्यस्तु स कुष्ठी जायते नरः ।
वक्ष्यामि तत्प्रतीकारं सूर्यदानं विधानतः ॥
पलेन वा तदर्धेन तदर्धार्धेन वा पुनः ।
सूर्यप्रतिकृतिं कुर्यात् कदलीं चैव सन्निधौ ॥
कुष्ठोपहतदेहानां शान्त्यर्थं कारयेच्छुभाम् ।
सुवर्णेन पलार्धेन पत्रपुष्पैरलङ्कृताम् ॥
सूर्यस्तु द्विभुजः कार्यो राजते च रथे स्थितः ।
रक्तवस्त्रेण संवेष्ट्य कुङ्कुमेनानुलेपयेत् ॥
रम्भां तु श्वेतवस्त्रेण श्वेतपुष्पैश्च चन्दनैः ।
तण्डुलोपरि संस्थाप्य नानाफलसमन्विताम् ॥
तण्डुलानां परीमाणं द्रोणमात्रं प्रकीर्त्तितम् ।
श्रुताध्ययनसम्पन्नं ब्राह्मणं शान्तमानसम् ॥
सर्वविद्यासु कुशलं दरिद्रं चाग्निहोत्रिणम् ।
गृहमाहूय भक्त्या तं पूजयेद्वस्त्रमाल्यकैः ॥
ततो होमं प्रकुर्वीत समिदाज्यतिलाक्षतैः ।
लाजाश्च मधुना मिश्रा हुत्वा चाष्टोत्तरं शतम् ॥
मन्त्रेण चैव गायत्र्या दुर्गाग्रहाधिदेवताः ।
जुहुयाच्च ततो भक्त्या समिदाज्यचरूनपि ॥
तथैव ह्याज्यसंपत्ते रक्षिता इत्यनेन तु ।

समञ्जनं प्रकुर्वीत यथा लिङ्गं शरीरके ॥
शन्नो देव्यनुवाकेन शान्तिं कुर्याद्विशेषतः ॥
तस्मै हुतवते रोगी दद्याद्भक्तिपुरःसरम् ।
मन्त्रेणानेन विधिवत् प्राङ्मुखाय ह्युदङ्मुखः ॥
आदित्य सूर्य द्युमणे सर्वरोगविनाशक ।
सहस्रकिरणाम्भोजबन्धो तिमिरनाशन ॥
द्वादशात्मँस्त्रयीदेह जगच्चक्षुर्दिवाकर ।
पूर्वकर्मविपाकोत्थं कुष्ठमाशु विनाशय ॥

इति सूर्यप्रतिकृतिदानमन्त्रः ।

कदलि सर्वदेवानां मातॄणां सर्वशर्मदे ।
लक्ष्म्या शच्या च पार्वत्या देवकन्याभिरेव च ॥
सावित्र्या रम्भया चैव कार्यार्थं पूजिता पुरा ।
अङ्गप्रत्यङ्गजं सर्वं कुष्ठजातमपानुद ॥

कदलीदानमन्त्रः ।

ततः स्नात्वा च भुञ्जीत ब्राह्मणैर्बन्धुभिः सह ।

इत्यपरसूर्यमूर्त्तिदानविधिः ।

## अथ वह्निमूर्त्तिदानम् । तत्र बौधायनः ।

सुवर्णेनाथ ताम्रेण कुर्यात् प्रतिकृतिं बुधः ।
वह्नेर्विभवसारेण पलेनार्धेन वा पुनः ॥

वह्निलक्षणं तु लोकपालप्रसङ्गेन ब्रह्माण्डदाने दर्शितम् ।

तथा ज्वालाकुलां रक्तचन्दनेन विलेपिताम् ।
रक्तवस्त्रेण संवीतां मेषस्योपरि संस्थिताम् ॥
रक्तमाल्यैस्तु सञ्छन्नां मुक्तादामपरिष्कृताम् ।
कनकाचलवर्णाभां द्वादशार्कनिभां शुभाम् ॥

ब्रह्मचर्यान्विते विप्रे कर्मनिष्ठेऽग्निहोत्रिणि ।
अङ्गुलीयकवस्त्राद्यैर्भूषिते तां निवेदयेत् ॥
मन्त्रेणानेन विधिवदग्निप्रीत्यर्थमाहृतः ।
त्रेतारूपोऽग्निरीड्यस्त्वमन्तश्चरसि वै नृणाम् ॥
त्वं वेत्थ प्राक्तनं पापमतीसारं विनाशय ।
एवं कृत्वा नरः सम्यगतीसारं व्यपोहति ॥
नीरुजः सुसुखी नित्यं दीर्घमायुश्च विन्दति ।

इत्यग्निमूर्त्तिदानविधिः ।

## अथ कालपुरुषदानम् ।

## भविष्योत्तरे । युधिष्ठिर उवाच ।

दानान्यन्यानि मे कृष्ण कथयस्व यदूत्तम ।
मङ्गल्यानि पवित्राणि सर्वपापहराणि च ॥
संसारसागरोत्तारहेतुभूतानि माधव ।
धर्माधर्मपरिज्ञाने त्वदन्यो नेह कश्चन ॥

## श्रीकृष्ण उवाच ।

दानानि वहुरूपाणि कथितानि मया तव ।
पुनरेव प्रवक्ष्यामि यद्यस्ति तव कौतुकम् ॥
कथितानि मया तुभ्यं कथयिष्याम्यहं तव ।
महताऽर्थेन सिद्ध्यन्ति प्रयच्छन्ति महत् फलम् ॥
काम्यो दानविधिः पार्थ क्रियमाणो यथातथम् ।
फलाय मुनिभिः प्रोक्तो विपरीतो भयाय च ॥
ज्ञेयं निष्कशतं पार्थ दानेषु विधिरुत्तमः ।
मध्यमस्तु तदर्धेन तदर्धेनाधमः स्मृतः* ॥

---

* तदर्धे वाऽवरः स्मृत इति पुस्तकान्तरे ।

मेष्यां च कालपुरुषे तथाऽन्येषु महत्सु च ।
एवं वृक्षे रथेऽण्डे च धेनोः कृष्णाजिनस्य च ॥
अशक्तस्यापि क्लृप्तोऽयं पञ्चसौवर्णिको विधिः ।
अतोऽप्यल्पेन यो दद्यात् महादानं नराधिप ॥
प्रतिगृह्णाति वा तस्य दुःखशोकावहं भवेत् ।
पुण्यं दिनमथासाद्य भूमिभागे समे शुभे ॥
चतुर्दश्यां चतुर्थ्यां वा विष्ट्यां वा पाण्डुनन्दन ।

'विष्टि'र्भद्राकरणम् ।

पुमान् कृष्णतिलैः कार्यो रौप्यदन्तः सुवर्णदृक् ।

सुवर्णादिपरीमाणमत्र यथाशक्ति सम्पादनीयम् ।

खड्गोद्यतकरो दीर्घो जवाकुसुमकुण्डलः ।
रक्ताम्बरधरः स्रग्वी शङ्खमालाविभूषितः ॥
तीक्ष्णासिपुत्रीबन्धेन विस्फुरद्वारिकटीतटः* ।

'असिपुत्री,' छूरिका ।

उपानद्युगयुक्ताङ्घ्रिः कृष्णकम्बलशर्वगः ।
गृहीतमांसपिण्डश्च वामे करतले तथा ॥
एवंविधं पुमान् कृत्वा गृहीतकुसुमाञ्जलिः ।
यजमानः प्रसन्नात्मा इमं मन्त्रमुदीरयेत् ॥
सम्पूज्य गन्धकुसुमैर्नैवेद्यं विनिवेद्य च ।
सर्वं कलयसे यस्मात् कालस्त्वं तेन चोच्यसे ॥
ब्रह्मविष्णुशिवादीनां त्वमसाध्योऽसि सुव्रत ।
पूजितस्त्वं मया भक्त्या पार्थिवश्च तथा सुखम् ॥
यद्बुध्यते तव विभो तत् कुरुष्व नमो नमः ।

---

* विस्फूरितकटोतट इति पाठः पुस्तकान्तरे ।

एवं संपूजयित्वा तं ब्राह्मणाय निवेदयेत् ॥
ब्राह्मणं प्रथमं पूज्य वासोभिर्भूषणैस्तथा ।
दक्षिणां शक्तितो दद्यात् प्रणिपत्य विसर्जयेत् ॥

दक्षिणां पूर्वोक्तां निष्कशतादिकाम् ।

अनेन विधिना यस्तु दानमेतत् प्रयच्छति ।
न च मृत्युभयं तस्य न च व्याधिकृतं भवेत् ॥
भवत्यव्याहतैश्वर्यः सर्वबाधाविवर्जितः ।
देहान्ते सूर्यभवनं भित्वा याति परं पदम् ॥
पुण्यक्षयादिहागत्य राजा भवति धार्मिकः ।
सत्रयाजी श्रिया युक्तः पुत्रपौत्रसमन्वितः ॥
संपूज्य कालपुरुषं विधिवद्द्विजाय
दत्त्वा शुभाशुभफलोदयहेतुभूतम् ।
रोगातुरे सकलदोषमयेऽत्र देहे
देही न मोहमुपगच्छति तत्प्रभावात् ॥

इति कालपुरुषदानविधिः ।

## अथ कालचक्रदानम् । मृत्युञ्जये ।

चक्रं रौप्यमयं कृत्वा मुक्तारश्मिमयात्मकम् ।
कृत्वा मूर्ध्नि शरच्चन्द्रं रश्मिमध्यान्तरस्थितम् ॥
त्वग्मांसानि तु रौप्याणि गात्रेषु च समन्ततः ।
एवं ध्यानवतस्तस्य स चन्द्रः कृष्णतां व्रजेत् ॥
ततोऽप्यनन्तरं पश्चात् स्थित्वा विप्रः प्रदक्षिणम् ।
तं गृहीत्वा व्रजेद्दूरमदृष्टत्वमपि व्रजेत् ॥
स्वयं चामृतसंघातपूर्णकायस्थितिस्थितः ।
कालचक्रमिदं नाम्ना दानं मृत्युविनाशनम् ॥

इमं ते राजतं चान्द्रं रश्मिजालसमाकुलम् ।
अपमृत्युविनाशाय ददामीति समुच्चरन् ॥
सुवर्णं दक्षिणायुक्तं ब्राह्मणाय निवेदयेत् ।
एवं कृते विनश्येत अपमृत्युर्न संशयः ॥
ततस्तस्मात् सदा देयमपमृत्युभयान्वितैः ।
ज्वरादिरोगग्रस्तैर्वा महापत्पतितैरपि ॥
ततो गृह्योक्तविधिना स्थापयेज्जातवेदसम् ।
जुहुयात् कालनाम्ना तु शतमष्टोत्तरं तिलैः ॥
ततस्तु भोजयेद्भक्त्या विप्रान् द्वादशसङ्ख्यया ।
स्वयमक्षारलवणं भुञ्जीत सकृदेवहि ॥
एवं कृते नरो नूनं चिरं जीवेन्न संशयः ।

इति कालचक्रदानविधिः ।

## अथ यमदानम् । मृत्युञ्जये ।

लोहपात्रस्थितं कांस्यं तत्र पद्मं तु राजतम् ।
तस्मिन् कालेश्वरः स्वर्णैः पुरुषाकारतां गतः ॥

यमरूपमुक्तं ब्रह्माण्डदाने ।

वस्त्रालङ्कारसंयुक्तो भयदास्त्राणि सर्वतः ।
त्रिलोहाकारपुरुषैः कालदूतैश्च पार्श्वतः ॥

'भयदास्त्राणि' खड्गच्छुरिकादीनि । 'त्रिलोहं' ताम्रकांस्यपित्तलाख्यम् । 'कालदूताः' पुरुषाकृतयो दण्डहस्तास्त्रयः ।

कृत्वा च महिषं पृष्ठे तं दद्याद्यममालपन् ।
अष्टम्यां च चतुर्दश्यां करोति विधिना तु यः ॥
स मुच्यते ध्रुवं नाशाद्दत्वा घृतघटोत्तरम् ।

'यममालपन्निति' महिषपृष्ठस्थितलोहपात्रोपरिस्थितकांस्यपात्रनिविष्टपद्मा-

रुद्रं यमं ददामीत्युच्चारयन्नित्यर्थः । घृतघट उत्तरे दक्षिणास्थाने यस्येति दानविवेककारः । अपरे तु सुवर्णदक्षिणेति ।

इति यमदानविधिः ।

## अथोदकुम्भदानम् ।

शौनकीये । मार्कण्डेय उवाच ।

भगवन् केन दानेन तपसा केन कर्मणा ।
अप्राप्य नरकं घोरं स्वर्गं प्राप्नोति मानवः ॥
नरकेषु विपच्यन्ते जन्तवः सततं मुने ।
अल्पायासेन देवर्षे परिहारोऽस्ति चेद्वद ॥

सूत उवाच ।

एवमुक्तोऽथ भगवान् मार्कण्डेयेन धीमता ।
उवाच नारदो दानमल्पवित्तं महाफलम् ॥
मार्कण्डेय शृणुष्वेदं ब्रह्मविष्ण्वोः पुराऽनघ ।
यदाह भगवाञ्छम्भुर्द्वयोः पृष्टस्तयोस्तथा ॥
श्रूयतामुदकुम्भाख्यं दानं वक्ष्यामि सुव्रतौ ।
यत् कृत्वा पुरुषः स्त्री वा न याति नरकं क्वचित् ॥
स्वर्ग्यं यशस्यमायुष्यमारोग्यं पापनाशनम् ।
मम प्रीतिकरं पुण्यं युवयोश्च प्रियं तथा ॥
वैशाख्यां पौर्णमास्यां च कार्त्तिक्यामथ तद्दिने ।
स्वजन्मदिवसे कार्यं दुःस्वप्नाद्भुतदर्शने ॥
भूमौ गोमयलिप्तायामुदकुम्भं न्यसेद्बुधः ।
पुष्पैः फलैश्च संवेष्ट्य वस्त्रेण सितरूपिणम् ॥
विधानेन तिलैर्मिश्रं गुडं तत्रैव निक्षिपेत् ।
धर्मराजं न्यसेद्देवं सौवर्णं शक्तितः कृतम् ॥

सुमुखं द्विभुजं देवमासीनं दण्डहस्तकम् ।
वरदं कृपया युक्तं भक्तानां हितकारिणम् ॥
एवं सप्तघटान् कृत्वा गन्धादिभिरथार्चयेत् ।
विप्रेभ्यो दापयेत् कुम्भानेभिर्मन्त्रैर्यथाक्रमम् ॥
यमाय धर्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्वभूतक्षयाय च ॥
एवमाराध्य तान् कुम्भान् दद्यादुदकपूर्वकम् ।
प्रीयतां भगवानेव मन्त्रान्ते समुदाहरेत् ॥
एवं कुम्भप्रदानेन देवदेवः स तुष्यति ।
कर्त्ता कारयिता स्वर्गं प्राप्नोतीति न संशयः ॥
न याति नरकं घोरं न प्राप्नोत्यशुभं क्वचित् ।
यमस्वरूपी भगवान् प्रीतो भवति तस्य वै ॥
यः कुम्भदानं विप्रेभ्यो ददाति च यथाविधि ।

इत्युदकुम्भदानविधिः ।

## अथ मकरदानम् । तत्र बौधायनः ।

कुर्यात् तु मकरं सम्यग्राजतं ताम्रमेव च ।
पलत्रयेण द्वाभ्यां वा यद्वकेन शुभाकृतिम् ॥
पुच्छे रत्नानि देयानि कटिं रूप्येण कारयेत् ।
नेत्रे स्वर्णमये कार्ये जिह्वा कार्या प्रकल्पयेत् ॥
पादयोः प्रक्षिपेत् तत्र घृतपात्रे पुरो द्वयोः ।
कृष्णवस्त्रेण संवेष्ट्य चन्दनागुरुचर्चितम् ॥
ताम्रेऽथ जलपात्रेऽथ स्थापयेन्मकरं शुभम् ।
ब्राह्मणं वृत्तसम्पन्नं वृद्धं दान्तमलोलुपम् ॥
वस्त्रैः कटककेयूरैः पूजयेदङ्गुलीयकैः ।

होमो वारुणदैवत्यैर्मन्त्राध्यायोक्तमार्गतः ॥
ततस्त्वौदरिके विप्रे मकरं तं निवेदयेत् ।
जलाधिदेव देवेश पश्चिमाशापते विभो ॥
उदरव्याधिनाशं मे कुरु दानेन तोषितः ।

इति मकरदानविधिः ।

## अथ धनदमूर्त्तिदानं वायुपुराणे ।

दरिद्रो जायते मर्त्यो दानविघ्नं करोति यः ।
ऐश्वर्यं जायते येन कर्मणा तच्छृणुष्व मे ॥
पलार्धेन तदर्धेन तदर्धेनाथ वा पुनः ।
धनदस्य प्रतिकृतिं कुर्यात् स्वर्णमयीं शुभाम् ॥
द्विभुजां वाहनोपेतां नयनानन्दकारिणीम् ।

धनदलक्षणं धान्यपर्वतदाने द्रष्टव्यम् ।

शङ्खपद्मनिधिभ्यां च युक्तां तां पार्श्वयोर्द्वयोः ।
श्वेतवस्त्रेण संवेष्ट्य तण्डुलोपरि विन्यसेत् ॥
तण्डुलानां परीमाणं भवेद्द्रोणचतुष्टयम् ।
तदर्धं वा तदर्धं वा वित्तशाठ्यं न कारयेत् ॥
श्वेतमाल्यैस्तथा गन्धैरनुलिप्य प्रपूजयेत् ।
आग्नेय्यां दिशि होमश्च समिदाज्यतिलैर्भवेत् ॥
मन्त्रो राजाधिराजायेत्येष योज्यः सलिङ्गकैः ।
व्याहृत्या तिलहोमश्च कर्त्तव्यो धनकाङ्क्षिभिः ॥
आचार्यः सर्वशास्त्रज्ञो विनीतः सर्वसम्मतः ।
महाकुलप्रसूतश्च धर्मज्ञः सत्यवाक् शुचिः ॥
कारयेदर्चनं तेन धनदस्यातिभक्तितः ।
तद्दैवत्येन मन्त्रेण स च कामीश्वरो भवेत् ॥

तस्मै होमं कृतवते प्रदद्यात् प्रतिमां तु ताम् ।
मन्त्रेणानेन विधिवत् प्राङ्मुखाय ह्युदङ्मुखः ॥
उत्तराशापते देव कुवेर नरवाहन ।
पद्मशङ्खनिधीनां त्वं पतिः श्रीकण्ठवल्लभः ॥
दानाद्येन यथा प्राप्तं दारिद्र्यं मम दुःखदम् ।
तत् सर्वमात्मदानेन पापमाशु विनाशय ॥

दानमन्त्रः ।

एवं कुवेरदानं यः करोति विधिपूर्वकम् ।
धनदेन समो मर्त्यस्तत्क्षणादेव जायते ॥

इति धनदमूर्त्तिदानविधिः ।

## अथ नागदानम् । तत्र वृद्धबौधायनः ।

सर्पैस्तु यः खादयति स विसर्पो भवेन्नरः ।
दानेनोपशमः कार्यो होमेन च विशेषतः ॥
पलेन वा तदर्धेन तदर्धेनाथ वा पुनः ।
कुर्यान्नागं सुवर्णेन फणापञ्चकसंयुतम् ॥
माणिक्यानि च देयानि प्रत्येकं फणपञ्चके ।
रत्नं पुच्छे तथा देयं वज्रे लोचनयोस्तथा ॥
एवं कृत्वा शुभं नागं कुङ्कुमेन तु लेपयेत् ।
रक्तवस्त्रेण संवेष्ट्य ताम्रपात्रोपरि न्यसेत् ॥
पात्रस्य च परीमाणं पलानामष्टकं विदुः ।
उपचारैः षोडशभिरर्चयेन्नागमुत्तमम् ॥
आचार्यः सर्वशास्त्रज्ञो धर्मशास्त्रपरायणः ।
होमं चापि प्रकुर्वीत समिदाज्यतिलैः शुभैः ॥
नमोऽस्तु सर्पेभ्य इति त्रिभिर्मन्त्रैर्यथाक्रमम् ।

अष्टोत्तरसहस्रं तु अष्टोत्तरशतं तु वा ॥
अष्टाविंशतिरेवाथ परिमाणं पृथग्भवेत् ।
हुत्वा चाहुतिसंपातैः पात्रे चैकीकृते स्वयम् ॥
श्रावयोगानि (?) चाभ्यज्य रोगिणं तु विसर्पिणम् ।
ऋग्भिस्तु सर्पराज्ञीभिर्भूमिर्भूम्नादिभिः क्रमात् ॥
स्वस्थो यथाऽसौ भवति गात्राणामप्यरोगतः ।
गुग्गुलुं च सुगन्धिं च पत्रिदारु च निक्षिपेत् ॥
प्रकल्प्य कलशं कुर्यादभिषेकं जलैः शुभैः ।
ॐ नमः सर्पेभ्य इति चार्थैस्तल्लिङ्गकैरपि ॥
हिरण्यवर्णाः शुचयः पवमानोऽनुवाकतः ।
आपो हिष्ठामय इति शन्नो वात इतीरयेत् ॥
उत्सादिताङ्गरुचिरं लिम्पेदगुरुचन्दनैः ।
ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ॥
ततः समर्चयेद्यत्नाद्गन्धपुष्पाक्षतादिभिः ।
सर्पदैवत्यमन्त्रेण आचार्योऽपि समर्चयेत् ॥
अनन्तं सर्पराजं तमाचार्याय निवेदयेत् ।
यो धत्ते पृथिवीं कृत्स्नां सशैलवनकाननाम् ॥
क्षीराब्धौ यस्य शय्या च वासुदेवस्य शार्ङ्गिणः ।
स्वीयदानेन नागोऽसौ तुष्टो व्याधिमपोहतु ॥
वैसर्पिकविकारं मे वाग्दोषजनितं तथा ।
रक्तदोषोद्भवं वाऽपि मातृतः पितृतोऽपि वा ॥
अङ्गप्रत्यङ्गसम्भूतं विकारं मे व्यपोहतु ।

दानमन्त्रः ।

एवं दत्त्वा तु तं नागमाचार्याय सदक्षिणम् ।

भूमौ प्रणम्य शिरसा शनैः शतपदं व्रजेत् ॥
आचार्येण ह्यनुज्ञातः स्वगृहं प्रविशेत् सुधीः ।
ब्राह्मणान् भोजयित्वा च स्वयं भुञ्जीत बन्धुभिः ॥

इति नागदानविधिः ।

## अथात्मप्रतिकृतिदानम् ।

### भविष्योत्तरे । कृष्ण उवाच ।

आत्मप्रतिकृतिर्नाम यन्नोक्तं कस्य चित् पुरा ।
तत् तेऽहं संप्रवक्ष्यामि दानं मानविवर्धनम् ॥
दानकालः सदा तस्य मुनिभिः परिकीर्त्तितः ।
पुण्यैः पुण्यदिनं पार्थ प्राप्यते जीवितेऽमले ॥
हैमीं प्रतिकृतिं भव्यां कारयित्वा ततो नृप ।
अभीष्टवाहनगतामिष्टालङ्कारसंयुताम् ॥
अभीष्टलोकसहितां सर्वोपस्करसंयुताम् ।

'अभीष्टलोकसहितामिति' प्रियजनसहितामित्यर्थः ।

तत्र पट्टपटीवस्त्रैश्छादितां स्रग्विभूषिताम् ।
कुङ्कुमेनानुलिप्ताङ्गीं कर्पूरागुरुवासिताम् ॥
स्त्री चेद्ददाति शयने शयितां कारयेत् स्वयम् ।
यद्यदिष्टतमं किञ्चित् तत् सर्वं पार्श्वतो न्यसेत् ॥
उपकारकरं स्त्रीणां पुरुषाणां च यद्भवेत् ।
तत् सर्वं स्थापयेत् पार्श्वे स्वयं संचिन्त्य चेतसि ॥
एतत् सर्वं मेलयित्वा स्वे स्वे स्थाने नियोजयेत् ।
पूजयित्वा लोकपालान् ग्रहान् देवीं विनायकम् ॥

देवीशब्देनात्र दुर्गाच्यते विनायकसाहचर्यात् ।

ततः शुक्लाम्बरः स्नात्वा गृहीतकुसुमाञ्जलिः ।

इममुच्चारयेन्मन्त्रं विप्रस्य पुरतः स्थितः ॥
आत्मनः प्रतिमा चेयं सर्वोपकरणैर्युता ।
सर्वरत्नसमायुक्ता तव विप्र निवेदिता ॥
आत्मा शम्भुः शिवः शौरिः शक्रः शिवगणैर्युतः ।
तस्मादात्मप्रदानेन मम चात्मा प्रसीदतु ॥
इत्युच्चार्य ततो दद्याद्ब्राह्मणाय युधिष्ठिर ।
ब्राह्मणश्चाथ गृह्णाति कोऽदादिति च कीर्त्तयन् ॥

'कोऽदादिति' वाजसनेयप्रसिद्धमन्त्रग्रहणम् ।

ततः प्रदक्षिणीकृत्य प्रणिपत्य विसर्जयेत् ।
विधिनाऽनेन राजेन्द्र दानमेतत् प्रयच्छति ॥
यः पुमानथ वा नारी शृणु यत् फलमाप्नुयात् ।
सार्धं वर्षशतं दिव्यं सर्वलोकैः सुरैर्वृतः ॥
अभीष्टफलदानेन चाभीष्टफलभाग्भवेत् ।
यत्र वोत्पद्यते जन्तुः प्राप्तकर्मक्षयक्षणम् ॥
तत्रैव सर्वकामानां फलभाक् स भवेन्नृप ।
इष्टबन्धुजनैः सार्धं न वियोगं कदा चन ॥
प्राप्नोति पुरुषो राजन् स्वर्गं चानन्तमश्नुते ।
यश्चात्मनः प्रतिकृतिं वरवाहनस्थां
　हैमीं विधाय धनधान्यसमाकुलां च ।
सोपस्करां द्विजवराय ददाति भक्त्या
　चन्द्रार्कवद्दिवि विभाति स राजराजः ॥

इत्यात्मप्रतिकृतिदानविधिः ।

## अथाश्विनोर्दानं ब्रह्माण्डपुराणे ।

अथापृच्छन्मुनयः सूतसूनुं तदाऽरण्ये नैमिषे सत्रिणस्ते ।

उग्रश्रवः परिपृच्छामहे त्वां कथं विद्वान् शमयेद्रोगपीडाम् ॥
एवं पृष्टो मुनिभिः सूतसूनुरुवाचेदं दानमाहात्म्यमत्र ।
शृणुध्वं वः कथयिष्यामि दानं यत् कृत्वाऽसौ मुच्यते रोगपूगैः ॥
अभीष्टसिद्धिर्भवतीह कर्त्तुरायुष्यमारोग्यमुपैति चाग्र्यम् ।
उग्राणि सर्वाणि शमं प्रयान्ति श्रियं तथा प्राप्नुयाद्येन दाता ॥
स्वर्भानुना ग्रसिते चन्द्रसूर्ये राश्यन्तरे संक्रमे वाऽथ भानोः ।
ग्रस्ते रोगैस्त्रिविधे चाद्भुते वा मनो नित्यं रमते* यत्र भूमौ ॥
तस्मिन् कुर्यादाश्विनं नाम दानं शुचौ देशे गोमयेनोपलिप्ते ।
वेदीद्वये हस्तमात्रे समन्तात् कृत्वा तिलैस्तण्डुलैराढकाख्यैः ॥
तत्र देवावश्विनौ जातरूपौ प्रत्यङ्मुखोऽभ्यर्चयित्वा जातरूपौ ।

जातरूपौ सुवर्णमयौ अश्विनौ ।

## तल्लक्षणमुक्तं विष्णुधर्मोत्तरे ।

द्विभुजौ देवभिषजौ कर्त्तव्यौ चारुलोचनौ ।
तयोरोषधयः कार्या दिव्या दक्षिणहस्तयोः ॥
वामयोः पुस्तके कार्ये दर्शनीये तथा द्विज ।
एकस्य दक्षिणे पार्श्वे वामे चान्यस्य यादव ॥
नारीयुगं प्रकर्त्तव्यं सुरूपं चारुदर्शनम् ।
तयोश्च नामनी प्रोक्ते रूपसम्पत् तथाऽऽकृतिः ॥
रत्नभाण्डं करे कार्ये चन्द्रशुक्लाम्बरे तथा—इति ।

गन्धैर्वस्त्रैः पुष्पधूपप्रदीपैः प्रदक्षिणं देवमुख्यौ च कृत्वा ।
पुष्पाञ्जलिं तौ प्रददे प्रणम्य अभ्यर्च्य विप्रद्वयमादरेण ॥
प्रत्येकमेकं तु हिरण्यरूपं दद्यात् तु तस्योदकपूर्वमत्र ।
समीरयेन्मन्त्रमथ क्रमेण दाता समाधाय मनः प्रसन्नम् ॥

---

* जायते इति क्व चित् पाठः ।

नासत्यदस्रौ युवयोर्हिरण्यरूपप्रदानान्मम शान्तिरस्तु ।
यथा युवां देवभिषग्भवेतां तथा च मे रोगशमाय देवौ ॥

इत्यश्विदानविधिः ।

## अथ चन्द्रसूर्यदानं विष्णुधर्मोत्तरे । भगवानुवाच ।

अतः परं प्रवक्ष्यामि दानं राजन् नराधिप ।
यद्दत्त्वा तु बली राजा शक्रराज्यमवाप ह ॥
शक्रश्च बलिनो राज्यं दत्त्वा पुनरवाप ह ।
चन्द्रसूर्योपरागे च विषुवे अयने तथा ॥
द्वादश्यां चन्द्रक्षये च वैशाख्यां पुत्रजन्मनि ।
कार्त्तिक्यां च महामाघ्यां सप्तम्यां जयायां तथा ॥
चन्द्रादित्यौ च दातव्यौ सूर्यः सौवर्ण उच्यते ।
शुद्धस्य रजतस्यैव मण्डलं हिमरोचिषः ॥
द्वादशाङ्गुलवृत्तं तु उभयोरपि मण्डलम् ।
वृत्तौ पद्मसमाकारौ मध्ये चैव तु कर्णिकाम् ॥
भानुं ताम्रमये पात्रे घृतपूर्णे तु निक्षिपेत् ।
सोमं शङ्खे क्षीरपूर्णे उपरि स्थापयेद्बुधः ॥
सूर्यं तु रक्तकुसुमैः सोमं शुक्लैस्तथैव च ।
आदित्याय तु धूपं वै सुगन्धिं चैव दापयेत् ॥
सोमस्य गुग्गुलो देयो गन्धः शुक्लस्तथैव च ।
कुङ्कुमं तु पतङ्गाय दीपं चैव घृतेन तु ॥
एवं संपूज्य यत्नेन चन्द्रादित्यौ पृथक् कृतौ ।
अमृतमूर्त्तये सोमं नमोऽन्तेनैव पूजयेत् ॥
खखोल्कायेति वै सूर्यं नमोऽन्तेन पुनः पुनः ।
आहूय ब्राह्मणं भक्त्या वेदवेदाङ्गपारगम् ॥

कुटुम्बिनं दरिद्रं च आहिताग्निं तथैव च ।
रक्तेन वाससाऽऽच्छाद्य कुङ्कुमेनानुलिप्य च ॥
संपूज्य पुष्पधूपैश्च द्विजं सूर्यमिवापरम् ।
रविबिम्बं चन्द्रबिम्बं घृतस्थं तु निक्षिप्य वै ॥
समर्पयेद्ब्राह्मणाय मन्त्रेणानेन भूमिप ।
रुक्मं च पुरुषं चैव पर्णं पुष्करमेव च ॥
त्रयी तु विद्या साङ्गा तु यस्याङ्गं विश्वरूपिणः ।
स वै चण्डकरो देवः प्रीयतां विप्र माऽचिरम् ॥
एवमुच्चार्य भानुं तु ब्राह्मणाय निवेदयेत् ।
क्षीरजं देवदेवं च द्विजराजं तथैव तु ॥
अमृतमूर्त्तिं शीतांशुं ददामि च द्विजोत्तम ।
गायत्र्या चैव सूर्यस्य ग्रहणं जायते विभो ॥
सोमन्तरत्समन्दीयं जपन् शुद्धेन चेतसा ।
एवं चन्द्रं रविं दत्त्वा बली राज्यमवाप ह ॥
सर्वं तेन तु दत्तं स्याद्यो दद्याच्चन्द्रभास्करौ ।
सर्वं तेन कृतं राजन् सर्वं तेन च संश्रुतम् ॥
सर्वं दक्षिणया यष्टं संसारे तु नरोत्तम ।
पूज्यते सिद्धगन्धर्वैर्ऋषिभिर्देवदानवैः ॥

इति चन्द्रादित्यदानविधिः ।

## अथ ध्वजपाशदानम् । आह बौधायनः ।

ध्वजं पाशं पलैकेन कुर्यात् तु रजतेन वै ।
पलार्धेनाथ वा शुद्धस्फटिकोपममाहृतः ॥
रत्नैर्मरकतैः सम्यग्बद्धमङ्गेषु सर्वतः ।
कुम्भं च स्थापयेत् तत्र तिलानां द्रोणपञ्चकम् ॥

कुम्भस्योपरि संस्थाप्यो ध्वजपाशश्च शोभनः ।
सहिरण्यं द्वयं तत् तु ब्राह्मणाय निवेदयेत् ॥
वस्त्रेणावेष्टयेत् कुम्भं गन्धमाल्याक्षतार्चितम् ।
श्रुतवृत्तैः समृद्धाय श्रोत्रियाय कुटुम्बिने ॥
वरुणस्य तथा वायोः प्रीत्यर्थं विनिवेदयेत् ।
नमः पाशभृते तुभ्यं नमो ध्वजधराय ते ॥
जलाधिपतये तुभ्यं वायो सर्वजनप्रियः ।
युवयोः प्रीतये दत्तौ ध्वजपाशौ सुराजतौ ॥
श्वासकासौ हरेतां मे प्रीतौ सर्वजनाश्रयौ ।
एवं कृत्वा श्वासकासी नारोगस्तत्क्षणाद्भवेत् ॥

इति ध्वजपाशदानविधिः ।

## अथ ब्रह्मविष्णुमहेश्वरदानं लिङ्गपुराणे ।

अथान्यत् संप्रवक्ष्यामि सर्वदानोत्तमोत्तमम् ।
पूर्ववद्देशकाले च मण्डपे वा विधानतः ॥
प्रपायां कूटमध्ये वा स्थण्डिले शिवसन्निधौ ।
पूर्वं विष्णुं समाराध्य पद्मयोनिं ततः परम् ॥
मन्त्राभ्यां विधिना ताभ्यां प्रणवादि नमोऽन्तकम् ।

अत्र 'पूर्ववत्'-शब्देन लिङ्गपुराणोक्ततुलापुरुषदानविहितं कुण्डमण्डपादि सर्वमुपसंगृह्यते तत्रैतस्य तत्प्रकरणे पठितत्वात् । 'प्रपाकूटौ' मण्डपविशेषौ । उक्तमण्डपविशेषे स्थण्डिलं विधाय शिवसन्निधौ ब्रह्मविष्णू पूजयेदित्यर्थः । 'शिवसन्निधौ' इत्यनेनैव शिवप्रतिमाकरणमपि गम्यते ।

## तथा चोक्तं कामिके ।

मण्डलान्तः शिवं हैमं पार्श्वयोर्ब्रह्मकेशवौ ।
तानुद्दिश्य प्रदातव्यं श्रोत्रियेभ्यो धनं बहु ॥

उत्तमं त्रिसहस्रं तु मध्यमं द्विसहस्रकम् ।
सहस्रं कन्यसं प्रोक्तं समासात् प्रोच्यते मया ॥
पूर्ववच्छिवपूजा च ऋत्विगाचार्यदक्षिणा ।

'मन्त्राभ्यामिति' वक्ष्यमाणाभ्यामुभाभ्यां विष्णुब्रह्माणौ पूजयेत् । 'प्रणवादिनमोन्तकमिति' क्रियाविशेषणम् ।

नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् ॥
बृहद्बृंहणभेदाय ब्रह्मणे धनदाय ते ।
शिवाय हरये स्वाहा स्वधा वौषड्वषड्नमः ॥

इति विष्णुब्रह्ममन्त्रौ ।
शिवस्य तु जप्त्वा रुद्रानिति वक्ष्यति ।

पूजयित्वा विधानेन पश्चाद्धोमं समारभेत् ।
सर्वद्रव्यं च होतव्यं द्वाभ्यां कुण्डे विधानतः ॥
जप्त्वा रुद्रांस्तु नियतः शिवैकगतमानसः ।
ऋत्विजौ द्वौ तु कर्त्तव्यौ गुणाढ्यौ वेदपारगौ ॥
तानुद्दिश्य यथान्यायं विप्रेभ्यो दापयेद्धनम् ।
शतमष्टोत्तरं तेभ्यः पृथक् पृथगनुत्तमम् ॥
वस्त्राभरणसंयुक्तं यथाविभवविस्तरम् ।
गुरुश्च ऋत्विजौ चैव ब्रह्मविष्णुमहेश्वरान् ॥
तेषां पृथक् पृथक् दद्याद्भोजयेद्ब्राह्मणानपि ।
शिवार्चना च कर्त्तव्या स्नपनादि यथाक्रमम् ॥

'सर्वद्रव्यमित्यादि' सर्वद्रव्यं लिङ्गपुराणोक्ततुलापुरुषदाने निरूपितम् । 'द्वाभ्यां कुण्डे' इति द्वाभ्यामृत्विग्भ्यामेकस्मिन् कुण्डे होतव्यमित्यर्थः । 'तानुद्दिश्येत्यादि' तान् ब्रह्मविष्णुमहेश्वरानुद्दिश्य प्रतिदैवतं ऋत्विगाचार्यव्यतिरिक्तेभ्यो विप्रेभ्यः पृथगेकैकशोऽष्टोत्तरशतसङ्ख्यं धनं दापयेदित्यर्थः । अत्रानुपात्तजातिपरिमाणविशेषेऽपि धनशब्देन सर्वत्र बहुशो निष्काणां प्रक्रान्तत्वात् तैरेवाष्टोत्तरशतं सम्पूरणीयम् । 'गुरुश्चे-

त्यादि' एको गुरुर्द्वौ ऋत्विजौ तेभ्यो ब्रह्मविष्णुमहेश्वरान् सुवर्णमयान् विधाय दद्यात् । तेषां लक्षणमुक्तं ब्रह्माण्डदाने तेभ्यो दक्षिणादानं ब्राह्मणभोजनं स्वस्तिवाचनं च कार्यम् । देशिकं पूर्ववत् संपूज्य ऋत्विजावपि पूजयेत् ।

पुण्याहवाचकान् विप्रान् पूर्ववत् पूजयेद्बुधः ।

इति वातुलोक्तेः ।

एवं कृतेन लभते सर्वयज्ञफलं नरः ।
सर्वान् कामानवाप्नोति निर्वाणं चाधिगच्छति ॥

इति ब्रह्मविष्णुमहेश्वरदानम् ।

## अथ त्रिमूर्त्तिदानं ब्रह्माण्डपुराणे ।

अपृच्छन्मुनयः सर्वे नैमिषारण्यवासिनः ।
उग्रश्रवसमासीनं रोमहर्षणमादरात् ॥
उक्तानि भवताऽस्माकं दानानि विविधानि च ।
मूर्त्तिदानं च नोक्तं वै त्वया ब्रह्मविदां वर ॥
कदा वा कुत्र वा कार्यं यथा वा धर्मसाधनम् ।
ब्रूहि त्वं सर्वधर्मज्ञ दानशुश्रूषवो वयम् ॥
इत्येवमुक्तो बलिभिः शौनकप्रमुखैस्तथा ।
उवाच दानमाहात्म्यं मुनीनां सूतनन्दनः ॥
शृण्वन्तु मुनयः सर्वे दानं सर्वार्थसिद्धिदम् ।
सर्वपापहरं यच्च मङ्गल्यं सर्वमुक्तिदम् ॥
पुरा देवयुगे देवः प्रोवाच मधुसूदनः ।
स्वनाभिकमलस्थाय विरिञ्चये महात्मने ॥
तथाऽहमपि वः सर्वं वदामि शृणुतानघाः ।
त्रिमूर्त्तिदानं दानानामुत्तमोत्तममुच्यते ॥
विषुवत्ययने वाऽपि चन्द्रसूर्यग्रहादिषु ।

नित्यं वा पञ्चदश्यां च जन्मर्क्षेषु समाचरेत् ॥
देवालये नदीतीरे पुण्येष्वायतनेषु च ।
गृहे वा कारयेद्दानं पञ्चभूमिः शुचिर्भवेत् ॥
चतुरस्रां समां भूमिं गोमयेनोपलेपयेत् ।
तत्राक्षताभिर्विकिरेत् पुष्पाञ्जलीन् समन्ततः ॥
एकहस्ता द्विहस्ता वा त्रिगुणा दैर्घ्यतः स्मृता ।
त्रिवेदिका भवेत् तिर्यक् श्वेततण्डुलमिश्रिता ॥
ब्रह्माऽथ विष्णुर्भगवान् मुरारिर्हिरण्मयास्तत्र निवेशनीयाः ।
चतुर्भुजाः स्वायुधभूषणाढ्याः किरीटिनश्चापि यथा क्रमेण ॥

ब्रह्मादिलक्षणमुक्तं ब्रह्माण्डदाने ।

स्नानार्थपाद्याचमनायवस्त्रगन्धादिभिस्तानभिपूज्य भक्त्या ।
प्रदक्षिणीकृत्य सपुष्पहस्तः प्रणम्य चोद्वास्य ततः प्रदद्यात् ॥
प्रत्येकमेवं वहुदानपूर्वं संपूज्य दातव्यमनुक्रमेण ।
त्वया जगत् सृष्टिकृताऽऽत्तमेतत् त्वमेव सर्वस्य पितामहोऽसि ॥
त्वमेव कर्त्ता जगतां विकर्त्ता त्वमेव धाता जगतां विधाता ।
त्वत्सम्प्रदानादनघो यथाऽहं त्वया च सायुज्यमुपैमि देव ॥
तथा कुरु त्वं शरणं प्रपन्ने मयि प्रभो देववर प्रसादम् ।
त्वया जगत् व्याप्तमिदं समस्तं त्वं विष्णुरित्येव वदन्ति सन्तः ॥
त्वत्स्थानि सर्वाणि वदन्ति देव त्वया धृतं विश्वमनन्तमूर्त्ते ।
त्वत्संप्रदानादनघो भवामि यथा जगत्कारणकारणेश ॥
तथा कुरु त्वं शरणं प्रपन्ने मयि प्रभो देववर प्रसादम् ।
त्वयाऽमराणाममृतं विधाय हालाहलं संहृतमेव यस्मात् ॥
तथाऽसुराणां त्रिपुरं च दग्धमेकेषुणा लोकहितार्थमीश ।
त्वद्रूपदानादहमप्यशेषं दोषैर्विमुक्तोऽस्तु गुणान् प्रपद्ये ॥

तथा कुरु त्वं शरणं प्रपन्ने मयि प्रभो देववर प्रसादम् ।
इत्येवमुक्त्वा विधिवद्ददाति स याति सायुज्यमथ त्रिमूर्त्तेः ॥
यः कारयेद्द्विप्रवराय तस्मै सुवर्णसङ्ख्यागणितं हिरण्यम् ।
दद्याच्च वासोयुगमादरेण तथा कृतेऽयं लभते फलं तत् ॥

इति त्रिमूर्त्तिदानविधिः ।

## अथ त्रिपुरुषदानविधिः । मृत्युञ्जये ।

सुवर्णरक्तिकानां च शतेनैकेन शक्तितः ।
कार्या ब्रह्माऽथ विष्णुश्च शङ्करश्च तथैव च ॥
पलद्वादशमानेन पीठं लोहेन कारयेत् ।
देवानां स्थापनार्थाय चक्रवत् परिमण्डलम् ॥
तत्र ब्रह्मादयः स्थाप्या यमदूतं पुरो न्यसेत् ।
चतुर्मुखश्चतुर्बाहुः पद्महस्तः पितामहः ॥
शङ्करो द्विभुजः शूली वृषारूढस्त्रिलोचनः ।
विष्णुश्चतुर्भुजश्चक्री गदागरुडवाहनः ॥
यमदूतः पाशपाणिर्दण्डवान् विकृताननः ।
स तु लोहमयः कार्यो भीतो बद्ध इवाग्रतः ॥
ततो विधाय देवानां पूजां पुष्पफलादिभिः ।
यजमानः करे खड्गं गृहीत्वा निशितं नवम् ॥
इदं शिरश्छिनद्मीति दूतस्यास्य दुरात्मनः ।
इत्युच्चार्य शिरश्छित्त्वा दूतस्य यमदिङ्मुखः ॥
ततश्चतुर्भिर्विप्रैस्तु कार्यं ब्राह्मणवाचनम् ।
ततो ब्रह्मादिदेवानां दानं कुर्यात् प्रयत्नतः ॥
देवालये गृहे वाऽपि तीर्थे वाऽन्यत्र कुत्र चित् ।
ब्राह्मणाय तु तान् दद्याद्दिव्याङ्गाय च शीलिने ॥

सुवर्णदक्षिणायुक्तान् ब्रह्मादीननुपूर्वशः ।
अपमृत्युभयात् त्रस्तो यो दद्याद्देवतात्रयम् ॥
तस्य मृत्युर्विनश्येत दानादस्मान्न संशयः ।
मृत्युना गृह्यमाणोऽपि जीवत्येव नरः स्फुटम् ॥
चामीकरप्रतिकृतित्रितयं विधाय
ब्रह्मादिदानमिह यः पुरुषः करोति ।
रोगान्निरस्य सकलानपि दुर्निवारा-
न्नैवापमृत्युभयमेति नरः कदा चित् ॥

इति पुरुषत्रयदानविधिः ।

## अथ चतुर्मूर्त्तिदानं ब्रह्माण्डपुराणे ।

ऋषयः सत्रमासीना नैमिषारण्यवासिनः ।
उग्रश्रवसमासीनं पप्रच्छुर्मुनिसत्तमाः ॥
रोमहर्षणसूनो त्वं सर्वज्ञानमहार्णवः ।
धर्मशुश्रूषवः सर्वे वयं त्वत्तो महामते ॥
अनायासेन केनैवं संसाराब्धिं समुत्तरेत् ।
नरः प्रब्रूहि दानं वा व्रतं वा श्रुतमेव वा ॥
इत्युक्तो मुनिभिः सूतः प्रोवाच वदतां वरः ।
यथाऽऽह भगवान् ब्रह्मा नारदस्य पितामहः ॥
शृणु नारद भद्रं ते दानं सर्वाघनाशनम् ।
चतुर्मूर्त्तिविधानं तत् स्त्रीणां मङ्गल्यकारणम् ॥
धन्यमारोग्यमायुष्यं भुक्तिमुक्तिफलप्रदम् ।
पुत्रदं श्रीकरं पुण्यमभीष्टफलदं शुभम् ॥
सर्वेषु पुण्यकालेषु चन्द्रसूर्यग्रहादिषु ।
देवागारादिदेशेषु गृहे वा दानमाचरेत् ॥

चतुरस्त्रां समां भूमिं लिप्तां गोमयवारिणा ।
चतस्त्रस्तत्र लेखाः स्युः प्राच्योदीच्यश्च ताः समाः ॥
नव कोष्ठानि तत्र स्युः कोणकोष्ठानि वर्जयेत् ।
तत्र तेषु च मूर्त्तीश्च चतुर्दिक्षु निवेशयेत् ॥
प्रागाद्युत्तरपर्यन्तं जातरूपमयीः शुभाः ।
श्वेततण्डुलपद्मेषु पुष्पवत्सु निवेशयेत् ॥
पुरतो वासुदेवं च सङ्कर्षणमतः परम् ।
प्रद्युम्नं चानिरुद्धं च चतुर्मूर्त्तिं यथाक्रमम् ॥
शङ्खचक्रगदापाणिं पीतवाससमच्युतम् ।
श्रीवत्साङ्कं चतुर्बाहुं केयूरमुकुटोज्ज्वलम् ॥
नीलाम्बरधरं देवमनन्तं मुशलायुधम् ।
सङ्कर्षणं चतुर्बाहुं कटकादिविभूषणम् ॥
प्रद्युम्नश्चानिरुद्धश्च शङ्खचक्रगदाधरौ ।
पीतश्वेताम्बरधरौ केयूरादिविभूषितौ ॥
एवं कृत्वा चतुर्मूर्त्तिं चतुर्बाहुं समर्चयेत् ।
पलस्यार्धात् सुवर्णेन यथाशक्ति विनिर्मितम् ॥
प्रागाद्युत्तरपर्यन्तं देवानामर्चनक्रमः ।
स्वस्वमन्त्रेण देवानामाराधनमनुक्रमात् ॥
स्नानं वासोयुगं चार्घ्यपाद्यमाचमनीयकम् ।
गन्धसुमनसौ धूपं दीपं नैवेद्यमेव च ॥
धारात्रयं शुद्धजलैस्ताम्बूलं च निवेदयेत् ।
परितो लोकपालाँश्च गन्धादिभिरथार्चयेत् ॥
त्रिः प्रदक्षिणमावृत्य गृहीतकुसुमाञ्जलिः ।
उद्वास्य विप्रानाराध्य दद्यान्मन्त्रमुदीरयेत् ॥

नमोऽस्तु वासुदेवाय जगतां पतये नमः ।
तव सङ्कीर्त्तनाद्दानाच्छ्रेयः स्यात् तु सदा मम ॥
सङ्कर्षण नमस्तेऽस्तु जगत्स्थित्यन्तकर्मणे ।
तव देव प्रदानं मे सर्वपापहरं भवेत् ॥
प्रद्युम्नायाखिलेशाय भक्तानां दुःखहारिणे ।
नमोऽस्तु देवदेवाय भक्तानामार्त्तिहारिणे ॥
सदा नमोऽस्तु जगतः सृष्टिस्थित्यन्तहेतवे ।
अनिरुद्धाय देवाय विष्णवे परमात्मने ॥
यदि दद्याच्चतुर्मूर्त्तिं श्रद्धायुक्तस्तु नारद ।
नारी वा पुरुषो वाऽपि यथोक्तं फलमश्नुते ॥
इत्याह नारदायैवं ब्रह्मा लोकपितामहः ।
यथा ममापि तत् सर्वमब्रुवन्मुनिसत्तमाः ॥

इति चतुर्मूर्त्तिदानविधिः ।

अथायुष्करदानं ब्रह्माण्डपुराणे । सूत उवाच ।

अथ दानं प्रवक्ष्यामि शृणुध्वं मुनिसत्तमाः ।
आयुष्करमिति प्रोक्तमारोग्यं सर्वसिद्धिदम् ॥
यत्र साधनसिद्धः स्यात् तत्र दानं समाचरेत् ।
भूमौ गोमयलिप्तायां दक्षिणोत्तरतः शुभम् ॥
निधाय तत्र पाणिभ्यां पूर्णानि सिततण्डुलैः ।
चत्वारि तेषु हैमानि मण्डलानि निवेशयेत् ॥
सौवर्णांश्च ततो देवानर्चयेच्च यथाक्रमम् ।
पूर्वमात्मभुवं तत्र विष्टरश्रवसं पुनः ॥
कृत्तिवाससमीशानं वज्रपाणिं शतक्रतुम् ।

'आत्मभू'र्ब्रह्मा । 'विष्टरश्रवा' विष्णुः । 'ईशानः' शिवः प्रसिद्धः । एतेषां लक्षणमुक्तं ब्रह्माण्डदाने । एते च यथाशक्ति सुवर्णमया विधातव्याः ।

गन्धादिभिरथाभ्यर्च्य दक्षिणोत्तरतः क्रमात् ।
प्रत्येकमेकं विप्रेभ्यो दद्यादाराध्य भक्तितः ॥
तं तं देवमिति ध्यात्वा मन्त्रानेतानुदाहरेत् ।
संप्रीयतां मे भगवानात्मभूरित्युदीरयेत् ॥
संप्रीयतां जगद्व्यापी भगवान् विष्टरश्रवाः ।
संप्रीयतां मे भगवान् कृत्तिवासा इति ध्रुवम् ॥
संप्रीयतां मे भगवान् वज्रपाणिः शतक्रतुः ।
एवमाह पुरा ब्रह्मा नारदाय सुरर्षये ॥
प्रोक्तं मयाऽपि तत् सर्वं युष्माकं मुनिपुङ्गवाः ।

इत्यायुष्करदानविधिः ।

## अथ पञ्चमूर्त्तिदानं ब्रह्माण्डपुराणे ।

अथ दानं प्रवक्ष्यामि पञ्चमूर्त्तिरिति श्रुतम् ।
यत् कृत्वा पुरुषः स्त्री वा सर्वसिद्धिमवाप्नुयात् ॥
यत् पापं मनसा वाचा कर्मणा च पुरा कृतम् ।
जन्मान्तरसहस्रेषु तन्नाशं याति सर्वतः ॥
यथाऽऽहेदं पुरा देवो नारदाय महात्मने ।
पृष्टस्तेनापि भगवानब्जयोनिः पितामहः ॥
तथाऽहमपि तत् सर्वं युष्माकं मुनिपुङ्गवाः ।
प्रवक्ष्यामि महादेवं पञ्चमूर्त्तिरिति श्रुतम् ॥
शृणुष्व त्वं च देवर्षे दानं सर्वाघनाशनम् ।
दानमारोग्यमायुष्यं श्रीकरं भुक्तिमुक्तिदम् ॥
चन्द्रसूर्यग्रहे वाऽथ विषुवत्ययनादिषु ।

सर्वेषु पुण्यकालेषु गृहे वाऽऽयतनेषु च ॥
आचार्यं वरयेद्विप्रं तस्यानुज्ञामवाप्य च ।
विद्याविनयसम्पन्नं सर्वं तेनैव कारयेत् ॥
लेपयेत् तु समां भूमिं गोमयेनोदकेन च ।
चतस्रस्तत्र रेखाः स्युः प्राच्योदीच्यस्तु ताः समाः ॥
त्रिहस्तमात्रास्ताः सर्वास्तत्र स्युर्नवकोष्ठकाः ।
तत्र पञ्चैव संग्राह्या चतुष्कोणानि वर्जयेत् ॥
तेषु पञ्चसु कोष्ठेषु प्रत्येकं कमलं न्यसेत् ।
श्वेततण्डुलपुञ्जेषु अष्टपत्रं सकर्णिकम् ॥
तेषु तण्डुलपद्मेषु पञ्चमूर्त्तीर्निवेशयेत् ।
सुवर्णनिर्मिताः पञ्च मूर्त्तीः कृत्वा विधानतः ॥
ईशं सौवर्णमासीनं केयूरमुकुटोज्ज्वलम् ।
चतुर्बाहुमुदाराङ्गं कटकादिविभूषितम् ॥
दक्षिणे परशुं हस्ते सव्ये तु मृगपोतकम् ।
अभयं दक्षिणे सव्ये शूलं नेत्रत्रयं न्यसेत् ॥
सद्योजातं वामदेवमघोरं पुरुषं तथा ।
सुवर्णेनैव कुर्वीत प्रदानादर्धमानतः ॥

सद्यं पश्चादुत्तरे वामदेवं तथा चान्यद्दक्षिणे चाप्यघोरम् ।

'सद्यं' सद्योजातमित्यर्थः ।

तच्छब्दोक्तं पुरुषं पूर्वकोष्ठे तेषां मध्ये चैव मीशानमेव ।
स्नानं वस्त्रं चार्घ्यपाद्याचमनीयं गन्धं पुष्पं धूपदीपौ हविष्यम् ॥
अभ्यर्चिताः पञ्चमूर्त्तीः क्रमेण मन्त्रैः पञ्च ब्रह्मभिर्मानपूर्वम् ।
संपूज्य चैवं विधिनोदितेन सद्यादिदेवाँश्च यथाक्रमेण ॥

सद्योजातादिलक्षणमुक्तं लिङ्गपुराणोक्ततिलपर्वतदाने । पञ्च ब्राह्मणाः सद्योजातादि मन्त्राः तैत्तिरीयाणां प्रसिद्धाः ।

तेनैव विप्रेण च सर्वमेतत् कृत्वैव दानं स्वयमेव कुर्यात् ।

दानकाले तु संप्राप्ते दाता नारी नरोऽथ वा ।
स्नापितो गुरुणा तेन मन्त्रपूतैः कुशोदकैः ॥
अभ्यर्च्य विप्रं गन्धाद्यैर्मन्त्रानेतानुदीरयेत् ।
प्रत्येकमेका दातव्या देवमूर्त्तिरनुक्रमात् ॥
नमोऽस्तु सद्योजाताय भवाय भयभङ्गिने ।
भवभङ्गो भवेन्मह्यं तव रूपप्रदानतः ॥
सोमाय वामदेवाय शिवाय शिवरूपिणे ।
सदा मे शिवमेवास्तु तव रूपप्रदानतः ॥
नमोऽघोराय घोराय जगत्संहृतिकर्मणे ।
शरणं त्वां प्रपन्नोऽहमशङ्कं मम शं कुरु ॥
पुरुषाय पुराणाय हराय वरदाय च ।
तस्य रूपप्रदानान्मे श्रेयसेऽस्तु नमोऽस्तु ते ॥
ईशानो जगतामीशो देवानामभयङ्करः ।
रक्ष त्वं शेषभूतानामीशो मां शरणं गतम् ॥
त्रिः प्रदक्षिणमावृत्य गृहीतकुसुमाञ्जलिः ।
प्रणिपत्य ततो दद्यादेभिर्मन्त्रैर्यथाक्रमम् ॥
मध्यमं गुरवे दद्यादन्यस्मै वा प्रदापयेत् ।
दक्षिणां गुरवे दद्यात् सुवर्णं चैव वाससी ॥
एतन्नरोऽथ वा नारी नारदेह समाचरेत् ।
मुच्यते सर्वपापेभ्यः शिवसायुज्यमाप्नुयात् ॥
इत्येवमृषयो दानं नारदाय चतुर्मुखः ।

यथोवाच तथा प्रोक्तं मया वै पञ्चमूर्त्तिकम् ॥

इति पञ्चमूर्त्तिदानविधिः ।

## अथ दिग्दानं विष्णुधर्मोत्तरे ।

कार्त्तिक्यामग्निदैवे भे विष्णोर्ब्रह्मान्तकस्य वा ।
प्राच्यादि कुर्वीत दिशश्चतस्रः पृथिवीयुताः ॥
स्त्रीवेषाश्चैव कर्त्तव्याः पूर्णकुम्भकराः शुभाः ।
गोरूपा पृथिवी कार्या सर्वलक्षणसंयुता ॥
कृत्वा कमलसंस्थानाः सुवर्णद्वितयेन तु ।
पूजयित्वा द्विजान् पञ्च सुवस्त्राभरणैस्ततः ॥
ताम्रपात्रं दले कृत्वा कदल्याः पीठसंयुताः ।
यो ददाति प्रदत्ता स्यात् पृथिवी तेन पार्थिव ॥
पितरः पितृलोकस्था देवलोके दिवौकसः ।
संप्रीणयन्ति तं तुष्टा वसुपुत्रधनेप्सितैः ॥
अमाषमन्नं भुञ्जीत दत्त्वैतद्विधिपूर्वकम् ।

इति दिग्दानविधिः ।

## अथ पञ्चदैवत्यदानं ब्रह्माण्डपुराणे ।

अथ दानं प्रवक्ष्यामि शृण्वन्तु मुनयोऽमलाः ।
पञ्चदैवत्यमित्युक्तं नारदाय स्वयम्भुवा ॥
शरीरारोग्यमायुष्यं श्रीकरं पापनाशनम् ।
यत् कृत्वा पुरुषः स्त्री वा सर्वमायुरवाप्नुयात् ॥
पुण्यकालेषु सर्वेषु जन्मर्क्षेषु विशेषतः ।
पुण्यदेशे गृहे वाऽथ नित्यं वा दानमाचरेत् ॥
दुःस्वप्नाद्भुतदृष्टौ तु सर्वदोषप्रशान्तये ।

दानमेतत्समं कुर्याच्छ्रद्धया परया युतः ॥
स्नात्वा कुशोदकैः प्रातर्धौतवासाः प्रसन्नधीः ।
संपूज्य विप्रं विद्वांसं तस्यानुज्ञामवाप्य च ॥
अग्निः सोमश्च वरुणस्तथा देवी सरस्वती ।
अग्निविष्णुरिति प्रोक्तो ब्रह्मणा पञ्च देवताः ॥

अग्न्यादिलक्षणमुक्तं ब्रह्माण्डदाने । सरस्वतीलक्षणमुक्तं सरस्वतीदाने ।

## अग्निविष्णवोस्तु लक्षणमपराजितेनोक्तम् ।

अग्निविष्णू प्रकर्त्तव्यौ कमले युगपत् स्थितौ ।
तत्र श्रुक्पाणिरग्निस्तु साक्षसूत्रकमण्डलुः ॥
गदापद्मधरो विष्णुः शङ्खचक्रगदास्तथा-इति ।
एताः पञ्च समुद्दिश्य विप्रानाराध्य दापयेत् ॥
प्रत्येकं वाससी शुभ्रे सस्वर्णे यथाक्रमम् ।
संप्रीयतामयं देवो भगवान् सोम इत्यपि ॥
तत्रोपदेष्ट्रे विप्राय तत्समां दक्षिणां ददेत् ।
पुण्याहं स्वस्तिमृद्धिं च वाचयेत् पञ्चभिर्द्विजैः ॥
तेषामपि च दातव्या दक्षिणा च यथार्हतः ।

इति पञ्चदैवत्यदानविधिः ।

## अथ लोकपालाष्टकदानं लिङ्गपुराणे ।

लोकपालाष्टकं दिव्यं साक्षात् परमदुर्लभम् ।
सर्वसंपत्करं गुह्यं परचक्रविनाशनम् ॥
स्वदेशरक्षणं नित्यं गजवाजिविवर्धनम् ।
पुत्रवृद्धिकरं पुण्यं गोब्राह्मणहितावहम् ॥
पूर्वोक्तदेशकाले तु वेदिकोपरिमण्डले ।

मध्ये शिवं समभ्यर्च्य यथान्यायं यथाक्रमम् ॥
दिग्विदिक्षु प्रकर्त्तव्यं स्थण्डिलं वालुकामयम् ।
अष्टौ विप्रान् समाहूय वेदवेदाङ्गपारगान् ॥
जितेन्द्रियान् कुलोद्भूतान् सर्वलक्षणसंयुतान् ।
शिवाभिमुखमासीनानहतेष्वम्बरेषु च ॥
वस्त्रैराभरणैर्दिव्यैर्लोकपालान् स्वमन्त्रकैः ।
गन्धैः पुष्पैः सधूपैश्च ब्राह्मणाँश्चार्चयेत् क्रमात् ॥

अत्र कुण्डमण्डलमण्डपवेदिकावितानादि लिङ्गपुराणोक्ततुलापुरुषदानवद्द्रष्टव्यम् । अग्निकार्यमत्र शिववेदिकायां च परितः स्थण्डिलाष्टकं विधाय तत्र यथाशक्ति सुवर्णनिर्मितान् अष्टौ लोकपालान् शिवाभिमुखान् नूतनवस्त्रेष्वासीनान् संस्थाप्य वस्त्राद्यैः संपूज्य ब्राह्मणानथार्चयेत् । लोकपाललक्षणमुक्तं ब्रह्माण्डदाने ।

पूर्वतो होमयेदग्नौ लोकपालाष्टमन्त्रकैः ।
समिद्घृताभ्यां होतव्यमग्निकार्यक्रमेण तु ॥
एवं हुत्वा विधानेन ब्राह्मणान् वेदपारगान् ।
यजमानः समाहूय सर्वाभरणभूषितान् ॥
कृत्वा तान् पूजयित्वाऽथ द्विजेभ्यो दापयेद्धनम् ।
पृथक् पृथक् स्वमन्त्रैश्च दशनिष्कं च भूषणम् ॥
दशनिष्केण वस्त्राद्यमासनं कम्बलं पृथक् ।
स्नापनं तत्र कर्त्तव्यं शिवस्य विधिपूर्वकम् ॥
दक्षिणा च प्रदातव्या यथाविभवविस्तरम् ।

'अग्निकार्यक्रमः' अग्निमुखादिः पूर्णाहुत्यन्तः ।

**कामिके तु ।**

एकस्मिन् स्थण्डिले वाऽथ कुण्डे वा होममाचरेत् ।

वातुले हि ।

शक्रात् तु पूर्वदिग्भागे देशिको होममाचरेत् ।
लोकपालाष्टमन्त्रैस्तु पृथगष्टोत्तरं शतम् ॥
समिद्घृताभ्यां होतव्यमन्ते पूर्णाहुतिं ददेत् ।

'दशनिष्कैर्गोति' तान् लोकेशान् विप्रान् यजमानोऽर्चयित्वा प्रत्येकं दशनिष्कमितं भूषणं तत्सम्मितहिरण्यात्मकदक्षिणया सह वस्त्रादि च दद्यात् । दक्षिणा चेति गुरुदक्षिणा । सा च यथाविभवं देया ।

कामिके तु ।

दक्षिणा दशनिष्का स्याद्भूषणैश्च समन्विता ।

वातुले तु गुरुनवमेभ्यः प्रत्येकं शतनिष्का दक्षिणोक्ता ।

एतद्यः कुरुते दानं लोकेशानां तु भक्तितः ।
लोकेशानं स्थिरं स्थित्वा स्थानेषु ससुखं नरः ॥
कल्पं शिवपुरे स्थित्वा सार्वभौमो भवेद्भुवि ।

इति लोकपालाष्टकदानविधिः ।

अथ ब्रह्माण्डपुराणे ।

शृणु नारद भद्रं ते दानं सर्वाघनाशनम् ।
सर्वमङ्गल्यमायुष्यमारोग्यं श्रीकरं शुभम् ॥
दानानामुत्तमं ह्येतत् सर्वसिद्धिकरं परम् ।
करोति दानं नारी वा सायुज्यं ब्रह्मणो व्रजेत् ॥
विषुवत्ययने राहुग्रहणे चन्द्रसूर्ययोः ।
अन्येषु पुण्यकालेषु जन्मर्क्षेषु विशेषतः ॥
देवालये नदीतीरे गृहे वा दानमाचरेत् ।
पुण्यदेशेषु सर्वेषु पुराणोक्तेषु नारद ॥
चतुरस्रां समां भूमिं लिप्त्वा गोमयवारिणा ।

षट्करं चाष्टहस्तं वा दश द्वादश वा करान् ॥
प्राच्योदीच्यश्च कर्त्तव्या रेखाश्चतस्रकाः समाः ।
नव कोष्ठानि तत्र स्युः श्वेततण्डुलपुञ्जकैः ॥
सितैरष्टदलैर्युक्तान् कमलान् विन्यसेच्छुभान् ।
जातरूपमयं देवं जगत्कर्त्तारमव्ययम् ॥
तेषां मध्यमकोष्ठे तु कमलं विनिवेशयेत् ।

कमलस्थं ब्रह्माणम् ।

इन्द्रमग्निं यमं चैव निर्ऋतिं वरुणं तथा ।
वायुं सोमं च रुद्रं च प्रागादिषु यथाक्रमम् ॥
जातरूपमयान् देवानष्टौ स्वायुधसंयुतान् ।
त्रिपलाद्या सुवर्णात् तु यथाशक्ति विनिर्मितान् ॥
ब्रह्मणोऽभिमुखान् सर्वान् सर्वेषु विनिवेशयेत् ।

'जातरूपमयान्' हिरण्मयान् । ब्रह्मणो लोकपालानां च लक्षणमुक्तं ब्रह्माण्डदाने ।

प्रत्येकं वाससाऽऽवेष्ट्य संप्रोक्ष्य कुशवारिणा ।
योऽसौ कारयिता विप्रस्त्वेवमेतत् समाचरेत् ॥
दानकाले तु संप्राप्ते दाता स्नात्वा कुशोदकैः ।
प्रसन्नचित्तवदनः परमेष्ठिपुरोगमान् ॥
स्वनाममन्त्रैरभितो नमोऽन्तैराराध्य गन्धादिभिरादरेण ।
विप्राँस्तथाऽभ्यर्च्य यथाक्रमेण संप्रीयतां मे त्वयमेवमुक्त्वा ॥
योऽसौ कारयिता विप्रस्तस्मै दद्यात् तु दक्षिणाम् ।
सुवर्णसङ्ख्यागणितं हिरण्यं चैव वाससी ॥
प्रोक्तं तु देवर्षिदानं लोकपालाह्वयं मया ।
क्रमाद्यच्छ्रोतुमिच्छा ते तदिदं वद साम्प्रतम् ॥

इति लोकपालदानविधिः ।

अथ रुद्राष्टकदानं ब्रह्माण्डपुराणे ।

शृणु देव मुने गुह्यं दानं सर्वार्थदं नृणाम् ।
रुद्राष्टकमिति ख्यातं तत्पत्नीपुत्रसंयुतम् ॥
मध्ये चतुर्मुखोपेतमिति ते भगवान् हरिः ।
यथाऽऽह पूर्वं तत् सर्वं वदामि तव नारद ॥
रुद्रो भवश्च शर्वश्च ईशः पशुपतिस्तथा ।
भीम उग्रो महादेव एते रुद्राः प्रकीर्त्तिताः ॥
जटिलाश्चर्मवसनाः सर्वे खट्वाङ्गशूलिनः ।
तेषां भार्याश्च पुत्राश्च नामतः कथयामि ते ॥
सौवर्चलाऽङ्गवादा च विकेशी च शिवा तथा ।
स्वाहा दिशा च दीक्षा च रोहिणी च तथा क्रमात् ॥
ताश्च स्त्रीवेषधारिण्यः सर्वाभरणभूषिताः ।
रुद्रपत्न्य इमाश्चाष्टौ पुत्राँश्च शृणु नारद ॥
शनैश्चरश्च शुक्रश्च लोहिताङ्गो मनोजवः ।
वसन्तः स्वर्गः सन्तानो बुधश्चैव यथाक्रमम् ॥
ते बालवेषाः कर्त्तव्याः शिखिनो दण्डपाणयः ।
पुण्यकाले तु सम्प्राप्ते नित्यं वा भूतिमिच्छता ॥
जन्मर्क्षे तु विशेषेण दातव्यं मुनिसत्तम ।
चतुरस्रां समां भूमिं लिप्त्वा गोमयवारिणा ॥
चतस्रस्तत्र रेखाः स्युः प्राक् तिर्यक् चैव सर्वतः ।
हस्तमात्रं द्विहस्तं वा नवकोष्ठसमन्वितम् ॥
स्थण्डिलं तत्र पद्मानि तण्डुलैश्च प्रकल्पयेत् ।
ब्रह्माणं मध्यमे कोष्ठे सौवर्णं विनिवेदयेत् ॥
छन्दोदेवीं च तत्पार्श्वे तदर्धेन प्रकल्पयेत् ।

'छन्दोदेवीं च' गायत्रीम्। तयोर्लक्षणमुक्तं ब्रह्माण्डदाने।

सौवर्णानष्ट रुद्रांश्च ब्रह्मार्धेन विनिर्मितान्।
प्रागाद्युत्तरपूर्वांश्च परितः परिकल्पयेत्॥
तस्याप्यर्धेन सौवर्णान् प्रत्येकं रुद्रपार्श्वतः।
तेषां देवीश्च पुत्रांश्च कल्पयित्वाऽर्चयेत् पुमान्॥
स्वस्वमन्त्रेण पूजा स्यात् नमस्कारयुतेन च।
ब्रह्मादीन् पूजयेद्गन्धपुष्पधूपप्रदीपकैः॥
प्रदक्षिणं ततः कृत्वा प्रणम्य च यथाक्रमम्।
प्रत्येकमेकं प्रागादीन् विप्रान् संपूज्य दापयेत्॥
पूजयित्वोपदेष्टारं दद्यान्मन्त्रेण मध्यमम्।
प्रीयतां भगवान् ब्रह्मा परमेष्ठी पितामहः॥
एवं रुद्राष्टकोपेतं दानं दद्याद्यथाविधि।
सर्वपापविनिर्मुक्तः सर्वसिद्धिमवाप्य च॥
आयुरारोग्यसंयुक्तः पुत्रवान् धनवान् सुखी।
भुक्त्वा भोगान् यथेच्छं च स्वर्गं मोक्षं च विन्दति॥

इति रुद्राष्टकदानविधिः।

## अथ ग्रहदानं ब्रह्माण्डपुराणे। सूत उवाच।

अतः परं प्रवक्ष्यामि दानं सर्वार्थसिद्धिदम्।
ग्रहशान्तिकरं नृणां सर्वपापप्रणाशनम्॥
यत् कृत्वा सुभगः श्रीमानायुरारोग्यमाप्नुयात्।
पुरुषो वाऽथ वा नारी स्वर्गं मोक्षं च विन्दति॥
नक्षत्रग्रहपीडासु दुःस्वप्नाद्भुतदर्शने।
निमित्तानन्तरं कार्यं नैमित्तिकमिति स्थितिः॥
यथाऽऽह नारदायैवं ब्रह्मा लोकपितामहः।

तथाऽहमप्यशेषं वो वक्ष्यामि मुनिसत्तमाः ॥

ब्रह्मोवाच ।

ग्रहदानमथो वक्ष्ये सर्वसिद्धिकरं परम् ।
सर्वशान्तिकरं नृणां सर्वपापप्रणाशनम् ॥
विषुवत्ययने राहुग्रहणे शशिसूर्ययोः ।
जन्मर्क्षे सोमवारे* वा पञ्चदश्यां तथैव च ॥
पुण्यकालेषु सर्वेषु पुण्यदेशे विशेषतः ।
ग्रहदानं तु कर्त्तव्यं नित्यं श्रेयोऽभिकाङ्क्षिणा ॥
हस्तमात्रां द्विहस्तां वा त्रिहस्तां वाऽथ नारद ।
चतुरस्रां समां भूमिं गोमयेनानुलेपयेत् ॥
रेखाः प्राच्य उदीच्यश्च स्युश्चतस्रस्तथा समाः ।
नवकोष्ठेषु पद्मानि विन्यसेत् श्वेततण्डुलैः ॥
आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ।
राहुः केतुरिति प्रोक्ता ग्रहा लोकसुखावहाः ॥
एषां हिरण्यरूपाणि कारयित्वा यथाविधि ।
त्रिनिष्केणाथ वा कुर्यात् यथाशक्त्या पृथक् पृथक् ॥
आदित्यं मध्यमे कोष्ठे दक्षिणेऽङ्गारकं न्यसेत् ।
उत्तरे तु गुरुं विद्याद्बुधमुत्तरपूर्वके ॥
भार्गवं पूर्वतो न्यस्य सोमं दक्षिणपूर्वके ।
पश्चिमेऽर्कसुतं न्यस्य राहुं पश्चिमदक्षिणे ॥
पश्चिमोत्तरतः केतुं संनिवेश्य यथाविधि ।
तद्वर्णपुष्पगन्धाद्यैरर्चयेत् स्वस्वमन्त्रकैः ॥

---

* सौरवार इति न॰ प्र॰ पु॰ पाठः ।

दानं शूद्रोऽथ वा कुर्यात् स्त्री वा तत्र तु नारद ।
भूलेपनादि यत् कार्यं सर्वं विप्रेण कारयेत् ॥
स्नानकाले तु सम्प्राप्ते स्नात्वा तिलकुशोदकैः ।
प्रयतो यजमानस्तु धौतवस्त्रः प्रसन्नधीः ॥
अर्चयित्वा स्वयं दद्यादहस्करमुखान् ग्रहान् ।
प्रत्येकमेकं विप्रोऽसौ स्वस्वमन्त्रमुदीरयेत् ॥

पद्मासनः पद्मकरो द्विबाहुः पद्मद्युतिः सप्ततुरङ्गवाहः ।
दिवाकरो लोकगुरुः किरीटी मयि प्रसादं विदधातु देवः ॥
श्वेताम्बरः श्वेतविभूषणश्च श्वेतद्युतिर्दण्डधरो द्विबाहुः ।
चन्द्रोऽमृतात्मा वरदः किरीटी श्रेयांसि मह्यं विदधातु देवः ॥
रक्ताम्बरो रक्तवपुः किरीटी चतुर्भुजो मेषगमो गदाभृत् ।
धरासुतः शक्तिधरश्च शूली सदा मम स्याद्वरदः प्रशान्तः ॥
पीताम्बरः पीतवपुः किरीटी चतुर्भुजो दण्डधरश्च हारी ।
चर्मासिधृक् सोमसुतः सदा मे सिंहाधिरूढो वरदो बुधश्च ॥
पीताम्बरः पीतवपुः किरीटी चतुर्भुजो देवगुरुः प्रशान्तः ।
दधाति दण्डं च कमण्डलुं च तथाऽक्षसूत्रं वरदोऽस्तु मह्यम् ॥
श्वेताम्बरः श्वेतवपुः किरीटी चतुर्भुजो दैत्यगुरुः प्रशान्तः ।
तथाऽक्षसूत्रं च कमण्डलुं च जयं च बिभ्रद्वरदोऽस्तु मह्यम् ॥
नीलद्युतिः शूलधरः किरीटी गृध्रस्थितस्त्राणकरो धनुष्मान् ।
चतुर्भुजः सूर्यसुतः प्रशान्तो वरप्रदो मेऽस्तु स मन्दगामी ॥
नीलाम्बरो नीलवपुः किरीटी करालवक्त्रः करवालशूली ।
चतुर्भुजश्चर्मधरश्च राहुः सिंहासनस्थो वरदोऽस्तु मह्यम् ॥
धूम्रो द्विबाहुर्वरदो गदाभृद्गृध्रासनस्थो विकृताननश्च ।
किरीटकेयूरविभूषिताङ्गः सदाऽस्तु मे केतुगणः प्रशान्तः ॥

इत्युक्त्वा दापयेत् सर्वानादित्याद्यान् नवग्रहान् ।
पुरुषो वाऽथ नारी वा यथोक्तं फलमाप्नुयात् ॥
मध्यमं गुरवे दद्यादन्यस्मै वा प्रदापयेत् ।
अथ वा दक्षिणा देया सुवर्णं वाससी शुभे ॥

सूत उवाच ।

इत्याह भगवान् ब्रह्मा नारदाय महात्मने ।
तथाऽहमब्रुवं दानं युष्माकं मुनिसत्तमाः ॥

इति नवग्रहदानविधिः ।

## अथ सम्पत्करदानं ब्रह्माण्डपुराणे ।

अथापरं दानमहं ब्रवीमि शृण्वन्तु सर्वे मुनयः समेताः ।
सम्पत्करं दानमतीव पुण्यं यस्मिन् कृते सम्पदोऽभ्येति जन्तुः ॥
यथा पुरा ऋषये नारदाय जगत्कर्त्ता चाब्रवीद्दानमेतत् ।
आयुष्करं रोगहरं तु पापविनाशनं नाशकरं त्वघानाम् ॥
स्वर्गापवर्गौ कुलपुत्रवृद्धिं श्रियं तथा प्रददातीष्टसिद्धिम् ।
हिरण्यदः प्राप्नुयाद्दीर्घमायुरित्यब्रवीदात्मभूर्नारदाय ॥
अतः सुवर्णं द्विजवर्गहस्ते दातव्यमेवात्महितं मुनीन्द्राः ।
कालेषु सूर्यग्रहणादिकेषु तारेषु जन्मत्रितयेषु कार्यम् ॥
देशेषु देवायतनादिकेषु गृहेषु वा रमते यत्र कुत्र ।
स्नात्वा प्रातस्तिलमिश्रैः कुशोदैः शुचिर्भूत्वा धौतवासाः प्रसन्नः ॥
संकल्प्य विप्रं विदुषो गुरुं च संगृह्य तस्यानुमतेन कार्यम् ।
गव्येन भूमिं शकृता जलेन चालेपयेद्विंशतिहस्तमात्राम् ॥
तत्रैव रेखाश्चतस्रः समाः स्युः प्राच्यश्च तिर्यक् च यथोपदिष्टम् ।
नव कोष्ठानि तत्र स्युस्तेषु पूर्णानि तण्डुलैः ।
निधातव्यानि पात्राणि वासोभिरभिवेष्टय च ॥

पलस्यार्वाक् त्रिनिष्कोर्ध्वं यथाशक्ति विनिर्मितान् ।
दक्षिणोत्तरतो देवान् जातरूपमयान् न्यसेत् ॥
पाश्चात्यकोष्ठत्रितये तु मित्रं तथा च देवं वरुणं च सोमम् ।
चतुर्मुखं मध्यमकोष्ठकेषु जगत्पतिं विष्णुमुमापतिं च ॥
दिवाकरं वृत्रहणं च वह्निं संपूज्य सर्वान् विधिवत् क्रमेण ।

अत्र मित्रलक्षणमाह विश्वकर्मा ।

पद्मगर्भसमः कार्यो मित्रः कमलसंस्थितः ।
आजानुलम्बिनालान्तर्विकचाम्भोजधृक् प्रभुः ॥

वरुणादिलक्षणमुक्तं ब्रह्माण्डदाने ।

अभ्यर्च्य विप्रानपि गन्धवस्त्रैः पृथक् च दातव्यमनुक्रमेण ।
सम्प्रीयतां मेऽस्त्वयमेवमुक्त्वा ततो दद्यात् सोदकपूर्वमत्र ॥
एकस्य चैकं च हिरण्यरूपं प्रणामपूर्वं परिणीय सर्वान् ।
पात्राणि वासः परिधाय चैव सतण्डुलं सहिरण्यं च दत्त्वा ॥
अभीष्टसिद्धिं स लभेत सर्वमायुष्यमारोग्यमुपैति चाग्र्यम् ।
अथोपदेष्ट्रे गुरवे सुवर्णं वासोयुगं दानसमं च दद्यात् ॥
विप्रैस्तथा वाचयेत् स्वस्तिवाच्यं ततो दद्याद्दक्षिणां वाचकेभ्यः ।

इति सम्पत्करदानविधिः ।

अथ दशावतारदानं तत्र विश्वामित्रः ।

दानानामुत्तमं दानं हेम विष्णोः स्वरूपकम् ।
तस्मात् पुण्यार्थिना देया हैमी विष्णोः स्वरूपिका ॥
मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः ।
रामो रामश्च कृष्णश्च बुद्धः कल्की च ते दश ॥
वामे शङ्खं गदा दक्षे द्विभुजो मत्स्यरूपधृक् ।
नराङ्घ्रिर्मत्स्यरूपी वा मत्स्यरूपी जनार्दनः ॥

एतदेव कूर्मलक्षणं मत्स्यपदस्थाने कूर्मपदप्रयोगे सति ।

मधुपिङ्गलवर्णं च चतुर्बाह्वायुधैर्युतम् ।
नराङ्गं शूकरास्यं च मनाक्पीनं सुभीषणम् ॥
श्रीर्वामकूर्परस्था तु धरानन्तौ पदानुगौ ।
एतद्रूपधरं देवं वराहं भुक्तिमुक्तिदम् ॥
ज्वलदग्निसमाकारं सिंहवक्त्रं नराङ्गकम् ।
दंष्ट्राकरालवदनं ललज्जिह्वं सुभीषणम् ॥
वृत्ताक्षं जटिलं क्रुद्धमालीढं पीनवक्षसम् ।
अभेद्यतीव्रनखरं वामोरुकृतदानवम् ॥
तद्वक्षो दारयन्तं च कराभ्यां नखरैर्भृशम् ।
गदाचक्रधरं द्वाभ्यां नरसिंहं जगत्प्रभुम् ॥
कुण्डी छत्रधरो द्विदोर्वामनः परिकीर्त्तितः ।
क्षत्रान्तकरणं घोरमुद्वहन् परशुं करे ॥
जामदग्न्यः प्रकर्त्तव्यो रामो रोषारुणेक्षणः ।
युवा प्रसन्नवदनः सिंहस्कन्धो महाबलः ॥
आजानुबाहुः कर्त्तव्यो रामो बाणधनुर्धरः ।
शङ्खचक्रधरः कार्यो नीलोत्पलदलच्छविः ॥
कृष्णो दीर्घद्विबाहुश्च सर्वदैत्यक्षयङ्करः ।
कषायवस्त्रसंवीतः स्कन्धसंसक्तचीवरः ॥
पद्मासनस्थो द्विभुजो ध्यायी बुद्धः प्रकीर्त्तितः ।
खड्गोद्यतकरः क्रुद्धो हयारूढो महाबलः ॥
म्लेच्छोच्छेदकरः कल्की द्विभुजः परिकीर्त्तितः ।
यथाशक्त्या प्रकुर्वीत सुवर्णेन विजानता ॥
समेन षोडशेनैव समान्येतानि कारयेत् ।

वित्तानुरूपतो राजन् तुल्यमाढ्यदरिद्रयोः ॥
संपूज्य नामभिस्तैस्तु पुष्पधूपनिवेदनैः ।
भक्तिनम्रः प्रणम्याथ निवेद्य श्रद्धया ततः ॥
आहूय ब्राह्मणान् राजन् पादौ प्रक्षाल्य यत्नतः ।
उपवेश्यासने सर्वांश्चन्दनेनानुलेपयेत् ॥
सुगन्धैः कुसुमैश्चैव धूपैर्दीपैस्तथैव च ।
आच्छाद्य वस्त्रयुग्मैश्च ग्रहणे चन्द्रसूर्ययोः ॥
अयने विषुवे वाऽपि द्वादश्यां तु विशेषतः ।
उपोष्यैकादशीं कार्यं धर्मकार्यं च सर्वशः ॥
अन्यथा नरकं यातीत्येवमाह पितामहः ।
ग्राहका विष्णुरूपाश्च ग्राहयीत विमत्सरः ॥
एकैकं देवरूपं तमेकैकस्य समर्पयेत् ।
अथ वा विदुषः सर्वान् दद्यात् संपूज्य मानवः ॥
नानृतेऽपि* कदा चिच्च दद्यात् पाषण्डिने तथा ।
देवरूपं मया विप्र कारितं काञ्चनं शुभम् ॥
तद्गृहाण प्रदानेन प्रीयतां विश्वरूपधृक् ।
एतदुच्चार्य विप्रस्य हस्ते तोयं क्षिपेत् स्वयम् ॥
प्रदक्षिणा ततो देया संपूज्य प्रविशेद्गृहम् ।
अस्य दानस्य माहात्म्यं वदाम्येकमुखः कथम् ॥
सहस्रास्यः शतास्यो वा यदि शक्तोऽभिभाषितुम् ।
उद्देशतः प्रवक्ष्यामि भक्तानां भक्तिवृद्धये ॥
दशावतारतो राजन् विष्णोरैक्यं स गच्छति ।
क्षीरे क्षीरं यथा क्षिप्तं पयः संहरतेऽनलः ॥

---

* नानृतेऽपीति क्व चित् पाठः ।

तथा विष्णोः स दाता वै ऐक्यं याति न संशयः ।
ब्रह्महा च सुरापश्च तस्करो गुरुतल्पगः ॥
यथा मुञ्जादिषीकान्तस्तथा पापात् प्रमुच्यते ।
सहस्रं चैव जन्तूनामुद्धरेत् स इदं जगत् ॥
तस्मात् प्रयच्छ राजेन्द्र विप्रेभ्यो विष्णुरूपकान् ।
येन सर्वस्य दानस्य फलं प्राप्नोति सत्वरम् ॥
न तत् तपोभिरत्युग्रैर्विहितैः प्राप्यते फलम् ।
विष्णोर्दशावताराणां दानेन यदवाप्यते ॥
यः काञ्चनेन शुभलक्षणलक्षिताङ्गं
विष्णोः स्वरूपदशकं विधिवद्विधाय ।
दद्याद्द्विजेषु जगदेव हि तेन दत्तं
यस्माज्जगन्मयवपुर्विभुरेष देवः ॥

इति दशावतारदानविधिः ।

## अथ विश्वामरदानं ब्रह्माण्डपुराणे ।

अतः परं प्रवक्ष्यामि दानं विश्वामराह्वयम् ।
यत् कृत्वा पुरुषः स्त्री वा ब्रह्मलोकमवाप्नुयात् ॥
सर्वपापक्षयकरं सर्वपापविमोचनम् ।
स्वर्ग्यं यशोदमायुष्यं श्रीकरं पुत्रवृद्धिदम् ॥
अभीष्टफलदं नृणां दुःस्वप्नाद्भुतदर्शने ।
ग्रहशान्तिकरं पित्र्यं भुक्तिमुक्तिप्रदायकम् ॥
यदाह भगवान् ब्रह्मा नारदाय सुरर्षये ।
यथाऽऽह कृपया पूर्वं पिता मे रोमहर्षणः ॥
वैश्वदेवमिति प्रोक्तं दानानामुत्तमोत्तमम् ।
तदहं वः प्रवक्ष्यामि शृणुध्वं मुनिसत्तमाः ॥

ग्रस्ते चन्द्रे राहुणा वाऽपि सूर्ये तथाऽयने विषुवे जन्मतारे ।
व्यतीपाते त्रिविधे चाद्भुते वा दुःस्वप्ने वा पञ्चदश्यां च कुर्यात् ॥
कृते पापे निष्कृतिस्तस्य चैतद्भये जाते निर्भयार्थं च कुर्यात् ।
ग्रस्ते रोगैर्बहुभिः श्रूयमाणे नित्यं कुर्यात् वैश्वदेवं तु दानम् ॥
देवागारे स्वगृहे नन्दने वा नदीतीरे रमते यत्र तत्र ।
विप्रं गुरुं वेदपुराणदक्षं संगृह्य तस्यानुमतेन कार्यम् ॥
विनायकं विप्रमुखेन देयं संपूज्य दानं विधिना समस्तम् ।
गव्येन भूमिं शकृता जलेन विलिप्य नीत्वा दशहस्तमानाम् ॥
तत्रैव लेखाश्चतस्रः समन्तात् प्राच्यश्च तिर्यक् च भवन्ति तत्र ।
नवात्र कोष्ठानि भवन्ति तेषु सकर्णिकानष्टदलान् सरोजान् ॥
कृत्वा सितैराढकतण्डुलैश्च संवेशयेत् तेषु हिरण्यदेवान् ।
विश्वाँश्च देवाञ्छरचापपाणीनष्टौ समस्तान् द्विभुजान् विधाय ॥
मध्ये महेन्द्रं मुकुटादियुक्तं वज्रायुधं शक्तिधरं निवेश्य ।
हारादिकेयूरयुतं प्रशान्तं विश्वामराणामधिकं हिरण्यात् ॥
सिंहासनस्थं जगतामधीशं शतक्रतुं दैत्यहनं सुरेन्द्रम् ।

## तेषां नामानि तु वायुपुराणे ।

क्रतुर्दक्षो वसुः सत्यः कालः काम*श्चराचरौ ।
पुरूरवा द्रवश्चैव विश्वे देवा दश स्मृताः ॥
श्राद्धेष्वेव प्रयोगोऽस्ति तेषामन्तिमयोर्द्वयोः—इति ।

प्रागादिमध्यान्तमनुक्रमेण सर्वं करोत्यासनार्घार्चनान्तम् ।
संप्रोक्ष्य कूर्चेण कुशोदकेन ऋचा तथा यजुषा वारुणेन ॥
वस्त्रैरथावेष्ट्य च वासवाय वासोयुगं सम्परिधाय चाग्रम् ।
प्रत्यङ्मुखान् प्राङ्मुख एव सर्वानाराध्य दातव्यमथ क्रमेण ॥

---

* ध्वनिरोचनी इति· न· प्र· पु· पा· ।

विप्रेण वा गुरुणा सर्वमेतत् कृत्वा मन्त्रैर्विधिना वैश्वदेवम् ।
उक्तान् देवानर्चयित्वा यथोक्तं दाता स्नात्वा तिलमिश्रैः कुशोदैः ॥
पुष्पाञ्जलिं प्रदक्षिणां चैव सार्धमभ्यर्च्य देवानथ पुष्पगन्धैः ।
धूपप्रदीपैश्च यथाक्रमेण प्रत्येकमेकं च यथाहिरण्यम् ॥
संप्रीयतां भगवान् मेति चोक्त्वा दद्याद्दष्टौ प्रेरितः सोदपूर्वम् ।
पठन् मन्त्रं गुरवे मध्यमं च संप्रीयतां मम चाप्यत्र देवः ॥
संप्रीयतां भगवान् वज्रपाणिः संप्रीयतां भगवान् दैत्यहन्ता ।
एवं कृत्वा पञ्चभिर्विप्रवर्यैः पुण्याहं च स्वस्तिमृद्धिं च वाच्यम् ॥
एतद्दानं गुरवे दक्षिणां च विश्व देवाः प्रीणयन्त्यस्य विप्राः ।

इति विश्वामरदानविधिः ।

अथ साध्यदानं ब्रह्माण्डपुराणे । सूत उवाच ।

अतः परं प्रवक्ष्यामि दानं मुनिवरोत्तमाः ।
साध्यदानमिति प्रोक्तं दानानामुत्तमोत्तमम् ॥
यथाऽऽह भगवान् पूर्वं पिता मे रोमहर्षणः ।
तथाऽऽहं च प्रवक्ष्यामि शृणुध्वं शौनकादयः ॥
आचार्यवरणादीनि सर्वं वै वैश्वदेववत् ।
तथैव हैमान् कुर्वीत साध्यान् द्वादशसङ्ख्यया ॥

वायुपुराणे ।

ब्रह्मणोऽथ मुखात् सृष्टा यथा देवाः प्रजेप्सया ।
सर्वे मन्त्रशरीरास्ते स्थिता मन्वन्तरेष्विह ॥

तथा ।

ब्रह्मशापेन ते जाताः पुनः स्वायम्भुवे जिताः ।
स्वारोचिषे वै तुषिताः सत्याश्चवोत्तमे पुनः ॥
तामसे हरयो नाम वैकुण्ठा रैवतेऽन्तरे ।

साध्याश्च चाक्षुषे नाम्ना छन्दजा जज्ञिरे सुराः ॥
धर्मपुत्रा महाभागाः स्वाध्यायां द्वादशामराः ।
मनोनुमन्ता प्राणश्च नरोऽपानश्च वीर्यवान् ॥
वृत्तिर्हयो नयश्चैव हंसो नारायणस्तथा ।
प्रसवोऽथ विभुश्चैव साध्या द्वादश जज्ञिरे ॥

स्कन्दपुराणे ।

साध्याः पद्मासनगताः कमण्डल्वक्षसूत्रिणः ।
धर्मपुत्रा महात्मानो द्वादशामरपूजिताः ॥

ब्रह्माण्डपुराणे ।

वैश्वदानवदेवात्र साध्यदाने विधिः स्मृतः ।
दाने चाभ्यर्चने मन्त्रः श्रूयतां च विशेषतः ॥
साध्येभ्यश्चेति चोक्त्वा वै देवेभ्यश्च नमस्तथा ।
संप्रीयतां मे भगवन् साध्या देवा इति ब्रुवन् ॥
एवं दद्यात् तु विप्रेभ्यो मध्यमं गुरवे तथा ।
एतत् कृत्वा तु पुरुषो नारी वा दानमादृता ॥
वैश्वदेवे च यत् प्रोक्तं फलं तत् सर्वमाप्नुयात् ।

इति साध्यदानविधिः ।

अथ द्वादशादित्यदानं ब्रह्माण्डपुराणे ।

शृणु नारद भद्रं ते दानमादित्यसंज्ञितम् ।
यथोक्तं लोकगुरुणा विष्णुना प्रभविष्णुना ॥
कर्त्तुः पापहरं पुण्यमायुष्यं श्रीकरं शुभम् ।
आरोग्यं सर्वमाङ्गल्यं दुःस्वप्नाद्भुतनाशनम् ॥
सर्वशान्तिकरं ह्येतत् सर्वसिद्धिफलप्रदम् ।

चाक्षुष्यं*, सर्वरोगघ्नं भुक्तिमुक्तिफलप्रदम् ॥
विषुवत्ययने राहुग्रहणे चन्द्रसूर्ययोः ।
जन्मर्क्षे सौरवारे वा पञ्चदश्यर्कसंक्रमे ॥
सप्तम्यां वाऽथ नक्षत्रे सावित्रेऽद्भुतदर्शने ।
दुःस्वप्नदर्शने कुर्याद्दानमादित्यसंज्ञितम् ॥
देवालये नदीतीरे तडागे वरुणालये ।
अन्येषु पुण्यदेशेषु देवदानं समाचरेत् ॥

आलिप्य वै द्वादशहस्तदैर्घ्यां क्षितिं तथा गोमयसंयुताद्भिः ।
तस्मिन् सितैस्तण्डुलपुञ्जकैश्च विस्तारयेद्द्वादश पङ्कजानि ॥
प्रादेशमात्राणि शुभानि तानि सकर्णिकान्यष्टदलेषु तेषु ।
हिरण्यरूपाणि रवेर्निधाय यथाक्रमादुत्तरतोऽपवर्गः ॥

तेषां लक्षणमुक्तं ब्रह्माण्डदाने ।

प्रत्यङ्मुखान् प्राङ्मुख एव देवाँस्तद्वर्णगन्धादिभिरर्चयित्वा ।
दद्यादपूपं सघृतं गुडाक्तं वस्त्रैरथावेष्ट्य यथाक्रमेण ॥
प्रत्येकमेकं द्विजपुङ्गवानामाराध्य गन्धादिभिरादरेण ।
संप्रीयतामित्यप्यथ क्रमेण प्रत्येकमुच्चार्य तदीयनाम ॥
धाता च मित्रश्च ततः परेण मार्त्तण्डनामा च तथाऽर्यमा च ।
शक्रश्च देवो वरुणस्तथाऽसौ भगो विवस्वान् वसवस्तथैषाम् ॥
आदित्यनामा सविता तथाऽन्यस्त्वष्टा तथैकादशमश्च तेषाम् ।
विष्णुस्तथा द्वादशमश्च मन्त्रैराराधयेद्देववरान् द्विजाँश्च ॥

पुरा देवर्षये दानं प्रोक्तं कमलयोनिना ।
तथा मयाऽपि युष्माकं प्रोक्तं मुनिवरोत्तमाः ॥

इत्यादित्यदानविधिः ।

---

* सर्वपापघ्नमिति क्वचित् पाठः ।

## अथ देवगणेशदानं ब्रह्माण्डपुराणे।

अथापृच्छन्मुनयः सूतसूनुं तदारण्ये नैमिषे सत्रिणस्ते ।
उग्रश्रवाः परिपृच्छामहे त्वां कथं मर्त्या मुच्यते रोगपूगैः ॥
तथा पृष्टो मुनिभिः सूतसूनुरुवाचेदं प्रीतिपूर्वं तदानीम् ।
यथा पुरा ऋषये नारदाय जगत्कर्त्ता चाब्रवीद्दानमेतत् ॥
शृण्वन्तु यूयं मुनयः समेता वदाम्यहं देव गणेशदानम् ।
आयुष्यमारोग्यमनन्तमुक्तिमभीष्टसिद्धिं प्रददाति कर्त्तुः ॥
कालेषु सूर्यग्रहणादिकेषु तारेषु जन्मत्रितयेषु कार्यम् ।
देशेषु देवायतनादिकेषु गृहेषु वा रमते यत्र तत्र ॥
विप्रं गुरुं वेदपुराणदक्षं संगृह्य तस्यानुमतेन कार्यम् ।
गव्येन भूमिं शकृता जलेन विलेपयेद्विंशतिहस्तमात्राम् ॥
षड्दक्षिणे प्रागपि वेदरेखास्तिर्यक्कृतैस्तण्डुलपुञ्जकैश्च ।
तस्मिन् विचित्राणि सरोरुहाणि कृत्वाऽष्टपत्राणि दशाथ पञ्च ॥

आदित्या वसवो रुद्रा विश्वेऽश्विमरुतस्तथा ।
साध्या देवास्तथा चैव सप्तमो गण उच्यते ॥
द्वौ द्वौ गणेभ्यः सप्तभ्यश्चतुर्दश सुरोत्तमान् ।
जातरूपमयान् कृत्वा कमलेषु निवेशयेत् ॥

मध्ये महेन्द्रं द्विभुजं हिरण्यं हिरण्यरूपादधिकं गणानाम् ।
वज्रायुधं दैत्यहनं किरीटकेयूरहारादिविभूषितं च ॥
प्रत्यङ्मुखान् प्राङ्मुख एव देवानादित्यवस्वादि यथा क्रमेण ।
स्वनाममन्त्रैश्च नमोऽन्तरूपैराराधयेदुत्तरतोऽपवर्गे ॥

'षड्दक्षिणे' इत्यादि दक्षिणोत्तरायताः षड्रेखाः कृत्वा प्राक्पश्चिमायताश्चतस्रश्च विधाय पञ्चदशकोष्ठानि सम्पादयेत् । तेषु तावन्ति तण्डुलमयानि कमलानि कृत्वा वक्ष्यमाणान् देवान् स्थापयेत् । तत्रादित्यवसुलक्षणमुक्तं ब्रह्माण्डदाने ।

रुद्रलक्षणमुक्तं विश्वचक्रे । एतेषां नामानि च तुलापुरुषदाने । विश्वदेवलक्षणं तन्नामानि च विश्वामरदाने । अश्विनोर्लक्षणमुक्तमश्विदाने । मरुतां लक्षणं नामानि च मरुद्दाने । साध्यानां साध्यदान इति ।

ततो महेन्द्रं जगतामधीशमाराधयेद्देवगणैः समेतम् ।
संपूज्य तस्मै गुरवे च देयं वासोयुगं काञ्चनभूषणानि ॥
ततस्त्वसौ भूषणभूषिताङ्गः संवेष्टितो वस्त्रयुगेन विप्रः ।
समर्चयेद्देवगणेशमुख्याँस्ततो होमं प्रारभेद्देवतानाम् ॥
स्नानं वस्त्रं चार्घपाद्याचमनीयं गन्धं पुष्पं धूपदीपौ हविश्च ।
दद्यादेषां मध्यमं देवदेवं समर्चयेद्विधिना शास्त्रजेन ॥
अग्निं समाधाय समूह्य दर्भैः परिस्तरेदाज्यमथो गृहीत्वा ।
संस्कृत्य दर्वीं विधिना घृतेन प्रत्येकमेकं च दशाहुतीनाम् ॥
हुत्वा गणेभ्यश्च तथाऽऽहुतीनां शतं तथा दश वाऽप्यत्र हुत्वा ।
इन्द्रस्य होमं विधिना समाप्य शेषास्तथा व्याहृतिभिः समस्ताः ॥
इत्येवमेतद्गुरुणैव कार्यं दाता स्वयं दानमथात्र कुर्यात् ।
स्नात्वा वाऽसौ गुरुणा प्रोक्षितश्च कुशोदकैः पावमानैर्यजुर्भिः ॥
प्रत्येकमेकं द्विजपुङ्गवानामाराध्य दातव्यमनुक्रमेण ।
प्रदक्षिणं देवगणैश्च सार्धं कृताञ्जलिं पुष्पयुतं च दत्त्वा ॥
सम्प्रीयतां मे ह्ययमेव चोक्त्वा ददेत् सर्वाँश्चोदकपूर्वमत्र ।
ततस्त्विदं गुरवे दापयित्वा विप्रैः स्वस्तिं पञ्चभिर्वाचयेच्च ॥
दत्त्वा तेषां दक्षिणां वाचकानां ततो विप्रान् पूजयेद्वै गुरुं च ।
तथा चैवं देवदानं च कृत्वा ततः सर्वैर्मुच्यते रोगपूगैः ॥
कृत्वा चासौ देवगणेशदानमायुष्यमारोग्यमुपैति चाग्र्यम् ।
भुक्त्वा भोगानैहिकान् पुष्कलाँश्च ततो गच्छेद्ब्रह्मलोकं विशालम् ॥
एवं पुरा गणेशाख्यं दानं मुनिवरोत्तमाः ।

उक्तं देवर्षिभिश्चैव ब्रह्मणा वा स्वयम्भुवा ॥

इति देवगणेशदानविधिः ।

अथ निम्नाभदानं ब्रह्माण्डपुराणे । सूत उवाच ।

अथापरं दानमहं प्रवक्ष्ये शृण्वन्तु सर्वे मुनयः समेताः ।
यथा पुरा ऋषये नारदाय जगत्कर्त्ता पद्मयोनिस्त्ववोचत् ॥
यत् कृत्वा वै पुरुषो वाऽथ नारी फलं चेष्टं लभते चोभयत्र ।
आयुश्च सर्वं लभतेऽथ रोगैर्विमुच्यते चान्द्रमुपैति लोकम् ॥
कालेषु सूर्यग्रहणादिकेषु संक्रम्यते तत्र च दानमेतत् ।
निम्नाभसंज्ञं तु तथैव कुर्याद्देशेषु देवायतनादिकेषु ॥
गृहेषु वा रमते यत्र तत्र द्विजाय निम्नाभमनुप्रदद्यात् ।
वैतानिकं वेदपुराणदक्षं संगृह्य विप्रं गुरुमादरेण ॥

तेनैव सर्वं विप्रेण कारयेच्चैवमादृतः ।
यजमानः स्वयं कुर्याद्दानं निम्नाभसंज्ञितम् ॥
क्षितौ गोमयलिप्तायां दक्षिणोत्तरतः समम् ।
दश पञ्च च पद्मानि कारयेत् श्वेततण्डुलैः ॥
मण्डलानि यथाशक्ति हैरण्यानि प्रकल्पयेत् ।
मण्डलत्रितयं तेषु प्रतिपद्मं निवेशयेत् ॥
आयुरादीनि तत्त्वानि शरीरे सन्ति यानि वै ।
तानि ध्यात्वाऽथ गन्धाद्यैरर्चयेन्नाममन्त्रकैः ॥

'आयुरादीनि' श्रोत्रप्रभृतीनि । श्रोत्रमायुरिति श्रुतेः ।

तेषामनुक्रमश्च ब्रह्माण्डपुराणे ।

श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणं चैवात्र पञ्चमम् ।
शब्दस्पर्शौ रूपरसौ गन्धश्चेति क्रमादमी ॥
आकाशः पवनस्तेजो जलं पृथ्वीत्यनुक्रमात् ।

इति पञ्चदशेमानि तत्त्वानि मुनयो विदुः—इति ॥
विप्रानभ्यर्च्य दातव्यं प्रत्येकं च यथाक्रमात् ।
निम्नाभदानमन्त्राँस्तु गुरुणा वाचयेच्च तान् ॥
पञ्चभिर्गुरुणा सार्धं वाचयेत् स्वस्तिवाचनम् ।
दक्षिणां च गुरोर्दद्यात् सुवर्णं चैव वाससी ॥
अथ वा पञ्चयुगलमेकैकस्यापि दापयेत् ।
सर्वं वा गुरवे दद्यात् संकल्प्य यत्र वाचनम्* ॥
यद्येकं गुरवे दद्याद्बहुभ्यश्चेतरान् ददेत् ।
अभीष्टसिद्धिं लभते कर्त्ता दानेन वाऽनघः ॥

इति निम्नाभदानविधिः ।

## अथ गणेशदानमुच्यते लिङ्गपुराणे ।

गणेशं संप्रवक्ष्यामि दानं पूर्वोक्तमण्डपे ।
सम्पूज्य देवदेवेशं लोकपालसमावृतम् ॥
विघ्नेश्वरान्† यथाशास्त्रं सर्वाभरणभूषितान् ।
दशनिष्केण वै कृत्वा सम्पूज्य विधिना ततः ॥

अत्र कुण्डमण्डपमण्डलवेदिकावितानादि लिङ्गपुराणोक्ततुलापुरुषविद्धितं वेदितव्यम् । 'देवदेवेशं' महेश्वरं सौवर्णं लोकपालयुतं सम्पूज्य परितोऽष्टदिक्षु विघ्नेशानर्चयेदिति । सप्तकोटिमन्त्रात्मकविघ्नगणानामीशत्वात् । अत एव गणेशः ।

## ते च यथा ।

अथानन्तश्च सूक्ष्मश्च शिवश्चाप्येकनेत्रकः ।
एकरुद्रस्त्रिमूर्त्तिश्च श्रीकण्ठश्च शिखण्डकः—इति ॥

---

* सफलं यत्र वाचयेदिति पुस्तकान्तरे पाठः ।
† विघ्न-इत्यत्र विद्या-इति न॰ प्र॰ पुस्तके सर्वत्र गद्यपद्यादिषूपलभ्यते ।

शिवोक्तविघ्नेशाश्चात्र गणेशाः। ते च प्रत्येकं दशनिष्कैर्विधेयाः।

तदुक्तं कामिके।

दशनिष्कसुवर्णेन निर्मिताँश्च पृथक् पृथक्।
स्वकीयावरणे चैतान् गन्धपुष्पादिभिर्गुरुः॥
प्रधाने जुहुयादीशं विघ्नेशानष्टदिक्षु च—इति।

तेषां लक्षणं तु लक्षणसमुच्चये।

कुण्डी पाशाङ्कुशं घण्टा शूलं च वामबाहुके।
शक्तिर्वज्राक्षमालासिचक्राणि दक्षिणे क चित्॥
द्वीपिचर्मधरोऽब्जस्थो नागयज्ञोपवीतवान्।
एकास्यः पञ्चवक्त्रो वा त्र्यक्षो जटेन्दुभृच्छिवः॥
अनन्ताद्याश्चतुर्दिक्षु रक्तनीलसितारुणाः।
कोणेषु चैकरुद्राद्याः सितासृग्नीललोहिताः॥
सर्वे चाष्टभुजा योज्याश्चतुरास्या जटान्विताः।
शिवायुधधरास्त्र्यक्षाः सृण्य*सिभ्यां विना क चित्॥
दिग्वर्णा जटिलास्त्र्यक्षाः पूर†त्रिशूलधारिणः।
पुटाञ्जलिकराः सर्वे विघ्नेशाश्चैकवक्त्रकाः॥

लोकपाललक्षणमुक्तं ब्रह्माण्डदाने।

अष्टदिक्ष्वष्टकुण्डेषु पूर्ववद्धोममाचरेत्।
पञ्चावरणमार्गेण पारम्पर्यक्रमेण च॥

'पूर्ववदिति' लिङ्गपुराणोक्ततुलापुरुषवदित्यर्थः।

सप्त विप्रान् समभ्यर्च्य कन्यामेकां तथोत्तरे।
दापयेत् सर्वतन्त्राणि स्वैः स्वैर्मन्त्रैरनुक्रमात्॥

---

* सृणिरङ्कुशः।
† पूरेति बीजपूरम्।

दत्त्वैवं सर्व्वपापेभ्यो मुच्यते नात्र संशयः ।

पञ्चब्रह्माद्यैः पञ्चावरणैर्युक्तस्य शिवस्यार्चनं मध्ये प्रधानकुण्डे होमश्च दिक्कुण्डेषु तु विघ्नेशानामात्मीयपञ्चावरणैर्गुरुपरम्परोपदिष्टैर्युक्तानां होमः । ईशानादिसप्तदिक्षु सप्तविप्रान् उत्तरस्यां दिश्येकां कन्यामभ्यर्च्य कन्याष्टमेभ्यो विप्रेभ्यः स्वस्वमन्त्रेण सर्वतन्त्राणि सर्वमन्त्रमयान् विघ्नेशान् दद्यादित्यर्थः । दापयेत् सर्वविघ्नेशानिति पाठः ।

तेभ्यः प्रदद्याद्विघ्नेशान् स्वस्वमन्त्रैरनुक्रमात् ।

इति कामिकोक्तेः ।

पञ्चावरणपूजा तु वायुसंहितोक्ता ग्राह्या ।

परीक्ष्य भूमिं विधिवद्गन्धवर्णरसादिभिः ।
मनोऽभिलषिते तत्र वितानविततामरे ॥
सुलिप्ते च महीपृष्ठे दर्पणोदरसन्निभे ।
प्राचीमुत्पादयेत् पूर्वं शास्त्रदृष्टेन वर्त्मना ॥
एकहस्तं द्विहस्तं वा मण्डलं परिकल्प्य तु ।
आलिखेद्विपुलं पद्ममष्टपत्रं सकर्णिकम् ॥
रक्तचूर्णादिभिश्चूर्णैर्यथासम्भवसम्भृतैः ।
प्रतिवारुणसंयुक्तं बहुशोभासमन्वितम् ॥
दलेषु सिद्धयः कल्प्याः केसरेषु सशक्तिकाः ।
रुद्रा वामा*दयस्त्वष्टौ पूर्वादि परितः क्रमात् ॥
कर्णिकायां तु† वैरूप्यं बीजेषु नव शक्तयः ।
कन्दे शिवात्मको धर्मो नाले ज्ञानं शिवाश्रयम् ॥
कर्णिकोपरि वाऽऽग्नेयं मण्डलं सौरमैन्दवम् ।
शिवविद्यात्मतत्त्वाख्यं तत्त्वत्रयमतः परम् ॥

---

* रामादय इति क्व चित् पाठः ।

† वैराग्यमिति पुस्तकान्तरे पाठः ।

सर्वासनोपरिमुखं विचित्रकुसुमान्वितम् ।
परव्योमावकाशे च विद्ययाऽतीव भासुरम् ॥
परिकल्प्यासनं मूर्त्तिमावाह्य परमेश्वरम् ।
पञ्चवर्णस्वमार्गेण पूजयेदम्बया सह ॥
शुद्धस्फटिकसंकाशं प्रसन्नं शीतलद्युतिम् ।
विद्युद्वलयसंकाशं जटामुकुटभूषितम् ॥
दिव्यायुधवरैर्युक्तं दिव्यगन्धानुलेपनम् ।
शार्दूलचर्मवसनं किञ्चित्स्मितमुखाम्बुजम् ॥
रक्तपद्मदलप्रख्यपादपाणितलाधरम् ।
सर्वलक्षणसंपन्नं सर्वाभरणभूषितम् ॥
पञ्चवक्त्रं दशभुजं चन्द्रखण्डशिखामणिम् ।
अत्यपूर्वमुखं सौम्यं बालार्कसदृशप्रभम् ॥
त्रिलोचनारविन्दाढ्यं बालेन्दुकृतशेखरम् ।
दक्षिणं नीलजीमूतसमानरुचिरप्रभम् ॥
भृकुटीकुटिलं घोरं रक्तवृत्तत्रिलोचनम् ।
दंष्ट्राकरालदुर्धर्षं स्फुरिताधरपल्लवम् ॥
उत्तरं* विद्रुमप्रख्यं नीलालकविभूषितम् ।
सविलासत्रिनयनं चन्द्राभरणशेखरम् ॥
पश्चिमं पूर्णचन्द्राभं लोचनत्रितयोज्ज्वलम् ।
अतीवसौम्यमुत्फुल्ललोचनत्रितयोज्ज्वलम् ॥
दक्षिणे शूलपरशुवज्रखड्गानलोज्ज्वलम् ।
चन्द्ररेखाधरं सौम्यं मन्दस्मितमनोहरम् ॥
पञ्चमं स्फटिकप्रख्यमिन्दुरेखासमुज्ज्वलम् ।

---

* उत्तममिति क्व चित् पाठः ।

सव्ये च नागनाराचघण्डापाशाङ्कुशोज्ज्वलम् ॥
निवृत्त्या जानुसम्बद्धमानाभिं च प्रतिष्ठया ।
आकण्ठं विद्यया तद्वदाललाटं तु शान्तया ॥
तदूर्ध्वं शान्त्यतीताख्यकलया वरया तथा ।
पञ्चाध्वव्यापिनं तस्मात् कलापञ्चकविग्रहम् ॥
ईशानमुकुटं देवं पुरुषाख्यं पुरातनम् ।
अघोरहृदयं तद्वद्वामगुह्यं महेश्वरम् ॥
सद्यमाद्यं च तन्मूर्त्तिमष्टत्रिंशत्कलामयम् ।
मातृकामयमीशानं पञ्चब्रह्ममयं ततः ॥
ॐकाराख्यमयं चैव हंसं शक्त्या समन्वितम् ।
पञ्चाक्षरमयं देवं षडक्षरमयं तु वा ॥
अङ्गषट्कयुतं चैव जातिषट्कसमन्वितम् ।
तथेच्छात्मिकया शक्त्या* समारूढकमण्डलुम् ॥
ज्ञानाख्यया दक्षिणतो वामतश्च क्रियाख्यया ।
तत्त्वत्रयमयं साक्षाद्विद्यामूर्त्तिं सदाशिवम् ॥
मूर्त्तित्वेनैव संकल्प्य सकलीकृत्य च क्रमात् ।
सम्पूज्य च यथान्यायमर्घान्तं मूलविद्यया ॥
मूर्त्तिमन्तं शिवं साक्षाच्छक्त्या परमया सह ।
तत्रावाह्य महादेवं सदसद्व्यक्तिवर्जितम् ॥
पञ्चोपचारणं कृत्वा पूजयेत् परमेश्वरम् ।
ब्रह्मभिश्च षडङ्गैश्च तथा मातृकयाऽपि च ॥
प्रणवेन शिवेनैव शक्तियुक्तेन च क्रमात् ।

---

* भक्त्येति न· प्र· पु· पाठः ।

शान्तेन च तथाऽन्यैश्च देवमन्त्रैश्च कृत्स्नशः ॥
पूजयेत् परमं देवं केवलेन शिवेन वा ।
सद्यादिमुखमीशानं कृत्वाऽथ स्नपनं विना ॥
पञ्चावरणपूजां तु प्रारभेत् तु यथाक्रमम् ।
तत्रादौ शिवयोः पार्श्वे दक्षिणे वामतः क्रमात् ॥
गन्धाद्यैरर्चयेत् पूर्वं देवौ हेरम्बषण्मुखौ ।
ततो ब्रह्माणि परित ईशानादि यथाक्रमम् ॥
सशक्तिकानि सद्यान्तं प्रथमावरणे यजेत् ।
षडङ्गान्यपि तत्रैव हृदयादीन्यनुक्रमात् ॥
शिवस्य च शिवायाश्च वामादिषु समर्चयेत् ।
तत्र वामादिकान्* रुद्रानष्टौ वामादिशक्तिभिः ॥
अर्चयेद्वा न वा पश्चात् पूर्वादिपरितः क्रमात् ।

षडङ्गानि वामादिरुद्राश्च तत्रैव दर्शिताः ।

हृदयं च शिरश्चैव शिखा वर्म च नेत्रकम् ।
अस्त्रमि†त्येवमुक्तानि षडङ्गानि मनीषिभिः ॥
वामो ज्येष्ठस्तथा रुद्रः कालो विकरणस्तथा ।
बलविकरणश्चैव बलप्रथमनस्तथा ॥
सर्वभूतस्य दमनस्तादृशाश्चाष्टशक्तयः ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥
अनन्तं पूर्वदिक्पत्रे शक्त्या सह शिवोत्तमम् ।
तत्रैवोत्तरदिक्पत्रे एकनेत्रं समर्चयेत् ॥

---

* रामादिकानिति क्व चित् पाठः । एवं ८२१ । ८२८ पत्रे च सर्वत्र वामस्थाने-राम इति पाठः पुस्तकान्तरे ।

† स्वस्तिमित्येवमिति पुस्तकान्तरे ।

एकनेत्रं च तच्छक्तिं पश्चादीशानदिग्दले ।
त्रिमूर्त्तिं तस्य शक्तिं च पूजयेदग्निदिग्दले ॥
श्रीकण्ठं नैर्ऋते पत्रे तच्छक्तिं तस्य वामतः ।
अथैव मारुते पत्रे शिखण्डीशं समर्चयेत् ॥
प्रथमावरणे चेज्या न वा ते चक्रवर्त्तिनः ।
तृतीयावरणे पूज्याः शक्तिभिश्चाष्टमूर्त्तयः ॥
अष्टासु क्रमशो दिक्षु पूर्वादिपरितः प्रभोः ।
भवः शर्वस्तथेशानो रुद्रः पशुपतिस्तथा ॥
उग्रो भीमो महादेव इत्यष्टौ मूर्त्तयः क्रमात् ।
अन्तरान्तरतश्चैषां महादेवादयः क्रमात् ॥
शक्तिभिः सह संपूज्यास्तत्रैकादश मूर्त्तयः ।
महादेवः शिवो रुद्रः शङ्करो नीललोहितः ॥
ईशानो विजयो भीमो देवदेवो भवोद्भवः ।
कपालीशश्च कथ्यन्ते तथैकादश शक्तयः ॥
तत्रःष्टौ प्रथमं पूज्या वाह्येयादि यथाक्रमम् ।
देवदेवः पूर्वपत्रमाशान्यामग्निगोचरे ॥
भवोद्भवस्तयोर्मध्ये कपालीशस्ततः परम् ।
तस्मिन्नावरणे भूयो वृषेन्द्रं पुरतो यजेत् ॥
नन्दिनं दक्षिणे तस्य महाकालं तथोत्तरे ।
शास्तारं वह्निदिक्पत्रे मातृर्दक्षिणदिग्दले ॥
गजास्यं नैर्ऋते पत्रे षण्मुखं वारुणे ततः ।
ज्येष्ठां वायुदले गौरीमुत्तरे चण्डमैश्वरे ॥
शास्तृनन्दीशयोर्मध्ये मुनीन्द्रं वृषभं यजेत् ।
महाकालस्योत्तरतः पिङ्गलं तु समर्चयेत् ॥

शास्तृमातृसमूहस्य मध्ये भृङ्गीश्वरं ततः ।
मातृविघ्नेशमध्ये तु वीरभद्रं समर्चयेत् ॥
स्कन्दविघ्नेशयोर्मध्ये यजेद्देवीं सरस्वतीम् ।
ज्येष्ठाकुमारयोर्मध्ये महामोदीं समर्चयेत् ॥
गणाम्बाचण्डयोर्मध्ये देवीं दुर्गां समर्चयेत् ।
तत्रैवावरणे भूयः शिवानुचरसंहतिम् ॥
रुद्रप्रथम*भूवाख्यां त्रिविधां च स्वशक्तिकाम् ।
शिवायाः सखीवर्गं च यजेद्ध्यात्वा समन्ततः ॥
एवं तृतीयावरणे वितते पूजिते सति ।
चतुर्थावरणं ध्यात्वा बहिस्तस्य समर्चयेत् ॥
भानुः पूर्वदले पूज्यो दक्षिणे चतुराननः ।
रुद्रो वरुणदिक्पत्रे विष्णुरुत्तरदिग्दले ॥
चतुर्णामपि देवानां पृथगावरणान्यथ ।
तत्पूजानन्तरं कुर्यात् तच्छास्त्रोक्तप्रकारतः ॥
अथ वा भानुमभ्यर्च्य प्रथमावरणे यजेत् ।
तस्यात्मनि षडेवादौ दीप्ताद्याभिश्च शक्तिभिः ॥
दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला क्रमात् ।
अमोघा विद्युता चैव पूर्वादिपरितः स्थिताः ॥
द्वितीयावरणे पूज्याश्चतस्रो मूर्त्तयः क्रमात् ।
पूर्वाद्युत्तरपर्यन्ताः शक्तयश्च ततः परम् ॥
आदित्यो भास्करो भानू रविश्चेत्यनुपूर्वशः ।
अर्को ब्रह्मा तथा रुद्रो विष्णुश्चैवं विवस्वतः ॥
विस्तारा पूर्वदिग्भागे सुतारा दक्षिणे स्थिता ।

---

* प्रथमभूराख्यामिति पुस्तकान्तरे पाठः ।

बोधनी पश्चिमे भागे आप्या यदुत्तरे पुनः ॥
उषां प्रभां तथा प्रज्ञां सन्ध्यामपि* ततः परम् ।
ईशानादिषु कोणेषु द्वितीयावरणे यजेत् ॥
सोममङ्गारकं चैव बुधं बुद्धिमतां वरम् ।
बृहस्पतिं बृहद्बुद्धिं भार्गवं तेजसां निधिम् ॥
शनैश्चरं तथा राहुं केतुं धूम्रं भयङ्करम् ।
समन्ततो यजेदेताँस्तृतीयावरणे क्रमात् ॥
अथ वा द्वादशादित्यान् द्वितीयावरणे यजेत् ।
तृतीयावरणे चैव राशीन् द्वादश पूजयेत् ॥
सप्तसप्तगणाँश्चैव बहिरस्य समन्ततः ।
ऋषीन् देवाँश्च गन्धर्वान् पन्नगाँश्चाप्सरोगणान् ॥
ग्रामण्यश्च तथा यक्षं यातुधानाँस्तथा हयान् ।
सप्तच्छन्दोमयाँश्चैव वालखिल्याँश्च पूजयेत् ॥
एवं त्र्यावरणं देवं समभ्यर्च्य दिवाकरम् ।
ब्रह्माणमर्चयेत् पश्चात् त्रिभिरावरणैः सह ॥
हिरण्यगर्भं पूर्वस्यां विराजं दक्षिणे ततः ।
कालं पश्चिमदिग्भागे पुरुषं चोत्तरे यजेत् ॥
हिरण्यवर्णः प्रथमो ब्रह्मा कमलसन्निभः ।
कालो जात्याऽञ्जनप्रख्यः पुरुषः स्फटिकोपमः ॥
त्रिगुणो राजसश्चैव तामसः सात्त्विकस्तथा ।
चत्वार एते क्रमशः प्रथमावरणे स्थिताः ॥
द्वितीयावरणे पूज्याः पूर्वादिपरितः क्रमात् ।
सनत्कुमारः सनकः सनन्दश्च सनातनः ॥

---

* साध्यामपीति क्व चित् पाठः ।

तृतीयावरणे पश्चादर्चयेत प्रजापतीन् ।
अष्टौ पूर्वांस्तु पूर्वांत्रीन् प्राक्पश्चादुत्तरक्रमात् ॥
दक्षो रुचिर्भृगुश्चैव मरीचिश्च ततोऽङ्गिराः ।
पौलस्त्यः पुलहश्चैव क्रतुरत्रिश्च कश्यपः ॥
वशिष्ठश्चेति विख्याताः प्रजानां पतयस्त्विमे ।
तेषां भार्याश्च तैः सार्धं पूजनीया यथाक्रमम् ॥
प्रसूतिश्च तथाऽऽकूतिः ख्यातिः सम्भूतिरेव च ।
स्मृतिः प्रीतिः क्षमा चैव सन्ततिश्चानसूयका ॥
देवमाताऽरुन्धती च सर्वाः खलु पतिव्रताः ।
शिवार्चनरता नित्यं श्रीमत्यः प्रियदर्शनाः ॥
प्रथमावरणे वेदांश्चतुरो वाऽस्य पूजयेत् ।
इतिहासपुराणानि द्वितीयावरणे पुनः ॥
तृतीयावरणे पश्चात् धर्मशास्त्रपुरःसराः ।
वैदिका निखिला विद्याः पूज्या एव समन्ततः ॥
पूर्वादिपरितो वेदास्तदन्ये तु यथारुचि ।
अष्टधा वा चतुर्धा वा कृत्वा पूज्य समन्ततः ॥
एवं ब्रह्माणमभ्यर्च्य त्रिभिरावरणैर्युतम् ।
दक्षिणे पश्चिमे पश्चाद्रुद्रं सावरणं यजेत् ॥
तस्य ब्रह्मषडङ्गानि प्रथमावरणं स्मृतम् ।
द्वितीयावरणं चैव विद्येश्वरमयं तथा ॥
तृतीयावरणे भेदो विद्यते स तु कथ्यते ।
चतस्रो मूर्त्तयस्तस्याः पूज्याः पूर्वादिभिः क्रमात् ॥
त्रिगुणः सकलो देवः पुरस्ताच्छिवसंज्ञकः ।
राजसो दक्षिणे ब्रह्मा सृष्टिकृत् पूज्यते सदा ॥

तामसः पश्चिमे वाऽग्निः पूज्यः संहारको हरः ।
सात्त्विकः सुखकृत् सौम्यो विष्णुर्विश्वपतिर्मृडः ॥
एवं पश्चिमदिग्भागे शम्भोः षड्विंशकं शिवम् ।
समभ्यर्च्योत्तरे भागे ततो वैकुण्ठमर्चयेत् ॥
वासुदेवं पुरस्तस्य प्रथमावरणे यजेत् ।
अनिरुद्धं दक्षिणतः प्रद्युम्नं पश्चिमे ततः ॥
सौम्ये संकर्षणं पश्चादत्र तौ वा यजेदिमौ ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥
मत्स्यः कूर्मो वराहश्च नारसिंहश्च वामनः ।
रामेष्वन्यतमः कृष्णो भवानश्वमुखोऽपि च ॥
तृतीयावरणे चैकं पूर्वभागे समर्चयेत् ।
नारायणाख्यं*याम्येऽस्त्रं क चिदव्याहतं यजेत् ॥
पश्चिमे पाञ्चजन्यं च शार्ङ्गं धनुरथोत्तरे ।
एवं त्र्यावरणं साक्षाद्विष्णवाख्यं परमं हरिम् ॥
महाविष्णुं सदा विष्णुं मूर्त्तिं कृत्य समर्चयेत् ।
इत्थं चतुश्चतुर्व्यूहं क्रमान्मूर्त्तिचतुष्टयम् ॥
पूजयित्वा तु तच्छक्तोश्चतस्रः पूजयेत् क्रमात् ।
प्रभामाग्नेयदिग्भागे नैर्ऋते तु सरस्वतीम् ॥
गणाम्बिकां च वायव्ये लक्ष्मीं रौद्रे समर्चयेत् ।
एवं† भान्वादिमूर्त्तीनां तच्छक्तीनामनन्तरम् ॥
पूजां विधाय लोकेशाँस्तत्रैवावरणे यजेत् ।
इन्द्रमग्निं यमं चैव नैर्ऋतं वरुणं तथा ॥

---

* नाराचाख्यं चेति क्व चित् पाठः ।

† भवादिमूर्त्तीनामिति क्व चित् पाठः ।

वायुं सोमं कुबेरं वा पश्चादीशानमर्चयेत् ।
एवं चतुर्थावरणं पूजयित्वा विधानतः ॥
आयुधानि महेशस्य पश्चाद्बाह्यं समर्चयेत् ।
श्रीमत्त्रिशूलमैशाने वज्रं माहेन्द्रदिङ्मुखे ॥
परशुं वह्निदिग्भागे याम्ये सायकमर्चयेत् ।
नैर्ऋते तु यजेत् खड्गं पाशं वरुणगोचरे ॥
अङ्कुशं मारुते भागे पिनाकं चोत्तरे यजेत् ।
एवमावरणं चैवं संपूज्यानन्तरं बहिः ॥
पश्चिमाभिमुखं रौद्रे क्षेत्रपालं समर्चयेत् ।
सर्वावरणदेवानां बहिर्वा पश्चिमेऽथ वा ॥
पञ्चगोमातृभिः सार्धं महोक्षपुरतो यजेत् ।
नन्दा सुभद्रा सुरभी सुशीला सुमनास्तथा ॥
पञ्च गोमातरस्त्वेताः शिवलोके व्यवस्थिताः ।
ततः समन्ततः पूज्याः सर्वा वै देवयोनयः ॥
खेचरा ऋषयः सिद्धा दैत्या यक्षाश्च राक्षसाः ।
अनन्ताद्याश्च नागेन्द्रा नागैस्तत्र कुलोद्भवैः ॥
डाकिनीभूतवेतालप्रेतभैरवनायकाः ।
पातालवासिनश्चान्ये नानायोनिषु सम्भवाः ॥
नद्यः समुद्रा गिरयः काननानि सरांसि च ।
पशवः पक्षिणो वृक्षाः कीटाद्याः क्षुद्रयोनयः ॥
नराश्च विविधाकारा मृगाश्च क्षुद्रयोनयः ।
भुवनान्यन्तरण्डस्य ततो ब्रह्माण्डकोटयः ॥
बहिरण्डानि सङ्ख्यानि भुवनानि सहाधिपैः ।
ब्रह्माण्डधारका रुद्रा दशदिक्षु व्यवस्थिताः ॥

यद्गीर्णं यच्च माहेयं* यद्वा शाक्यं ततः परम् ।
यत् किञ्चिदर्थं शब्दस्य वाक्यं चिदचिदात्मकम् ॥
तत् सर्वं शिवयोः प्रान्ते बुद्ध्वा सामान्यतो यजेत् ।
कृताञ्जलिपुटाः सर्वे चिन्त्याः स्मितमुखास्तथा ॥
सादरं प्रेक्ष्यमाणाश्च देवं देवीं च सर्वदा ।
इत्थमावरणान्यर्च्य कृत्वाऽप्यक्षेमशान्तये ॥
पुनरभ्यर्च्य देवेशं पञ्चाक्षरमुदीरयेत् ।
निवेदयेत् ततः पश्चाच्छिवयोरमृतोपमम् ॥
सरसव्यञ्जनं शुद्धं† षट्प्रकारं महाचरुम् ।
द्वात्रिंशदाढकैर्मुख्यमध्यमं‡ त्वाढकावरम् ॥
साधयित्वा यथासम्पत् श्रद्धया विनिवेदयेत् ।
ततो निवेद्य पानीयं ताम्बूलं चोपदंशकैः ॥
नीराजनादिकं कृत्वा पूजाशेषं समापयेत् ।
योगोपयोगिद्रव्याणि विशिष्टान्येव साधयेत् ॥
वित्तशाठ्यं न कुर्वीत बुद्धिमान् विभवे सति ।
शिवस्योपेक्षकस्यापि व्यङ्गं चाप्यनुतिष्ठतः ॥
न फलन्त्येव काम्यानि कर्माणीति सतां कथा ।
तस्माच्छाठ्यमुपेक्षां च त्यक्त्वा सर्वाङ्गयोगतः ॥
कुर्यात् काम्यानि कर्माणि फलसिद्धिं यदिच्छति ।
इत्थं पूजां समाप्याथ देवं देवीं प्रणम्य च ॥
भक्त्या पूजां समाधाय ततस्तोत्रमुदीरयेत् ।

---

* मायेयमिति न॰ प्र॰ पु॰ पाठः ।
† सर्वषट्प्रकारमिति क्व चित् पाठः ।
‡ मधममिति क्व चित् पाठः ।

ततस्तोत्रजपस्यान्ते त्वष्टोत्तरशतं वरम् ॥
जपेत् पञ्चाक्षरीं विद्यां सहस्रोत्तरमुत्सुकः ।
*दद्यात् पूजां गुरोः पूजां कृत्वा पश्चात् यथाक्रमम् ॥
यथोदयं यथाश्रद्धं सदस्यानपि पूजयेत् ।
तत उद्वास्य देवेशं सर्वैरावरणैः सह ॥
मण्डलं गुरवे दद्याद्योगोपकरणैः सह ।
शिवाश्रितेभ्यो दद्याद्वा सर्वा एवानुरूपतः ॥
अथ वा तच्छिवायैव शिवक्षेत्रे समर्पयेत् ।
शिवाग्नौ वा यजेद्देवं होमद्रव्यैस्तु सप्तभिः ॥
समभ्यर्च्य यथापूर्वं सर्वावरणदेवताः ।
एष योगेश्वरो नाम त्रिषु लोकेषु विश्रुतः ॥
तस्मादभ्यधिकः कश्चिद्योगोऽस्ति भुवने क्व चित् ।
न तदस्मिन् जगत्यस्मिन्नसाध्यं यदनेन तु ॥
ऐहिकं वा फलं किञ्चिदामुष्मिकमथापि वा ।
इदमस्य फलं नेदमिति नैव नियम्यते ॥
श्रेयोरूपस्य कृत्स्नस्य यदिदं श्रेष्ठसाधकम् ।
इदं तु शक्यते वक्तुं पुरुषेण यदर्थ्यते ॥
चिन्तामणिरिवैतस्मात् तत् तेन प्राप्यते फलम् ।

इति गणेशदानविधिः ।

## अथ मरुद्दानं ब्रह्माण्डपुराणे ।

अथातः संप्रवक्ष्यामि शृणुध्वं मुनिसत्तमाः ।
मरुद्दानमिति प्रोक्तं सर्वपापप्रणाशनम् ॥
पुरा देवयुगे देवो ब्रह्मा लोकपितामहः ।

---

* विद्यापूजामिति क्व चित् पाठः ।

ऋषिणा नारदेनेदं पृष्टः प्रोवाच नारदम् ॥
शृणु नारद भद्रं ते दान सर्वफलप्रदम् ।
यद्यत् कामयते दाता तत् तत् फलमुपाश्नुते ॥
पुण्यकालेषु सर्वेषु जन्मर्क्षेषु विशेषतः ।
पुण्यदेशेषु सर्वेषु गृहे वा दानमाचरेत् ॥
देवा एकोनपञ्चाशद्देवेन्द्रसमतेजसः ।
भ्रातरः पुरुहूतस्य मरुतः सूर्यवर्चसः ॥
किरीटहार*केयूरकटकादिविभूषिताः ।
खड्गचर्मधरा नित्यं शक्रस्यानुचराः सदा ॥
तेषां तु प्रतिरूपाणि जातरूपेण कारयेत् ।
तेषां दानानि तत् सर्वं विप्रेणैव समाचरेत् ॥
शुचौ देशे समां भूमिं लिप्य गोमयवारिणा ।
दक्षिणोत्तरतो विद्याल्लेखाः षट् तत्र ताः समाः ॥
प्रागेकादश लेखाः स्युः पञ्चाशत्कोष्ठमुच्यते ।
चतुरस्राः समाः सर्वे हस्तत्रितयसम्मिताः ॥
कोष्ठे मध्यमवीथ्यां वै षष्ठे चोत्तरतः स्थितम् ।
इन्द्रस्यासनमित्युक्तमितरे मरुतस्तथा ॥

कोष्ठेषु सर्वेषु सरोरुहाणि कृत्वा सितैस्तण्डुलमण्डलैश्च ।
पद्मानि देवासनमारभेत संस्थापयेत् तेषु यथाक्रमेण ॥

अत्र दक्षिणोत्तरतो रेखाषट्कमालिख्य पूर्वपश्चिमायताभिरेकादशरेखाभिः पञ्चाशत्कोष्ठनिष्पत्तिः स्यात् । तत्र मध्यमवीथ्यामुत्तरतः षष्ठे कोष्ठके इन्द्रासनमुत्तरेऽवशिष्टकोष्ठकाः ।

---

* हार इति पाठान्तरं पुस्तकान्तरे ।

मरुतामासनं मरुन्नामानि तु वायुपुराणे ।

ततस्तेषां तु नामानि मातापित्रोः प्रचक्रतुः ।
तद्विधैः कर्मभिश्चैव मरुतान्तो पृथक् पृथक् ॥
शुक्रज्योतिस्तथाऽऽदित्यः चित्रज्योतिस्तथाऽपरः ।
सत्यज्योतिश्च ज्योतिष्मान सत्यहा ऋतपास्तथा ॥
प्रथमोऽयं गणः प्रोक्तो द्वितीयं तु निबोधत ।
ऋतजित् सत्यजिच्चैव सुषेणः सेनजित् तथा ॥
अन्तिमित्रो ह्यमित्रश्च दूरेमित्रस्तथा परः ।
गण एष द्वितीयस्तु तृतीयोऽयं निबोधत ॥
ऋतः सत्यो ध्रुवो धर्त्ता विधर्त्ताऽथ विधारयः ।
धरुणश्च तृतीये तु चतुर्थं मे निबोधत ॥
ध्वान्तश्च धुनितश्चैव सभरश्च तथा गणः ।
ईदृक्षासः पुरुषश्चैव अन्यादृक्षास एतनः ॥
संमिताः समदृक्षासः प्रतिदृक्षास वै गणः ।
मरुतेन्द्रः सभरसः तथा देवविशोऽपरः ॥
यज्ञश्चैवानुवर्त्मानस्तथाऽन्यो मानुषीविशः ।
दैत्यदेवाः समाख्याताः सप्तैते सप्तका गणाः ॥
एते ह्येकोनपञ्चाशन्मरुतो नामतः स्मृता—इति ।

प्रागादिपूर्वोत्तरमत्र चैवं सर्वाणि कृत्यानि च कारयित्वा ।
वस्त्रैरथावेष्ट्य कुशोदकैश्च संप्रोक्ष्य तल्लिङ्गयुतैर्यजुर्भिः ॥
मध्ये महेन्द्रस्त्रिगुणेन हेम्ना वज्रायुधः शक्तिधरः किरीटी ।
हारादिकेयूरविभूषिताङ्गो देवाधिपो लोकपतिः प्रशान्तः ॥

कार्य इति अध्याहार्यम् ।

अभ्यर्च्य देवान् मरुतश्च पूर्वमनन्तरं विप्रवराँस्तथैव ।

प्रत्येकमेव प्रददेत् तु तेषां प्रदक्षिणं चोत्तरपूर्वमेव ॥
प्राप्ते शुभे पुण्यकालेऽथ दाता स्नात्वा ततस्तिलमिश्रैः कुशोदैः ।
प्रदक्षिणं पुष्पगृहीतहस्तः कृत्वा तु विप्रेण सहैव सर्वान् ॥
प्रणम्य पुष्पाञ्जलिना च सर्वं प्रदापयेद्देवगणं क्रमेण ।
प्रत्येकमेवं द्विजपुङ्गवानां प्रणम्य मन्त्रं समुदाहरेद्वै ॥
वृणोति देवं मरुतां तथैकं मयि प्रभो देव कुरु प्रसादम् ।
तव प्रसादादघनाशनं मे सौवर्णरूपास्तु सदाऽमरेशाः ॥
इत्येवमुक्त्वा मरुतः प्रदाय ततो महेन्द्रं प्रददेच्च देवम् ।
यः कारयेद्विप्रवरस्तु तस्मै स्वस्तीति विप्राश्च पुरोऽभिधाय ॥

ततः संपूज्य गुरवे दक्षिणां च यथोचिताम् ।
स्वस्तिवाचकविप्राणां दक्षिणां च यथार्हतः ॥

त्रैलोक्यराजो जगतामधीशो देवाधिपो दैत्यगणाभिहन्ता ।
श्रेयांसि मह्यं प्रददातु देवो देवाग्रजो वज्रधरः प्रशान्तः ॥

इत्युच्चार्य ततो दद्याद्देवं वज्रधरं हरिम् ।
पूजायामपि शक्रस्य मन्त्र एष प्रकीर्त्तितः ॥
य एवं कुरुते दानं मरुतां विधिपूर्वकम् ।
स सर्वकामसंपन्नो देववद्दिवि मोदते ॥
यथोक्तं ब्रह्मणा वेदं नारदाय सुरर्षये ।
तथा मयाऽपि वः सर्वं प्रोक्तं वै मुनिसत्तमाः ॥

इति मरुद्दानविधिः ।

अथ भुवनप्रतिष्ठाविधिः । भविष्योत्तरे । युधिष्ठिर उवाच ।

प्रतिष्ठा शाश्वती केन दानेन मधुसूदन ।
इह लोके परे चैव कीर्त्तिः स्याद्द्भुता तथा ॥

सद्गतिं च यथा यान्ति सर्वे पितृपितामहाः ।
सन्ततिश्चाक्षया लोके विभवश्चापि पुष्कलः ॥
स्थापनं सर्वदेवानां कथं स्याद्यदुनन्दन ।
तदाचक्ष्व महाभाग दानेन नियमेन वा ॥

श्रीकृष्ण उवाच ।

साधु पृष्टं त्वया राजन् लोकानामुपकारकम् ।
शृणुष्वैकमना भूत्वा गुह्यं परममुत्तमम् ॥
भुवनानां समासेन प्रतिष्ठा कथयामि ते ।
देवासुरास्तथा नागा गन्धर्वा यक्षराक्षसाः ॥
प्रेताः पिशाचा भूताश्च स्थापिताश्च न संशयः ।
कारकस्यानुकूले तु मुहूर्त्ते विजये शुभे ॥
पुण्ये तिथौ शिवे ऋक्षे दिने सौम्यग्रहान्विते ।
सप्तहस्तं पटं कृत्वा चतुरस्रं सुसंहतम् ॥
भिन्नाङ्गं सुदृढं शुद्धं शुद्धस्फटिकवर्चसम् ।
तस्मिन् सर्वाणि राजेन्द्र भुवनानि लिखापयेत् ॥
चतुर्वर्णकमानीय विचित्रं चित्रकर्मणि ।
युवानं व्याधिरहितं भव्यं चित्रकरं शुभम् ॥
संपूजयित्वा यत्नेन पुष्पवासोविभूषणैः ।
तस्मिन् कर्मणि युञ्जीत पठमानो द्विजोत्तमैः ॥
शङ्खभेरीनिनादैश्च गीतमङ्गलनिःस्वनैः ।
पुण्याहजयघोषैश्च ब्राह्मणान् पूज्य यत्नतः ॥
आचार्यमपि संपूज्य वासोभिर्भूषणैस्तथा ।
प्रारम्भं कारयेद्राजन् पटे तस्मिन् यथोदितम् ॥
पौराणं विधिमास्थाय भुवनानि यथाक्रमम् ।

मध्ये लिखापयेद्राजन् जम्बूद्वीपं सविस्तरम् ॥
तस्य मध्ये स्थितो मेरुर्मेरोरुपरि देवताः ।
दिशासु लोकपालानां पुर्योऽष्टौ सुरसंयुताः ॥
सप्तद्वीपवती पृथ्वी सप्त चैव कुलाचलाः ।
सागराः सप्त एवात्र नद्यो ह्रदाः ससिन्धवः ॥
पातालाः सप्त वा चैव सप्त स्वर्गविभूतयः ।
ब्रह्मविष्णुशिवादीनां भुवनानि यथाक्रमम् ॥
ध्रुवमार्गस्तथाऽऽदित्यो ग्रहतारागणैर्वृतः ।
देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥
ऋषयो मुनयो गावो देवमातर एव च ।
सुपर्णाद्याश्च विहगा नागाश्चैरावतादयः ॥
दिग्गजाष्टकमत्रैव लेखयेद्रत्नमण्डितम् ।
एवंविधं पटं राजन् कारयित्वा सुशोभनम् ॥
दशोत्तरेण पयसा एतत् सर्वं समावृतम् ।
तत् तेजसाऽऽवृतं भूयो महतोग्रेण सर्वशः ॥
तेजस्तु वायुना वायुराकाशेन समावृतः ।
भूतादिना तथाऽऽकाशं भूतादि महता तथा ॥
अव्यक्तेन महाँश्चैव व्याप्तो वै बुद्धिलक्षणः ।
अव्यक्तं तमसा व्याप्तं तमश्च रजसा तथा ॥
रजः सत्त्वेन संव्याप्तं त्रिधा प्रकृतिरुच्यते ।
एवमावरणोपेतं ब्रह्माण्डमखिलं नृप ॥
पुरुषेणावृतं सर्वं सबाह्याभ्यन्तरं तथा ।
एतत् सर्वं पटस्थं तु कृत्वा चित्रमयं सुधीः ॥
कार्त्तिक्यामयने चैव विषुवे ग्रहणे तथा ।

पूजयेद्येन विधिना तत्समासेन मे शृणु ॥
पूर्वतो मण्डलं चास्य विचित्रं कारयेद्बुधः ।
नव कुण्डानि चत्वारि चतुरस्राणि कारयेत् ॥
द्वौ द्वौ नियोजयेत् तेषु ब्राह्मणौ वेदपारगौ ।
यज्ञोपकरणोपेतौ वस्त्राभरणभूषितौ ॥
होमं कुर्युर्यतात्मानो* मौनिनः सर्व एव ते ।
नामधेयैः पटस्थानां मन्त्रैरोङ्कारपूर्वकैः ॥
यजमानस्ततः सर्वं सर्वालङ्कारभूषितः ।
आचार्येण समं कुर्यात् पूजामग्रे पटस्य तु ॥
पुष्पैर्वस्त्रैः समभ्यर्च्य मन्त्रमेतमुदीरयेत् ।
ब्रह्माण्डोदरवर्त्तीनि भुवनानीह यानि तु ॥
तानि सन्निहितान्यत्र पूजितानि भवन्तु मे ।
ब्रह्मा विष्णुस्तथा रुद्रो ह्यादित्या वसवस्तथा ॥
पूजितास्तु प्रतिष्ठासु भवन्तु सततं मम ।
एवं सम्पूज्य विधिवत् कृत्वा चैव प्रदक्षिणम् ॥
भक्ष्यान् नानाविधाँश्चैव नैवेद्यं तत्र दापयेत् ।
शङ्खतूर्यनिनादैश्च जागरं कारयेत् ततः ॥
ब्रह्मघोषैर्विचित्रैश्च गीतमङ्गलनिःस्वनैः ।
पुनः प्रभाते विमले स्नात्वा शुचिरलङ्कृतः ॥
पूर्वोक्तेन विधानेन पुनः सम्पूज्य तं पटम् ।
ऋत्विक्पूजां ततः कृत्वा गोशतेन विचक्षणः ॥
अथ वा गोयुगं दद्यादेकैकस्याप्यलङ्कृतम् ।
उपानहौ तथा छत्रं गृहोपकरणानि च ॥

---

*जितात्मानाविति क्व चित् पुस्तके पाठः ।

यद्यदिष्टतमं किञ्चित् सर्वं दद्याद्विचक्षणः ।
ततः प्रकल्पयेद्यानं नागयुक्तमलङ्कृतम् ॥
अलाभे वाजिसंयुक्तं पताकाध्वजमालिनम् ।
सहस्रं दक्षिणां दत्त्वा ततस्तत्रारोपयेत् पटम्* ॥
ब्राह्मणं वा रथेनाथ नयेद्देवालयं बुधः ।
तत्र संस्थापयेन्नीत्वा गन्धैः पुष्पैश्च पूजयेत् ॥
तत्रापि दद्यान्नैवेद्यं कुर्याच्चापि महोत्सवम् ।
यस्मिन्नायतने तस्य प्रतिष्ठा क्रियते नृप ॥
पूजा तत्रापि महती कर्त्तव्या भूतिमिच्छता ।
चन्द्रातपं तु घण्टां च ध्वजाद्यं दापयेत् सुधीः ॥
यथाशक्त्या च राजेन्द्र गुरुं गौरवयन्नृपः ।
अभ्यर्च्य दक्षिणाभिश्च ब्राह्मणाँश्च विसर्जयेत् ॥
दीनान्धकृपणानां च भोजनं चानिवारितम् ।
तस्मिन्नहनि दातव्यं मित्रस्वजनबन्धुषु ॥
अनेन विधिना यस्तु श्रद्दधानो जितेन्द्रियः ।
कुर्यान्नरो वा नारी वा प्रतीष्ठां सार्वलौकिकीम् ॥
स्थापितं तु भवेत् तेन त्रैलोक्यं सचराचरम् ।
कुलं चोत्तारितं तेन सपुत्रेण युधिष्ठिर ॥
यावच्च देवतागारे पटस्तिष्ठति पूजितः ।
तावच्चास्याक्षया कीर्त्तिस्त्रैलोक्ये प्रतिसर्पति ॥
दिनानि कीर्त्तिर्यावन्ति मर्त्यलोकेषु गीयते ।
तावद्वर्षसहस्राणि सूर्यलोके महीयते ॥
गन्धर्वैर्गीयमानस्तु अप्सरोगणसेवितः ।

---

* परमिति पुस्तकान्तरे पाठः ।

वसेत हृष्टमनसा यावदिन्द्राश्चतुर्दश ॥
पुण्यक्षयादिहाभ्येत्य राजराजोऽभिजायते ।
पुत्रपौत्रवृतः श्रीमान् दीर्घायुरतिधार्मिकः ॥
दश जन्मानि राजेन्द्र जायते हतकण्टकः ।
श्रीस्तस्य जायते नित्या तेजश्चाव्याहतं भुवि ॥
बलं बुद्धिर्धनं धान्यं पुत्रपौत्रं तथोत्तमम् ।
एतत् सर्वमवाप्नोति कृत्वैतत् सुरसत्तमः ॥
कीर्त्तिस्तु प्रथिता तस्य बलं चापि महद्भवेत् ।
अपराण्यपि जन्मानि सप्त राजा भवत्यसौ ॥
पश्चाद्यतिकुले भूत्वा निर्वाणं प्राप्नुते परम् ।
अस्मात् परतरं नास्ति त्रिषु लोकेषु किं चन ॥
एतत् कृत्वा तु मुनयो लेभिरे परमं पदम् ।
एतस्यैव प्रभावेण पुराणाश्चक्रवर्त्तिनः ॥
तथाविधं पदं लब्धा लोके कीर्त्तिर्वितेनिरे ।
एतत् ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥
नारी वा पुरुषो वाऽपि प्रतिष्ठां भौवनीं तु यः ।
प्रकरोति विधानेन कृतकृत्यो भवेद्ध्रुवम् ॥
धर्मं च वर्धयति* धर्मशतानि धत्ते
कामं प्रसादयति पापमपाकरोति ।
विख्यापयेच्च भुवनेषु विशेषनिष्ठां
तन्नास्ति यन्न कुरुते भुवनप्रतिष्ठाम् ॥

इति भुवनप्रतिष्ठाविधिः ।

---

* ऋद्धिशतानीति पुस्तकान्तरे पाठः ।

अथ कल्पदानं मत्स्यपुराणे ।

कल्पानुकीर्त्तनं वक्ष्ये सर्वपापप्रणाशनम् ।
यस्यानुकीर्त्तनादेव वेदपुण्येन युज्यते ॥
प्रथमः श्वेतकल्पस्तु द्वितीयो नीललोहितः ।
वामदेवस्तृतीयस्तु ततो रथन्तरोऽपरः* ॥
रौरवः पञ्चमः प्रोक्तः षष्ठः प्राण इति स्मृतः ।
सप्तमोऽथ बृहत्कल्पः कन्दर्पोऽष्टम उच्यते ॥
सद्योऽथ नवमः प्रोक्त ईशानो दशमः स्मृतः ।
व्यान एकादशः प्रोक्तः तथा सारस्वतोऽपरः ॥
त्रयोदश उदानस्तु गारुडोऽथ चतुर्दशः ।
कूर्मः पञ्चदशो ज्ञेयः पौर्णमासी प्रजायते ॥
षोडशो नारसिंहस्तु समानस्तु ततः परः ।
आग्नेयोऽष्टादशः प्रोक्तः सोमकल्पस्तथा परः ॥
मानवो विंशतिः प्रोक्तस्तत्पुमानिति चापरः ।
वैकुण्ठश्चापरस्तद्वल्लक्ष्मीकल्पस्तथाऽपरः ॥
चतुर्विंशस्तथा प्रोक्तः सावित्रीकल्पसंज्ञकः ।
पञ्चविंशतिमो घोरो वाराहस्तु ततोऽपरः ॥
सप्तविंशोऽथ वैराजो गौरीकल्पस्तथाऽपरः ।
माहेश्वरस्ततः प्रोक्तो त्रिपुरो यत्र घातितः ॥
पितृकल्पस्तथा ते तु या कुहूर्ब्रह्मणः स्मृता ।
इत्ययं ब्रह्मणो मासः सर्वपापप्रणाशनः ॥
आदावेव हि माहात्म्यं यस्मिन् यस्य विधीयते ।

---

* ततोऽसव्यतर इति न· प्र· पु· पाठः ।

तस्य कल्पस्य तन्नाम विहितं ब्रह्मणा पुरा ॥
यस्तु दद्यादिमान् कृत्वा हैमान् पर्वणि पर्वणि ।
ब्रह्मविष्णुपुरे कल्पं मुनिभिः पूज्यते दिवि ॥
सर्वपापक्षयकरं कल्पदानं यतो भवेत् ।
मुनिरूपाँस्ततः कृत्वा दद्यात् कल्पान् विचक्षणः ॥

'मुनिरूपान्' मुन्याकारान्। मुनिलक्षणमुक्तं ब्रह्माण्डदाने ।

इति कल्पदानविधिः ।

इति श्रीमहाराजाधिराजश्रीमहादेवस्य समस्तकरणाधीश्वरसकलविद्याविशारद-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ दानखण्डे देवतादानप्रकरणम् ॥ ११ ॥



अथ कालविशेषेण दानविशेषा अभिधीयन्ते ।

अभ्यर्चन् विधिनाऽतिथीन् विरचयन् नक्षत्रयोगान् तिथीन्
वारं वारमुदारमङ्गलगुरुप्रीतिर्बुधं प्रीणयन् ।
बिभ्राणः पृथुमित्रमण्डलसदासङ्क्रान्तिकान्तं गृहं
साधु श्रीकरणप्रयोगकुशलो हेमाद्रिरेव क्षितौ ॥
तेनाथ तिथिवारर्क्षयोगेषु करणेषु च ।
सङ्क्रान्त्यादिषु कालेषु क्रियते दानसंग्रहः ॥

तत्र तिथिदानानि तावदुच्यन्ते । विष्णुधर्मोत्तरे ।

प्रतिपद्यथ पुष्पाणां द्वितीयायां घृतस्य च ।
पञ्चम्यां तु फलानां वै षष्ठ्यां स्नानस्य मानद ॥
सप्तम्यां चाप्यपूपानामष्टम्यां च गुडस्य च ।
कुल्माषस्य नवम्यां च दशम्यां भोजनस्य च ॥
एकादश्यां सुवर्णस्य द्वादश्यां वसनस्य च ।
त्रयोदश्यां तु गन्धानां सितायास्तदनन्तरम् ॥
दानं च परमान्नस्य पञ्चदश्यां महाफलम् ।

भविष्योत्तरे श्रीकृष्ण उवाच ।

तिथिदानमिदानीं ते कथयामि युधिष्ठिर ।
सर्वपापप्रशमनं सर्वविघ्नविनाशनम् ॥
मानसं वाचिकं वाऽपि कर्मजं यदघं भवेत् ।
सर्वं प्रशममायाति दानेनानेन पाण्डव ॥
श्रावणे कार्त्तिके चैत्रे वैशाखे फाल्गुने तथा ।
सितपक्षे तु तद्दानं दातव्यं पुष्टिवर्धनम् ॥

वित्तं श्रद्धा सहायश्च पात्रप्राप्तिस्तथैव च ।
दानकालः सदैवेह कथितस्तत्त्वदर्शिभिः ॥
तीर्थे चायतने गोष्ठे गृहे वा नियतात्मवान् ।
यद्ददाति नरश्रेष्ठ तदानन्त्याय* कल्पते ॥
प्रतिपत्सु द्विजान् पूज्य पूजयित्वा प्रजापतिम् ।
सौवर्णमरविन्दं च कारयित्वाऽष्टपत्रकम् ॥

प्रजापतिलक्षणमुक्तं ब्रह्माण्डदाने ।

कृत्वा त्वौदुम्बरे पात्रे सुगन्धघृतपूरिते ।
पुष्पैर्धूपैः पूजयित्वा विप्राय प्रतिपादयेत् ॥

'औदुम्बरं' ताम्रपात्रम् ।

अनेन विधिना दत्त्वा कमलं कमलालयम् ।
ईप्सितान् लभते कामान् निष्कामो ब्रह्मसात्मताम् ॥
वह्निं पूज्य द्वितीयायां भूर्भुवः स्वरिति क्रमात् ।
तिलाज्येन शतं हुत्वा दत्त्वा पूर्णाहुतिं ततः ॥
वैश्वानरं तु सौवर्णं† स्थापयेत् ताम्रभाजने ।
गुडाज्यपूरिते राजंस्तोयपूर्णघटोपरि ॥
पूजयित्वा वस्त्रमाल्यैर्भक्ष्यभोज्यैरनेकधा ।
ततस्तं ब्राह्मणे दद्यात्‡ वह्निर्मे प्रीयतामिति ॥

वैश्वानरलक्षणमुक्तं ब्रह्माण्डदाने ।

यावज्जीवकृतात् पापान्मुच्यते नात्र संशयः ।
मृतो वह्निपुरे याति प्राहेदं नारदो मुनिः ॥

---

* कल्पयेदिति क्वचित् पाठः ।

† सम्पूर्णमिति पुस्तकान्तरे पाठः ।

‡ वह्निः संप्रीयतामिति पुस्तकान्तरे पाठः ।

तृतीयायां महाराज गोधां स्वर्णमयीं शुभाम् ।
स्थापयेत् ताम्रपात्रे तु लवणोपरि वेशयेत् ॥
जीरकं कटुखण्डं च गुडं पार्श्वेषु दापयेत् ।
रक्तवस्त्रयुगच्छन्नं कुङ्कुमेन विभूषितम् ॥
पुष्पधूपैः सनैवेद्यैः पूजयित्वा द्विजातये ।
दत्त्वा यत् फलमाप्नोति पार्थ तत् केन वर्ण्यते ॥
प्रासादा यत्र सौवर्णा नद्यः पायसकर्दमाः ।
गन्धर्वा ऋषयो यत्र तत्र ते यान्ति मानवाः ॥
स्वर्गादागत्य संसारे सुरूपः सुभगो भवेत् ।
दाता भोक्ता बहुधनः पुत्रपौत्रसमन्वितः ॥
नारी वा तद्गुणैर्युक्ता भवतीति न संशयः ।

वह्निपुराणे ।

यो ददाति द्विजेभ्यस्तु तृतीयायामुपानहौ ।
वैशाखे शुक्लपक्षे तु सच्छत्रं करकान्वितम् ॥
न तस्य मानसो दाहो मर्त्त्यलोकेऽभिजायते ।
सर्वव्याधिविनिर्मुक्तः श्रियं पुत्राँश्च विन्दति ॥
कालादिह यदायाति मम लोके द्विजोत्तम ।

विष्णुधर्मोत्तरे ।

वैशाखे शुक्लपक्षे तु तृतीयायां द्विजोत्तम ।
यद्ददाति नरश्रेष्ठ तदक्षयं समश्नुते ॥
विशेषेण तु दानेन भक्षितानां* प्रकीर्त्तितम् ।

---

* तदा दानमचतानामिति न· प्र· पु· पाठः ।

आह विष्णुः ।

वैशाखे मासि तृतीयायामुपोषितोऽक्षतैर्वासुदेवमभ्यर्च्य तान्येव च हुत्वा सर्वपापेभ्यः पूतो भवति यच्चास्मिन्नहनि प्रयच्छति तदक्षय-माप्नोतीति ।

भविष्यत्पुराणे ।

माघमासे तृतीयायां गुडस्य लवणस्य च ।
दानं श्रेयस्करं राजन् स्त्रीणां तु पुरुषस्य च ॥
गुडेन तुष्यते नूनं लवणेन चतुर्भुजः ।
गुडपूजा तु दातव्या मासि भाद्रपदे तथा* ॥
तृतीयायां पायसेन वामदेवस्य प्रीतये ।
वारिदानं प्रशस्तं स्यान्मोदकानां तु भारत ॥
वैशाखे मासि राजेन्द्र तृतीयायां च चन्दनैः ।
वारिणा तुष्यते विप्रो मोदकैर्भीम एव हि ॥
दानं तु चन्दनस्येह पद्मयोनावसंशयः ।
या त्वेषा कुरुशार्दूल वैशाखे मासि वै तिथिः ॥
तृतीया साऽक्षया लोके गीर्वाणैरभिनन्दिता† ।
सुपात्राय महाबाहो भूरिचन्द्रं च सुव्रत ॥
कलधौतं तथाऽन्नं च घृतं वाऽपि विशेषतः ।

'चन्द्रं' सुवर्णम् । 'कलधौतं' रूप्यम् ।

अस्यां दत्तं त्वक्षयं स्यात् तेनेयमक्षया स्मृता ।
यत् किञ्चिद्दीयते दानं स्वल्पं वा यदि वा बहु ॥

---

* त्वयेति पुस्तकान्तरे पाठः ।

† रभिवन्दिता इति क्व चित् पाठः ।

तत् सर्वमक्षयं याति तेनेयमक्षया स्मृता ।
योऽस्यां ददाति करकान्* वारिपात्रसमन्वितान् ॥
स याति पुरुषो वीर लोके वै हेममालिनः ।

## भविष्योत्तरे ।

चतुर्थ्यां वारणं हैमं पलादूर्ध्वं तु शोभनम् ।
कारयित्वाऽङ्कुशयुतं तैलद्रोणोपरि न्यसेत् ॥
वस्त्रैः पुष्पैः पूजयित्वा नैवेद्यं विनिवेद्य च ।
ततस्तु ब्राह्मणे दद्याद्गणेशः प्रीयतामिति ॥
कार्यारम्भेषु सर्वेषु तस्य विघ्नं न जायते ।
वारणाः सप्त जन्मानि भवन्ति मदविह्वलाः ॥
वारणेन्द्रं समारूढस्त्रिलोकविजयी भवेत् ।

अत्र च 'श्रावणे कार्त्तिके चैत्र' इत्यादितिथिदानारम्भेऽभिहितो मासनियमः सर्वेषु भविष्योत्तरोक्ततिथिदानेषु वेदितव्यः ।

पञ्चम्यां पन्नगं सर्वं स्वर्णनैकेन कारयेत् ।
क्षीराज्यपात्रमध्यस्थं पूज्य विप्राय दापयेत् ॥
द्विजं संपूज्य वासोभिः प्रणिपत्य क्षमाप्य च ।
इह लोके परे चैव दानमेतत् सुखावहम् ॥
नागोपद्रवविद्रावि सर्वदुष्टनिवर्हणम् ।
प्रायश्चित्तं तथा प्रोक्तं नागदष्टस्य शम्भुना ॥
षष्ठ्यां शक्तिसमोपेतं कुमारं शिखिवाहनम् ।
कारयित्वा यथाशक्त्या हैमं मालाविभूषितम् ॥

## कुमारलक्षणमभिहितं विष्णुधर्मोत्तरे ।

कुमारः षण्मुखः कार्यः शिखण्डकविभूषितः ।

---

* लोकान् वै हेममालिन इति क्वचित् पुस्तके पाठः ।

रक्ताम्बरधरः कार्यो मयूरवरवाहनः ॥
कुक्कुटश्च तथा घण्टा तस्य दक्षिणहस्तयोः ।
पताका वैजयन्ती च शक्तिः कार्या च वामयोः*-इति ॥
तण्डुलद्रोणशिखरे वासोभिः पूज्य शक्तितः ।
नमस्कृत्य ततो दद्याद्ब्राह्मणाय कुटुम्बिने ॥
इह भूतिं च संप्राप्य प्रेत्य स्वर्गे महीयते ।
शूद्रो ब्राह्मणतामेति ब्राह्मणो ब्रह्मलोकभाक् ॥
सप्तम्यां भास्करं चैवं पूज्य ब्राह्मणमुत्तमम् ।
दद्यादलङ्कृतग्रीवं सपर्याणं सदक्षिणम् ॥

दानमन्त्रस्तु अश्वदाने द्रष्टव्यः ।

सूर्यलोकमवाप्नोति सूर्येण सह मोदते ।
गन्धर्वैस्तुष्टिमाप्नोति दत्तेऽश्वे समलङ्कृते ॥
अष्टम्यां वृषभं श्वेतमव्यङ्गाङ्गं धुरन्धरम् ।
सितवस्त्रयुगच्छन्नं घण्टाभरणभूषितम् ॥
दद्यात् प्रणम्य विप्राय प्रीयतां वृषभध्वजः ।
प्रदक्षिणं ततः कृत्वा आगारान्तमनुव्रजेत् ॥
दानेनानेन नृपते शिवलोको न दुर्लभः ।
वृषस्कन्धेषु तिष्ठन्ति भुवनानि चतुर्दश ॥
तस्माद्वृषभदानेन दाता भवति भारती ।
नवम्यां काञ्चनं सिंहं कारयित्वा स्वशक्तितः ॥
मुक्ताफलाष्टकयुतं नीलवस्त्रावगुण्ठितम् ।
दद्याद्देवीमनुस्मृत्य दुष्टदैत्यनिवर्हणीम् ॥

---

* वारिजेति क्व चित् पाठः ।

द्विजातये प्रदायेत्थं सर्वान् कामान् समश्नुते ।
कान्तारवनदुर्गेषु चौरव्यालाकुले पथि ॥
हिंसकाश्च न हिंसन्ति दानस्यास्य प्रभावतः ।
मृतो देवीपुरं याति पूज्यमानः सुरासुरैः ॥
पुण्यक्षयादिहाभ्येत्य राजा भवति धार्मिकः ।
दशम्यां नृपशार्दूल दत्त्वाऽऽशाः स्वर्णनिर्मिताः ॥
लवणे च गुडे जीरनिष्पावेषु तिलेऽप्यथ ।
गव्यत्रये तण्डुलेषु माषाणामुपरि स्थिताः ॥
संपूज्य वस्त्रपुष्पाद्यैर्द्विजाय प्रतिपादयेत् ।

आशा 'दिशः' ।

तासां लक्षणमुक्तमाशादशमीव्रते । तद्यथा ।

स्त्रीरूपाश्चाधिदेवस्य शस्त्रवाहनचिह्निताः—इति ।

पूर्वादिक्रमेण शक्त्यादेरधिदेवस्य शस्त्रादिभिश्चिह्निता इत्यर्थः । शक्त्यादीनामपि शस्त्रवाहनानि ब्रह्माण्डदाने द्रष्टव्यानि ।

आशाः स्वाशाः सदा सन्तु सिद्ध्यतां मे मनोरथः ।
भवतीनां प्रसादेन सदा कल्याणमस्त्विति ॥

इति पूजादानमन्त्रः ।

अनेन विधिना यस्तु पुमान् स्त्री वाऽथ वा पुनः ।
निर्वापयति राजेन्द्र तस्य पुण्यफलं शृणु ॥
इह लोकेऽनवाप्याग्रात् प्रेत्य स्वर्गे महीयते ।
सफलास्तस्य सर्वाशा याः काश्चिन्मनसि स्थिताः ॥
ततः स्वर्गादिहाभ्येत्य कुले महति जायते ।
एकादश्यां गरुत्मन्तं कारयित्वा हिरण्मयम् ॥

यथाशक्त्या ताम्रपात्रे घृतस्योपरि पूजितम् ।
पञ्चाग्न्यभिरते विप्रे गुरवे प्रविशेषतः ॥
दत्त्वा किं बहुनोक्तेन विष्णुलोके महीयते ।

गरुत्मतो रूपमुक्तं विष्णुधर्मोत्तरे ।

तार्क्ष्यो मरकतप्रख्यः कौशिकाकारनासिकः ।
चतुर्भुजस्तु कर्त्तव्यो वृत्तनेत्रमुखस्तथा ॥
भूस्थजानूर्ध्वजानुश्च पक्षद्वयविभूषितः ।
प्रभासंस्था तु सौवर्णकलापेन विवर्धिता ॥
छत्रं तु पूर्णकुम्भं च करयोस्तस्य कारयेत् ।
करद्वयं तु कर्त्तव्यं तथा विरचिताञ्जलिः ॥
विष्णुः पुरश्चेत् कार्योऽसौ द्विभुजो रचिताञ्जलिः–इति ।
गां वृषं महिषीं हेमसप्तधान्यमजाविकम् ॥
वडवां गुडरसान् सर्वांस्तथा बहुफलान्यपि ।
पुष्पाणि च पवित्राणि गन्धांश्चोच्चावचान् वनान् ॥
मेलयित्वा यथाभक्त्या वस्त्रैराच्छाद्य तान् नवैः ।
द्वादश्यां द्वादशैतानि ब्राह्मणेभ्यो निवेदयेत् ॥
एकस्य वा महाराज यत् फलं तन्निशामय ।

एषां दानमन्त्रास्तद्दानप्रकरणेषु गवेषणीयाः ।

इह कीर्त्तिं परां प्राप्य भुक्त्वा भोगान् यथेप्सितान् ।
ततो विष्णुपुरं याति सेव्यमानोऽप्सरोगणैः ॥
कर्मक्षयादिहागत्य राजा भवति धार्मिकः ।
यज्ञयाजी दानपतिर्जीवेच्च शरदां शतम् ॥
श्रावणे कार्त्तिके चैत्रे वैशाखे फाल्गुने तथा ।
शुक्लपक्षे प्रदातव्यमेतच्छ्रेयोविवर्धनम् ॥

## विष्णुधर्मोत्तरे ।

द्वादश्यां चैत्रशुक्लस्य चित्रवस्त्रप्रदो नरः ।
अक्षयं फलमाप्नोति नागलोकं च गच्छति ॥
वैशाखमासि द्वादश्यां रुक्मदानं तथैव च ।
छत्रोपानद्वयोर्दानं ज्येष्ठे मासि महीभुजः ॥
स्वास्तीर्णं शयनं दत्त्वा प्रीणयेद्भोगशायिनम् ।
आषाढशुक्लद्वादश्यां श्वेतद्वीपे महीयते ॥
श्रावणे वस्त्रदानेन विष्णुलोके महीयते ।
गोदः प्रयाति गोलोकं मासि भाद्रपदे द्विजाः ॥
प्रीणयेदश्वशिरसमश्वं दत्त्वा तथाऽऽश्विने ।
विष्णुलोकमवाप्नोति कुलमुद्धरते स्वकम् ॥
सरोमवस्त्रदानेन कार्त्तिके दिवमाप्नुयात् ।
प्रदानं लवणस्यैव मार्गशीर्षे महाफलम् ॥
धान्यानां च तथा पौषे दारूणां च तथोत्तरे ।
फाल्गुने सर्वगन्धानां* द्वादश्यां दानतः सुखी ॥
एवं यथोक्तदानेन दाता स्वर्गे महीयते ।

## वाराहपुराणे ।

मार्गशीर्षोऽथ वैशाखो द्वौ मासौ मम वल्लभौ ।
अनयोर्मासयोर्यस्तु द्वादश्यां नियतात्मवान् ॥
द्वादशानां तु विप्राणां यो ददाति वसुन्धरे ।
एकैकस्य तु गां श्रेष्ठां सर्वोपस्करसंयुताम् ॥
वस्त्रोपानद्युगे चैव कर्णालङ्कार एव च ।

---

* बहुगन्धानामिति क्वचित् पाठः ।

आतपत्रं पादुके च अङ्गुलीयकमेव च ॥
विलिप्य चोपवीतं च मां ध्यायन् भक्तिसंयुतः ।
दद्यादशक्तौ पञ्चानां त्रयाणां च द्वयोरथ ॥
अशक्तौ त्वथ वैकस्मिन् वेदवेदाङ्गपारगे ।
अक्रोधने व्रतस्थे च आश्रितेषु विशेषतः ॥
मार्गशीर्षेऽथ वा देवि वैशाखे मासि यो नरः ।
दद्यादनेन विधिना तस्य पुण्यफलं शृणु ॥
मन्वन्तराणां कोट्यस्तु दश सप्त च पञ्च च ।
मच्छरीरगतश्चास्ते सर्वद्वन्द्वविवर्जितः ॥
यद्यपि स्युर्ग्रहाः सर्वे मूर्ध्नि लिङ्गे शनैश्चरः ।
सर्वे ते सौम्यतां यान्ति द्वादश्यां विधिनाऽमुना ॥

कूर्मपुराणे ।

एकादश्यां निराहारो द्वादश्यां पुरुषोत्तमम् ।
अर्चयेद्ब्राह्मणमुखे शर्कराघृतपायसैः ॥
एषा तिथिर्वैष्णवी स्यात् द्वादशी शुक्लपक्षके ।
तस्यामाराधयेद्देवं प्रयत्नेन जनार्दनम् ॥
यत् किञ्चिदेवमीशानमुद्दिश्य ब्राह्मणे शुचौ ।
दीयते विष्णुमेवाऽपि तदनन्तफलप्रदम् ॥
तस्मादस्यां तिथौ देयं भृष्टमन्नं शुभार्थिभिः ।

विष्णुः ।

पौष्यां च समतीतायां कृष्णपक्षद्वादश्यां सोपवासस्तिलैः स्नातस्तिलोदकं दत्वा तिलैर्वासुदेवमभ्यर्च्य तानेव हुत्वा भुक्त्वा च सर्वपापेभ्यः पूतो भवति । माघ्यां समतीतायां कृष्णद्वादशीं सश्रवणां प्राप्य वासुदेवाग्रते

महावर्त्तिद्वयेन दीपदानं दद्यात् । दक्षिणपार्श्वे महारजतरक्तेन समग्रेण वाससा तैलतुलामष्टाधिकां दत्त्वा वामपार्श्वे श्वेतेन समग्रेण वाससा घृततुलामष्टाधिकां दद्यात् । एतत् कृत्वा यस्मिन्राष्ट्रेऽभिजायते यस्मिन् देशे यस्मिन् कुले तत्रोज्ज्वलो भवति ।

'दक्षिणपार्श्वे' इत्यादिना महावर्त्तिद्वयमेव कथयति महारजतरक्तेन कौसुम्भरक्तेन । 'तुला' पलशतम् ।

यमः ।

माघान्धकारद्वादश्यां तिलैर्हुत्वा हुताशनम् ।
तिलान् दत्त्वा च विप्रेभ्यः सर्वपापैः प्रमुच्यते ॥

विष्णुधर्मोत्तरे ।

श्रावणे शुक्लपक्षे तु द्वादश्यां प्रीतये नृप ।
गोप्रदानेन गोविन्दो यत् पूर्वं कथितं तव ॥
फलं तत् सर्वमाप्नोति नात्र कार्या विचारणा ।

भविष्योत्तरे ।

स्नापयेद्ब्राह्मणान् प्रातस्त्रयोदश्यां त्रयोदश ।
तानाच्छाद्य नवैर्वस्त्रैर्गन्धपुष्पैरथार्चयेत् ॥
भोजयेदपि मृष्टान्नं दक्षिणां विनिवेदयेत् ।
यथाशक्त्या हेमखण्डान् धर्मात्मा प्रीयतामिति ॥
धर्मराजाय कालाय चित्रगुप्ताय मृत्यवे ।
क्षयाय क्षयरूपाय अन्तकाय यमाय च ॥
प्रेतनाथाय रौद्राय तथा वैवस्वताय च ।
महिषस्थाय चित्राय नामानीत्थं त्रयोदश ॥
उच्चार्य श्रद्धया युक्तः प्रणिपत्य विसर्जयेत् ।

य: करोति महाराज पूजामेतां मनोरमाम् ॥
यमाय स सुखं मर्त्ये स्थित्वा व्याधिविवर्जितः ।
यममार्गगतं दु:खं पश्चान्नाप्नोत्यसौ पुमान् ॥
न पश्यति प्रेतपुरं* पितृलोकं च गच्छति ।
पुण्यक्षयादिहाभ्येत्य स सुखी नीरुजो भवेत् ॥

तथा ।

माहेयं सशुभं कुम्भं चतुर्दश्यां पयोभृतम् ।
कर्षैकेण च संयुक्तं कुर्यात् सद्वस्त्रसंयुतम् ॥
घण्टाभरणशोभाढ्यं वृषभेण समन्वितम् ।
यो दद्याच्छिवभक्ताय ब्राह्मणाय कुटुम्बिने ॥

'माहेयं' मृण्मयम् । 'पयोभृतं' दुग्धपूर्णम् । कर्षैकेण संयुक्तं कर्षपरिमाणेन हेम्ना संयुक्तम् ।

दद्यात् कुम्भं सहेमानं भूतायां दुग्धसंभृतम् ।

इति वातुलोक्तेः ।

एतद्दत्त्वा नरश्रेष्ठ शिवलोके महीयते ।
तत्र स्थित्वा चिरं कालं क्रमादेत्य महीतलम् ॥
आरोग्यधनसंयुक्तः कुले महति जायते ।
सर्वकामसमृद्धात्मा यावज्जन्मशतत्रयम् ॥

कूर्मपुराणे ।

यस्तु कृष्णचतुर्दश्यां स्नात्वा देवं पिनाकिनम् ।
आराधयेद्द्विजमुखे न तस्यास्ति पुनर्भव: ॥
कृष्णाष्टम्यां विशेषेण धार्मिकाय द्विजातये ।

---

* प्रेतमुख्यमिति क्वचित् पाठः ।

स्नात्वाऽभ्यर्च्य यथान्यायं पादप्रक्षालनादिभिः ॥
प्रीयतां मे महादेव दद्याद्द्रव्यं स्वकीयकम् ।
सर्वपापविनिर्मुक्तः प्राप्नोति परमां गतिम् ॥

'द्विजमुखे आराधयेत्' इति शिवप्रीतये द्विजाँस्तद्दानेन तर्पयेदित्यर्थः । 'द्रव्यं' गोभूहिरण्यादि ।

## अथ विष्णुधर्मोत्तरे ।

संप्राप्य चैत्रमासस्य शुक्लपञ्चदशीं नरः ।
चित्रं वस्त्रयुगं दद्यात् सोपवासो जितेन्द्रियः ॥
ब्राह्मणाँश्च नमस्कृत्य सौभाग्यं तेन वाऽऽप्नुयात् ।
वैशाख्यां पौर्णमास्यां तु ब्राह्मणान् पञ्च सप्त वा ॥
क्षौद्रयुक्तैस्तिलैः कृष्णैर्वाऽर्चयेद्यदि वेतरैः ।
प्रीयतां धर्मराजेति यद्वा मनसि वर्त्तते ॥
यावज्जीवकृतात् पापात् तत्क्षणादेव मुच्यते ।

'ब्राह्मणान् वाचयेत्' इति स्वस्तिवाचनं कारयेदित्यर्थः । क्षौद्रयुक्तैर्मधुसहितैः कृष्णतिलैः । 'इतरैरिति' शुक्लतिलैः ब्राह्मणान् प्रीणयेदिति शेषः ।

तस्मिन्नेव यथाकाले सखुरं कृष्णमार्गकम् ।
तिलैः प्रच्छाद्य वासोभिः सर्वरत्नैरलङ्कृतम् ॥
यो दद्यात् तेन दत्ता स्यान्मही सवनकाञ्चना ।

एतद्विधिविस्तरस्तु कृष्णाजिनदाने द्रष्टव्यः ।

## आह यमः ।

वैशाख्यामेव विधिवद्भोजयेद्ब्रह्मणान् दश ।
त्रिरात्रमुषितः स्नात्वा कृशरं प्रयतः शुचिः ॥
गौरान् वा यदि वा कृष्णाँस्तिलान् क्षौद्रेण संयुतान् ।
दत्त्वा दशसु विप्रेषु तानेव स्वस्ति वाचयेत् ॥

प्रीयतां धर्मराजेति पितॄन् देवाँश्च तर्पयेत् ।
यावज्जीवकृतं पापं तत्क्षणादेव मुञ्चति ॥
अयुतायुतं च तिष्ठेत् स स्वर्गलोके महीयते ।
मामेव तु न पश्येत् तु न च पापेन लिप्यते ॥

## जावालः ।

'शृतान्नं' पक्वान्नम् ।

शृतान्नमुदकुम्भं च वैशाख्यां च विशेषतः ।
निर्दिश्य धर्मराजाय गोदानफलमाप्नुयात् ॥
सुवर्णतिलयुक्तैस्तु ब्राह्मणान् सप्त पञ्च च ।
तर्पयेदुदपात्रैस्तु ब्रह्महत्यां व्यपोहति ॥

## महाभारते ।

वैशाख्यां पौर्णमास्यां तु तिलान् दत्त्वा द्विजातिषु ।
तिला भक्षयितव्यास्तु स दत्त्वाऽऽलभनं च तैः ॥
कार्यं सततमिच्छद्भिः श्रेयः सर्वात्मना गृहे ।

## विष्णुधर्मोत्तरे ।

सोपवासस्तथा ज्येष्ठे पूर्णे तु शशलक्षणे* ।
उपानहौ तथा छत्रं दत्त्वाऽत्यन्तं सुखी भवेत् ॥
आषाढ्यामन्नदानेन प्राप्नोत्यन्नं तथा बहु ।
जलधेनुप्रदानेन श्रावण्यां स्वर्गमाप्नुयात् ॥
गोदानं प्रौष्ठपद्यां वा पौर्णमास्यां महाफलम् ।
आश्वयुज्यां कांस्यपात्रं घृतपूर्णं द्विजातये ॥
ससुवर्णं तथा दत्त्वा दीप्ताजास्त्विह जायते ।
कार्त्तिक्यां चन्द्रवर्णाभं अन्यवर्णमथापि वा ॥

---

* शशलक्षणश्चन्द्र इति ।

रत्नैर्गन्धैस्तथा धान्यैर्बीजैर्वस्त्रैस्तथैव च ।
कृत्वा चोक्तमथोक्षाणं दत्त्वा दीपं समन्ततः ॥
चन्द्रोदये नरो दत्त्वा सर्वपापैः प्रमुच्यते ।
कान्तारे यममार्गे तु तेनासौ व्रजते सुखम् ॥
प्राप्नोति पुत्रपौत्रांश्च सूर्यलोकं च गच्छति ।
मार्गशीर्षे तथा मासि पूर्णे शिशिरदीधितौ ॥
महारजतरक्तेन वाससा तु महीपते ।
आच्छाद्य कांस्यपात्रे तु कृत्वा सोमं समाहितः ॥

'महारजतरक्तेन' कुसुम्भरक्तेन । चन्द्रलक्षणं वारदानेषु पुरस्ताद्वक्ष्यते ।

लवणस्य तु मुख्यस्य संपूर्णं कृष्णमार्गकम् ।

'मुख्यस्य लवणस्येति' सैन्धवस्येत्यर्थः ।

दत्त्वा सुवर्णनाभं तु तस्मिन्नेव द्विजातये ।
सौभाग्यरूपलावण्ययुक्तो भवति मानवः ॥
गौरसर्षपकल्केन पौषे उच्छादितो नरः ।

'उच्छादित' उद्वर्त्तित इत्यर्थः ।

न चाव्रणेन कुम्भेन सोऽभिषिक्तश्च तत्परम् ।
विरूषितस्तथा स्नातः सर्वबीजयुतैर्जलैः ॥

'विरूषित' अपनीतस्नेहः ।

गन्धरत्नफलोपेतैर्घृतेन तदनन्तरम् ।
सौवर्णं च ततः कृत्वा तत् प्रदद्याद्द्विजातये ॥

सुवर्णमध्ये घृतेनाभिषिक्त इत्यन्वयः । 'तदिति' कुम्भादिकं प्रकृतद्रव्यं परा-मृश्यते ।

घृतेन स्नापितं विष्णुं शक्त्या संपूजयेत् ततः ।
घृतं च जुहुयाद्वह्नौ घृतं दद्याद्द्विजातये ॥

कर्त्रे वस्त्रयुगं दद्यात् सोपवासः समाहितः ।
कर्मणाऽनेन धर्मज्ञः सर्वपापैः प्रमुच्यते ॥
माघ्यां कृत्वा तिलैः श्राद्धं सर्वपापैः प्रमुच्यते ।
स्वास्तीर्णं शयनं दत्त्वा फाल्गुन्यां ब्राह्मणाय च ॥
रूपद्रविणसंयुक्तां भार्यां पक्षवतीं तथा ।

'पक्षवतीं' बहुतरज्ञातियुक्ताम् ।

नरः प्राप्नोति धर्मज्ञः श्रियं चैव यथोत्तमाम् ।
तथा नार्यपि भर्त्तारं नात्र कार्या विचारणा ॥
पौर्णमासीषु चैतासु मासर्क्षसहितासु च ।
एतेषामेव दानानां फलं दशगुणं भवेत् ॥
महत्पूर्वासु तास्वेव फलमक्षयमश्नुते ।

मासनक्षत्रसहितायां पौर्णमास्यां यदा गुरुवारस्तदा तस्या महत्पूर्वतेति ।

मासर्क्षसहिता जीवे महापूर्वा तु पूर्णिमा ।

इति विष्णुधर्मोत्तरोक्तेः ।

आह विष्णुः ।

मार्गशीर्षे पञ्चदश्यां शुक्ले मृगशिरोयुक्तायां च चूर्णितलवणस्य सुवर्णनाभप्रस्थमेकं चन्द्रोदये ब्राह्मणाय प्रतिपादयेत् । अनेन कर्मणा रूपसौभाग्यवानभिजायते । पौषी चेत् पुष्ययुक्ता स्यात् तस्यां गौरसर्षपकल्केनोच्छादितशरीरो गव्यघृतपूर्णकुम्भेनाभिषिक्तः रुर्वौषधिभिः सर्वगन्धैः सर्वबीजैश्च स्नातो घृतेन च भगवन्तं वासुदेवं स्नापयित्वा पुष्पगन्धधूपदीपनैवेद्यादिभिश्चाभ्यर्च्य वैष्णवैः शाक्रैर्बार्हस्पत्यैश्च मन्त्रैः पावकं हुत्वा सुवर्णेन घृतेन ब्राह्मणं स्वस्ति वाचयेद्वासोयुगं कर्त्रे दद्यादनेन कर्मणा पुष्यति । माघी मघायुक्ता चेत् स्यात् तस्यां तिलैः श्राद्धं कृत्वा पूतो भवेत् । भोजनार्थं श्राद्धे तिलान् दत्त्वा सर्वजनप्रियो भवति । फाल्गुनी फाल्गुनी-

भियुता चेत् तस्यां ब्राह्मणाय सुसंस्कृतं स्वास्तीर्णशयनं निवेद्य भार्यां मनोज्ञां पक्षवर्तीं द्रविणवतींचाप्नोति । नार्यपि भर्त्तारम् । चैत्री चित्रायुता चेत् तस्यां चित्रवस्त्रदानेन सौभाग्यमाप्नोति । वैशाख्यां पौर्णमास्यां ब्राह्मणसप्तकं क्षौद्रयुक्तैस्तिलैः संतर्प्य धर्मराजानं प्रीणयित्वा पापेभ्यः पूतो भवति । ज्यैष्ठी ज्येष्ठायुता चेत् तस्यां छत्रोपानत्प्रदानेन नगराधिपत्यमाप्नोति । आषाढ्यामाषाढायुतायामन्नपानदानेन तदैवाक्षयमाप्नोति । श्रावण्यां श्रवणयुतायां जलधेनुमन्नवासोयुगान्वितां दत्त्वा स्वर्गलोकमवाप्नोति । प्रौष्ठपद्यां तद्युक्तायां गोदानेन सर्वपापविनिर्मुक्तो भवति । आश्वयुज्यामश्विनीगते चन्द्रमसि घृतपूर्णभाजनं सुवर्णयुतं विप्राय दत्त्वा दीप्ताग्निर्भवति । कार्त्तिकी चेत् कृत्तितायुक्ता स्यात् तस्यां सितमुक्षाणमन्यवर्णं वा शशाङ्कोदये सर्वसस्यं रत्नगन्धोपेतं द्वीपमध्ये ब्राह्मणाय दद्यात् कान्तारभयं न पश्यति ।

भविष्योत्तरे ।

पौर्णमास्यां वृषोत्सर्गं कारयित्वा विधानतः ।
चन्द्रं रजतनिष्पन्नं पलेनैकेन शोभनम् ॥
पूजयेद्गन्धकुसुमैर्नैवेद्यं विनिवेद्य च ।

चन्द्ररूपलक्षणं तु पुरस्ताद्द्वारदानप्रकरणे विलोकनीयम् ।

दद्याद्विप्राय सत्कृत्य वासोऽलङ्कारभूषणैः ।
मन्त्रेणानेन राजेन्द्र तं निबोध मयोदितम् ॥
क्षीरोदार्णवसम्भूत त्रैलोक्याङ्गणदीपक ।
उमापतिशिरोरत्न शिवायास्तु नमो नमः ॥
दानेनानेन नृपतिर्भ्राजते चन्द्रवद्दिवि ।
अप्सरोभिः परिवृतो यावदाहूतसंप्लवम् ॥

स्कन्दपुराणे ।

तिलपात्राणि यो दद्याद्द्विजेभ्यः शुद्धमानसः ।
अमावास्यां समासाद्य कृष्णानां सुसमाहितः ॥
स पितॄंस्तर्पयित्वा तु अक्षयं नरपुङ्गव ।
पितृलोकं समाप्नोति चिरं च सुखमेधते ॥

'कृष्णानां' तिलानामिति शेषः ।

कूर्मपुराणे ।

अमावास्यामनुप्राप्य ब्राह्मणाय तपस्विने ।
यत् किञ्चिद्देवदेवेशं दद्यादुद्दिश्य शङ्करम् ॥
प्रीयतामीश्वरः सोमो महादेवः सनातनः ।
सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति ॥

सोम उमासहितः ।

भविष्योत्तरे ।

दानान्यमूनि विधिवत् प्रतिपत्क्रमेण
यच्छन्ति ये द्विजवराय विशुद्धसत्त्वाः ।
ते ब्रह्मविष्णुभुवनेषु सुखं विहृत्य
पश्चाद्भवन्ति भुवि भूपवराः सुरूपाः ॥

इति तिथिदानानि ।

अथ युगादितिथिदानम् ।

भविष्योत्तरे युधिष्ठिर उवाच ।

पुनर्मे ब्रूहि देवेश त्वद्भक्त्या भावितात्मनः ।
कथ्यमानमिहेच्छामि शुभं धर्ममिदं महत् ॥
यत्राणुरपि दत्तो हि जतं वा सुमहद्भवेत् ।

श्रीभगवानुवाच ।

शृणु पाण्डव ते वच्मि रहस्यं देवनिर्मितम् ।
यन्मया कस्य चिन्नोक्तं सुप्रियस्यापि भारत ॥

वैशाखमासस्य तु या तृतीया नवम्यसौ कार्त्तिकशुक्लपक्षे ।
नभस्यमासस्य च कृष्णपक्षे त्रयोदशी पञ्चदशी च माघे ॥

वैशाखतृतीया या शुक्लपक्षजा । माघपञ्चदशी कृष्णपक्षजेत्यवधेयम् ।

वैशाखस्य तृतीया या समा कृतयुगेन तु ।
त्रेतायुगेन च समा नवमी कार्त्तिके तु या ॥
त्रयोदशी नभस्ये तु द्वापरेण समा मता ।
माघे पञ्चदशी राजन् कलिकालादिरुच्यते ॥
एताश्चतस्रो राजेन्द्र युगानां प्रभवाः स्मृताः ।
युगादयस्तु कथ्यन्ते तेनैताः सर्वसूरिभिः ॥
उपवासस्तपोदानं जपहोमक्रियादिषु ।
यदासु क्रियते किञ्चित् सर्वं कोटिगुणं भवेत् ॥
वैशाखस्य तृतीयायां श्रीसमेतं जगद्गुरुम् ।
नारायणं पूजयेथाः पुष्पगन्धादिलेपनैः ॥
वस्त्रालङ्कारसम्भारैर्नैवेद्यैर्विविधैस्तथा ।

श्रीसमेतं नारायणं लक्ष्मीनारायणम् । तद्रूपं तु देवतादानप्रकरणस्थितलक्ष्मी-नारायणदाने द्रष्टव्यम् ।

ततस्तस्याग्रतो धेनुर्लवणस्याढकेन तु ।
कार्या कुरुकुलश्रेष्ठ चतुर्भागेन वत्सकः ॥
अविचर्मोपरि स्थाप्य कल्पयित्वा विधानतः ।
शास्त्रोक्तक्रमयोगेन ब्राह्मणाय प्रदापयेत् ॥
श्रीधरः श्रीपतिः श्रीमान् श्रीशः संप्रीयतामिति ।

अनेन विधिना दत्त्वा धेनुं विप्राय भारत ॥
गोसहस्रदशगुणं प्राप्नोतीह न संशयः ।
तथैव कार्त्तिके मासि नवम्यां नक्तभुङ्नरः ॥
स्नात्वा नदीतडागेषु देवखातेषु वा पुनः ।
उमासहायं वरदं नीलकण्ठमथार्चयेत् ॥
पुष्पधूपादिनैवेद्यैरनिन्द्यं शङ्करं शिवम् ।

उमामहेश्वरलक्षणमुक्तं देवतादानप्रकरणस्थित उमामहेश्वरदाने ।

धेनुं तिलमयीं दद्यात् पुराणोक्तविधानतः ।
अष्टमूर्त्तिर्नीलकण्ठः प्रीयतामिति कीर्त्तयेत् ॥
यदत्र प्राप्यते पुण्यं पार्थ तत् केन वर्ण्यते ।
दत्त्वा तिलमयीं धेनुं शिवलोकमवाप्नुयात् ॥
त्रयोदशी नभस्ये या कृष्णं तस्यां समर्चयेत् ।

कृष्णरूपमुक्तं विष्णुधर्मोत्तरे ।

कृष्णश्चक्रधरः कार्यो नीलोत्पलदलद्युतिः ।
द्विबाहुः सौम्यवदनः कुण्डलाभ्यामलङ्कृतः—इति ॥
पितृभ्योऽन्नप्रदानेन मधुना च तथैव च ।
भोजयेद्ब्राह्मणान् भक्त्या वेदवेदाङ्गपारगान् ॥
पितॄनुद्दिश्य दातव्या सवत्सा कांस्यदोहना ।
प्रत्यक्षा गौर्महाराज तरुणी सुपयस्विनी ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
प्रीयतां गोप्रदानेन इति दत्त्वा विसर्जयेत् ॥
कृतेनानेन राजेन्द्र यत् पुण्यं प्राप्यते नृभिः ।
तत् केन गणितुं याति वर्षकोटिशतैरपि ॥
पुत्रान् पौत्रान् प्रपौत्रांश्च धनं सुमहदीप्सितम् ।

इह प्राप्नोति पुरुषः परत्र च शुभां गतिम् ॥
पञ्चदश्यां तु माघस्य पूजयित्वा पितामहम् ।
गायत्र्या सहितं देवं वेदवेदाङ्गभूषितम् ॥

ब्रह्मणो वेदाङ्गानां च लक्षणमुक्तं ब्रह्माण्डदाने। गायत्रीलक्षणं तु पद्मपुराणोक्तब्रह्माण्डदाने। गायत्रीवेदमूर्त्तिस्तु महाभूतघटदाने।

नवनीतमयीं धेनुं फलैर्नानाविधैर्युताम् ।
सहिरण्यां सवत्सां च ब्राह्मणाय निवेदयेत् ॥
कीर्त्तयेत् प्रीयतामत्र पद्मयोनिः पितामहः ।
यत् स्वर्गे यच्च पाताले यन्मर्त्त्ये किञ्च दुर्लभम् ॥
तदवाप्नोत्यसन्दिग्धं पद्मयोनेः प्रसादतः ।
यानि चान्यानि दानानि दत्तानि सुबहून्यपि ॥
युगादिषु महाराज अक्षयानि भवन्ति हि ।
अल्पमल्पं हि यत् किञ्चित् प्रदद्यान्निर्धनोऽपि सन् ॥
अक्षयं च भवेत् स्वर्गे युगादिषु न संशयः ।
वित्तानुसारे स्वं ज्ञात्वा विभवं पार्थिवोऽपि सन् ॥
अनुसारेण वित्तस्य असाध्येन समाधिना ।
भूहिरण्यं गृहं वासः शयनान्यासनानि च ॥
छत्रोपानद्युगानि स्युः प्रदेयानि द्विजातिषु ।
एवं दत्वा यथा शक्त्या भोजयित्वा द्विजानपि ॥
पश्चाद्भुञ्जीत सुमहत् वाग्यतः स्वजनैः समम् ।
यत् किञ्चिन्मानसं पापं वाचिकं कायिकं तथा ॥
तत् सर्वं नाशमायाति युगादितिथिपूजनात् ।
प्रगीयमानो गन्धर्वैः स्तूयमानः सुरासुरैः ॥
रमते वाऽक्षयं कालं स्वर्गलोके न संशयः ।

यद्दीयते किमपि कोटिगुणं तदाहुः
स्नानं जपोऽहवनमक्षयमेव सर्वम् ।
स्यादक्षयातु युगपूर्वतिथीषु राजन्
व्यासादयो मुनिवराः समुदाहरन्ति ॥

इति युगादिदानविधिः ।

अथ वारदानानि । तत्र स्कन्दपुराणे ।

आदित्यादिषु वारेषु सहिरण्याः सदैव तु ।
यः प्रयच्छति तन्मूर्त्तीस्तस्य तुष्यन्ति वै ग्रहाः ॥
दद्यादादित्यमादित्ये सोमं सोमे कुजं कुजे ।
एवं बुधादीन्मन्दे तु राहुकेतुशनैश्चरान् ॥

ब्रह्मपुराणे ।

ग्रहान् स्वर्णमयान् कृत्वा यो विप्रेभ्यः प्रयच्छति ।
तद्दिनेषु यथाशक्त्या सर्वान् कामान् स विन्दति ॥

तेषां लक्षणमुक्तं ब्रह्माण्डदाने* ।

पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः ।
सप्ताश्वः सप्तरज्जुश्च द्विभुजः स्यात् सदा रविः ॥
श्वेतः श्वेताम्बरधरो दशाश्वः श्वेतभूषणः ।
गदापाणिर्द्विबाहुश्च कर्त्तव्यो वरदः शशी ॥
रक्तमाल्याम्बरधरः शक्तिशूलगदाधरः ।
चतुर्भुजो मेषगमो वरदः स्याद्धरासुतः ॥
पीतमाल्याम्बरधरः कर्णिकारदलद्युतिः ।
खड्गचर्मगदापाणिः सिंहस्थो वरदो बुधः ॥

---

* मत्स्यपुराणे इति क्वचित् पाठः ।

देवदैत्यगुरुस्तद्वत् पीतश्वेतौ चतुर्भुजौ ।
दण्डिनौ वरदौ कार्यौ साक्षसूत्रकमण्डलू ॥
इन्द्रनीलद्युतिः शूली वरदो गृध्रवाहनः ।
बाणबाणासनधरः कर्त्तव्योऽर्कसुतः सदा ॥
करालवदनः खड्गचर्मशूली वरप्रदः ।
नीलः सिंहासनस्थश्च राहुरत्र प्रशस्यते ॥
धूम्रा द्विबाहवः सर्वे गदिनो विकृताननाः ।
गृध्रासनगता नित्यं केतवः स्युर्वरप्रदाः ॥
सर्वे किरीटिनः कार्या ग्रहा लोकहितावहाः ।
स्वाङ्गुलेनोच्छ्रिताः सर्वे शतमष्टोत्तरं सदा ॥

अष्टावादित्यादयः शतं केतव इत्युभयेऽप्यष्टोत्तरशतम् । एकोत्तरशतं केतव एको वा केतुरिति केचित् । तत्र पक्षद्वये नवोत्तरशतेन देवताप्रतिमा विधेयाः 'स्वाङ्गुलेन' यजमानाङ्गुलेन । एतेषां दानमन्त्रा ग्रहदाने द्रष्टव्याः ।

## ब्रह्मप्रोक्तेः ।

आदित्यवारे सुवर्णमयमादित्यं कृत्वा रक्तवस्त्रं पद्मरागं च ब्राह्मणाय प्रतिपादयेत् कपिलां वा सूर्यलोके सर्वान् कामानवाप्नोति । निष्कामो मोक्षं सोमदिने राजतं सोमं शङ्खं वा । मङ्गलदिने सौवर्णं मङ्गलं रक्तं धुरन्धरं वा । बुधे सौवर्णं बुधं ज्ञानप्राप्तये दद्यात् । गुरुदिने सौवर्णं बृहस्पतिं पीतं वा वस्त्रं प्रदद्यात् । शुक्रदिने राजतं शुक्रं श्वेतं हयं वा तत्प्रीतये दद्यात् । शनैश्चरे सौवर्णं शनैश्चरमिन्द्रनीलयुतं कृष्णां गां वा तत्प्रीतये दद्यात् । तस्मिन्नेव दिने राहुं केतुसमन्वितं दद्यात् । केतून्* छागसमन्वितान् । तत्प्रीतये दद्यात् । अत्र राहुकेतवोऽपि सौवर्णा एव । एवं विशेषदानेन सर्वान् कामानवाप्नुयात् ।

---

* कृष्णायससमन्वितान् इति न० प्र० पु० पा०

अथाह यमः ।

आदित्यवारे विप्राय हिरण्यं च सदैव तु ।
यः प्रयच्छति पूर्वं हि तस्य तुष्यति वै यमः ॥

विष्णुधर्मोत्तरे ।

लवणाज्यगुडोपेतमपूपं सूर्यवासरे ।
सहिरण्यं नरो दत्त्वा न रोगैरभिभूयते ॥
एवंविधं चेन्दुदिने दत्त्वा सौभाग्यमाप्नुयात् ।
काष्ठदानं भौमदिने शत्रुनाशमवाप्नुयात् ॥
बुधे क्रीडनकानां च दानं बालेषु शस्यते ।
जीवेऽह्नि वस्त्रदानेन परां तुष्टिं समश्नुते ॥
सर्वं वरं तत् प्राप्नोति शुक्रे दत्त्वा रतिं स्त्रियाम् ।
अभ्यङ्गं सौरदिवसे दत्त्वा जीवितमाप्नुयात् ॥

इति वारदानानि ।

अथ नक्षत्रदानानि महाभारते । युधिष्ठर उवाच ।

श्रुतो मे भवतो वाक्यादन्नदानस्य यो विधिः ।
नक्षत्रयोगस्येदानीं दानकल्पं ब्रवीहि मे ॥

भीष्म उवाच ।

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
देवक्याश्चैव संवादे देवर्षेर्नारदस्य च ॥
द्वारकायामनुप्राप्तं नारदं देवदर्शनम् ।
पप्रच्छेमं वद प्रश्नं देवकी धर्मदर्शिनी ॥
तस्याः संपृच्छमानाया देवर्षिर्नारदस्तथा ।
आचष्ट विधिवत् सर्वं यत् तच्छृणु विशां पते ॥

**नारद उवाच ।**

कृत्तिकासु महाभागे पायसेन ससर्पिषा ।
संतर्प्य ब्राह्मणान् साधून् लोकान् प्राप्नोत्यनुत्तमान् ॥
रोहिण्यां पाण्डवश्रेष्ठ माषै रन्नेन* सर्पिषा ।
पयोऽनुपानं दातव्यमानृण्यार्थं द्विजातये ॥
दोग्ध्रीं सवत्सां तु नरो नक्षत्रे सोमदैवते ।
दत्त्वाऽऽदित्यविमानस्थः स्वर्गं प्राप्नोत्यनुत्तमम् ॥

'सोमदैवतनक्षत्रं' मृगशीर्षम् ।

आर्द्रायां कृशरं दत्त्वा तिलमिश्रं समाहितः ।
नरस्तरति दुर्गाणि क्षुरधारांश्च पर्वतान् ॥
पूपं पुनर्वसौ दत्त्वा घृतपूर्णं सुपाचितम् ।
यशस्वी रूपसम्पन्नो वह्वन्ने जायते कुले ॥
पुष्ये तु काञ्चनं दत्वा कृतं चाकृतमेव च ।
अनालोकेषु लोकेषु सोमवत् स विराजते ॥

'कृतं' घटितम् । 'अकृतम्' अघटितम् ।

आश्लेषासु तथा रूप्यं वृषभं वा प्रयच्छति ।
स सर्वभयनिर्मुक्तः शास्त्रवानभिजायते ॥
मघासु तिलपूर्णानि वर्धमानानि मानवः ।
प्रदाय पशुमांश्चैव पुत्रवांश्च प्रजायते ॥
फाल्गुनीपूर्वसमये ब्राह्मणानामुपोषितः ।
भक्ष्यान् फाणितसंयुक्तान् दत्त्वा सौभाग्यमृच्छति ॥
घृतक्षीरसमायुक्तं विधिवत् षष्टिकौदनम् ।
उत्तराविषये दत्त्वा स्वर्गलोके महीयते ॥

---

* अन्नेनेति क्व चित् पुस्तके पाठः ।

यद्वा प्रदीयते दानमुत्तराविषये नरैः ।
सदा फलमनन्तं च भवतीह विनिश्चयः ॥

'फाल्गुनीपूर्वसमये' पूर्वाफल्गुनीसमय इत्यर्थः । 'फाणितं' गुडविकारः । 'उत्तराविषये' उत्तराफाल्गुनीसमय इत्यर्थः ।

हस्ते हस्तिरथं दत्त्वा चतुर्युक्तमुपोषितः ।
नरस्तरति दुर्गाणि क्षुरधारांश्च पर्वतान् ॥

'चतुर्युक्तं' चतुर्भिर्हस्तिभिर्युक्तम् ।

चित्रायां वृषभं दत्त्वा पुण्याङ्गां गां च भारत ।
चरत्यप्सरसां लोके रमते नन्दने वने ॥

'पुण्याङ्गां गाम्' इति शुभलक्षणलक्षितशरीरां धेनुमित्यर्थः ।

स्वातीष्वथ धनं दत्त्वा यदिष्टतममात्मनः ।
प्राप्नोति लोकान् सुशुभानिह चैव महद्यशः ॥
विशाखायामनड्वाहं धेनुं दत्त्वाऽथ दुग्धदाम् ।
सप्रासङ्गं च शकटं सधान्यं वस्त्रसंयुतम् ॥

'प्रासङ्गः' युगान्तरकाष्ठम् ।

पितॄन् देवांश्च प्रीणाति प्रेत्य चानन्त्यमश्नुते ।
न च दुर्गाण्यावाप्नोति स्वर्गलोकं च गच्छति ॥
दत्त्वा यथोक्तं विप्रेभ्यो वृत्तिमिष्टां स विन्दति ।
नारकीयांश्च स क्लेशान् नाप्नोतीति विनिश्चयः ॥
अनुराधासु प्रावारवस्त्रोत्तरमुपोषितः ।
दत्त्वा युगशतं वाऽपि नरः स्वर्गे महीयते ॥

'प्रावारः' प्रवारपटः । 'वस्त्रोत्तरं' परिधानवस्त्रादिकम् ।

कालशाकं तु विप्रेभ्यो दत्त्वा मर्त्यः समूलकम् ।
ज्येष्ठायां मृत्युमुत्साद्य गतिमिष्टां च गच्छति ॥

मूले मूलफलं दत्त्वा ब्राह्मणेभ्यः समाहितः ।
स्वपितॄन् प्रीणयेद्देवगतिमिष्टां च गच्छति ॥
अथ पूर्वास्वाषाढासु दधिपात्राण्युपोषितः ।
कुलवृत्तोपसम्पन्ने ब्राह्मणे वेदपारगे ॥
प्रदाय जायते श्रेष्ठकुले बहुगुणाकुले ।
पुत्रपौत्रैः परिवृतः पशुमान् धनवाँस्तथा ॥
उदमन्थं ससर्पिष्कं प्रभूतमधुफाणितम् ।
दत्त्वोत्तरास्वाषाढासु सर्वलोकानवाप्नुयात् ॥

'उदमन्थः' उदकमिश्राः सक्तवः । 'फाणितं' दुग्धखण्डविकारः ।

दुग्धं त्वभिजितो योगे दत्त्वा मधुघृतप्लुतम् ।
धर्मनिष्ठो मनीषिभ्यः स्वर्गलोके महीयते ॥

अयमर्थः । उत्तराषाढानक्षत्रचतुर्थपादः श्रवणस्याद्यघटिकाचतुष्टयमभिजिद्योगः ।

श्रवणे कम्बलं दत्त्वा वस्त्रान्तरितमेव च ।
श्वेतेन याति यानेन स्वर्गलोकानसंवृतान् ॥
गोप्रयुक्तं धनिष्ठासु यानं दत्त्वा समाहितः ।
वस्त्रमस्मिन् नवं दत्त्वा प्रेत्य राज्यं प्रपद्यते ॥
गन्धं शतभिषायोगे दत्त्वा सागुरुचन्दनम् ।
प्राप्नोत्यप्सरसां लोकं प्रेत्य गन्धाँश्च शाश्वतान् ॥
पूर्वभाद्रपदायोगे राजमाषान् प्रदाय वै ।
सर्वभक्ष्यफलोपेतः स वै प्रेत्य सुखी भवेत् ॥
औरभ्रमुत्तरायोगे यस्तु मांसं प्रयच्छति ।
पितॄन् प्रीणाति सकलान् प्रेत्यानन्त्यं समश्नुते ॥

'उरभ्रो' मेषस्तस्य मांसमौरभ्रम् ।

कांस्योपदोहनीं धेनुं रेवत्यां यः प्रयच्छति ।

स प्रेत्य कामानादाय दातारमुपतिष्ठति ॥
रथमश्वसमायुक्तं दत्त्वाऽश्विन्यां नरोत्तमः ।
हस्त्यश्वरथसम्पन्नं वर्चस्वान् जायते कुले ॥
भरणीषु द्विजातिभ्यस्तिलधेनुं प्रदाय वै ।
गाः प्रसूताश्च प्राप्नोति नरः प्रेत्य यशस्तथा ॥

भीष्म उवाच ।

इत्येष लक्षणोद्देशः प्रोक्तो नक्षत्रयोगतः ।
देवक्या नारदेनेह स्नुषाभ्यः सा ब्रवीदिदम् ॥

विष्णुधर्मोत्तरे ।

कृत्तिकासु सुवर्णस्य दानं बहुफलं स्मृतम् ।
रक्तवस्त्रस्य रोहिण्यां सौम्ये भे लवणस्य च ॥
कृशरस्य तथाऽऽर्द्रायामादित्ये रजतस्य च ।
घृतस्य तु तथा पुष्ये गन्धानामथ सर्पभे ॥
तिलानां च तथा पित्र्ये प्रियङ्गोर्भगदैवते ।
आर्यम्णे चाज्यपूपानां सावित्रे पायसस्य तु ॥
चित्रायां चित्रवस्त्राणां सक्तूनां वायुदैवते ।
ऐन्द्रेऽग्नौ चैव लोहानां मैत्रे माल्यफलस्य च ॥
छत्रस्य च तथा शाक्रे मूले मूलफलस्य च ।
हेम्नश्च मधुयुक्तस्य दानमाप्ये महाफलम् ॥
विश्वेश्वरेऽन्नपानस्य श्रवणे वसनस्य च ।
धान्यस्य वासवे विप्रा वारुणे चौषधस्य च ॥
आजे पुराणबीजानां सस्यानां तदनन्तरे ।
गोरसानां तथा पौष्णे स्नानानामथ वाऽश्विने ॥
तिलानां च महादानं भरणीषु महाफलम् ।

आह विष्णुः ।

प्रतिमासं रेवतीयुते चन्द्रमसि मधुघृतयुतं परमान्नं ब्राह्मणान् भोजयित्वा रेवतीं प्रीणयित्वा रूपभाग्भवेत् ।

यमः ।

मासि मासि च रेवत्यां ब्राह्मणान् घृतपायसम् ।
सदक्षिणं भोजयित्वा रूपभागभिजायते ॥

इति नक्षत्रदानानि ।

अथ योगदानानि विष्णुधर्मोत्तरे ।

विष्कुम्भादिषु योगेषु दानधर्मं महाफलम् ।
तमहं संप्रवक्ष्यामि शृणुध्वमृषिसत्तमाः ॥
विष्कुम्भे सर्वधान्यानां दानं सर्वाघनाशनम् ।
प्रीतौ तथाऽन्नपानानामायुष्मति घृतस्य च ॥
कुङ्कुमस्य च सौभाग्ये यवदानं च शोभने ।
अतिगण्डे च वस्त्राणां पायसस्य सुकर्मणि ॥
धृतौ रजतदानं च शूले मूलादिदानकम् ।
गण्डे मण्डनदानं च वृद्धौ गोदानमिष्यते ॥
ध्रुवे च पञ्चरत्नानां व्याघाते फाणितस्य च ।
हर्षणे गन्धदानं स्यात् वज्रे दद्यान्मणीनपि ॥
सिद्धौ सिद्धार्थका देया व्यतीपाते तु काञ्चनम् ।
वरीयसि तिलान् दद्याद्वस्त्राणि परिघे तथा ॥
जलकुम्भाः शिवे देयाः सिद्धे सिद्धान्नमिष्यते ।
साध्येऽलङ्करणानां च छत्रदानं शुभे शुभम् ॥
शुक्ले चोपानहोर्दानं शस्त्रं ब्रह्मणि सर्पिषः ।
ऐन्द्रे च दीपकान् दद्याद्वैधृतौ कनकं हितम् ॥

दानान्येतेषु योगेषु यथाशक्त्या द्विजोत्तमः ।
भक्तियुक्तो द्विजे दत्त्वा लोके वसति चक्रिणः ॥

इति योगदानानि ।

## अथ करणदानानि विष्णुधर्मोत्तरे ।

करणेषु प्रवक्ष्यामि दानानि द्विजपुङ्गवाः ।
ववे पायसदानं स्यात् शक्तुदानं च बालवे ॥
कौलवे गोरसान् दद्यात् तिलाँस्तैतिलनामनि ।
गराभिधाने लवणं वणिजे देयमम्बरम् ॥
विष्टौ च षष्टिकान्नानि शकुनौ सर्पिरेव च ।
मधुदानं चतुष्पादे शस्तं नागे च वाससाम् ॥
दानं प्रियङ्गोः किंस्तुघ्ने श्रेष्ठमुक्तं द्विजोत्तमाः ।

इति करणदानानि ।

## अथ संक्रान्तिदानानि । तत्र विश्वामित्रः ।

मेषसंक्रमणे भानोर्मेषदानं महाफलम् ।
वृषसंक्रमणे दानं गवां प्रोक्तं तथैव च ॥
वस्त्रान्नपानदानानि मिथुने विहितानि च ।
घृतधेनुप्रदानं च कर्कटे परिशस्यते ॥
ससुवर्णं छत्रदानं सिंहेऽपि विहितं सदा ।
कन्याप्रवेशे वस्त्राणां सुरभीणां तथैव च ॥
तुलाप्रवेशे धान्यानां बीजानामेव चोत्तमम् ।
कीटप्रवेशे वस्त्राणां वेश्मनां दानमेव च ॥

अत्र 'कीटो' वृश्चिकः ।

धनुःप्रवेशे वस्त्राणां यानानां च महाफलम् ।
झषप्रवेशे दारूणां दानमग्नेस्तथैव च ॥

'झषो' मकरः ।

कुम्भप्रवेशे दानं तु गवामम्बुतृणस्य तु ।
मीनप्रवेशे स्नानानां माल्यानामपि चोत्तमम् ॥

दानान्यथैतानि मया द्विजेन्द्राः प्रोक्तानि काले तु नरः प्रदत्त्वा ।
प्राप्नोति कामान् मनसस्त्वभीष्टाँस्तस्मात् प्रशंसन्ति हि कालदानम् ॥

## स्कन्दपुराणे ।

धेनुं तिलमयीं राजन् दद्याद्यश्चोत्तरायणे ।
सर्वकामानवाप्नोति विन्दते परमं सुखम् ॥

## विष्णुधर्मोत्तरे ।

उत्तरे त्वयने विप्रा वस्त्रदानं महाफलम् ।
तिलपूर्णमनड्वाहं दत्त्वा रोगैः प्रमुच्यते ॥

इति संक्रान्तिदानानि ।

## अथ मासदानानि विष्णुधर्मोत्तरे ।

तिलप्रदानं माघे तु याम्यं लोकं न गच्छति ।
प्रियङ्गुं फाल्गुने दत्त्वा प्रियो भवति भूतले ॥
चैत्रे चित्राणि वस्त्राणि दत्त्वा सौभाग्यमश्नुते ।
अपूपानां प्रदानेन वैशाखे स्वर्गमश्नुते ॥
छत्रदानात् तथा ज्यैष्ठे सर्वान् कामान् समश्नुते ।
श्रावणे वस्त्रदानस्य कीर्त्तितं सुमहत् फलम् ॥
प्रौष्ठपदे तथा मासि प्रदानात् फाणितस्य च ।
आश्विने घृतदानेन रूपवानभिजायते ॥
कार्त्तिके दीपदानेन सर्वमौज्ज्वल्यमाप्नुयात् ।
लवणं मार्गशीर्षे तु दत्त्वा सौभाग्यमश्नुते ॥

पौषे कनकदानेन परां पुष्टिं तथैव च ।
पुष्पाणां च सिते पक्षे दानं लक्ष्मीकरं स्मृतम् ॥
फलानां च तथा दानं कृष्णपक्षे महाफलम् ।

वामनपुराणे ।

माघे मासि तिलाः शस्तास्तिलधेनोश्च दानव ।
इध्मेन्धनादयश्चान्ये माधवप्रीणनाय तु ॥
फाल्गुने व्रीहयो गावो वस्त्रं कृष्णाजिनान्वितम् ।
गोविन्दप्रीणनार्थाय दातव्यं भरतर्षभ ॥
चैत्रे चित्राणि वस्त्राणि शयनान्यासनानि च ।
विष्णोः प्रीत्यर्थमेतानि देयानि ब्राह्मणेष्वथ ॥
गन्धाश्च माल्यानि तथा वैशाखे सुरभीणि च ।
देयानि द्विजमुख्येभ्यो मधुसूदनतुष्टये ॥
उदकुम्भस्तु* धेनुश्च तालवृन्तं सचन्दनम् ।
त्रिविक्रमस्य प्रीत्यर्थं दातव्यं साधुभिः सदा ॥

'तालवृन्तं' व्यजनम् ।

उपानद्युगलं छत्रं लवणामलकानि च ।
आषाढे वामनप्रीत्यै दातव्यानि तु भक्तितः ॥
घृतं च क्षीरकुम्भाश्च घृतधेनुः फलानि च ।
श्रावणे श्रीधरप्रीत्यै दातव्यानि विपश्चिते ॥
मासि भाद्रपदे दद्यात् पायसं मधुसर्पिषी ।
हृषीकेशप्रीणनार्थं लवणं सगुडौदनम् ॥
तिलास्तुरङ्गवृषभं दधि ताम्रायसादिकम् ।
प्रीत्यर्थं पद्मनाभस्य देयमाश्वयुजे नरैः ॥

* उदकुम्भाम्बुधेनुश्च-इति क्वचित् पाठः ।

रजतं कनकं दीपान् मणिमुक्ताफलादिकम् ।
दामोदरस्य प्रीत्यर्थं प्रदद्यात् कार्त्तिके नरः ॥
खरोष्ट्राश्वतरान् नागान् शूकराश्वमजाविकम् ।
दातव्यं केशवप्रीत्यै मासि मार्गशिरे नरैः ॥
प्रासादनगरादीनि गृहप्रावरणानि च ।
नारायणस्य तुष्ट्यर्थं पौषे देयानि यत्नतः ॥
दासीदासमलङ्कारमन्नं षड्रससंयुतम् ।
पुरुषोत्तमस्य तुष्ट्यर्थं प्रदेयं सार्वकालिकम् ॥
यद्यदिष्टतमं किञ्चिद्यच्चाप्यस्ति शुभं गृहे ।
तत् तद्धि देयं प्रीत्यर्थं देवदेवस्य चक्रिणः ॥

## देवीपुराणे ।

मार्गे रसोत्तमं दद्याद्घृतं पौषे महाफलम् ।

'रसोत्तमं' लवणम् ।

तिलान् माघे मुनिश्रेष्ठ सप्तधान्यानि फाल्गुने ।
विचित्राणि च वस्त्राणि चैत्रे दद्याद्द्विजोत्तमे ॥
वैशाखे द्विज गोधूमा ज्यैष्ठे तोयभृतं घटम् ।
आषाढे चन्दनं देयं सकर्पूरं महाफलम् ॥
नवनीतं नभोमासि छत्रं प्रौष्ठपदे मतम् ।
गुडशर्करवर्णाढ्यान् लड्डुकानाश्विने मुने ॥
दीपदानं महापुण्यं कार्त्तिके यः प्रयच्छति ।
सर्वकामानवाप्नोति क्रमेणेदमुदाहृतम् ॥
व्रतान्ते गां शुभां दद्यात् सवत्सां कांस्यदोहनाम् ।
सयुगां सस्रजं वत्स दापयेद्विधिनाऽमुना ॥
देवीं विरिञ्चिनं सूर्यं विष्णुं वाऽथ यथाविधि ।

स्वभावशुद्धो विधिवत् पूजयित्वा द्विजोत्तमम् ॥
दातव्या वीतरागे तु कामक्रोधविवर्जिते ।
अयाचके सदाचारे विनीते नियमान्विते ॥
गोदानाल्लभते कामान् गोलोके च मनोरमान् ।
व्रतान्ते मासदानाख्ये समाप्तौ नियमे तथा ॥
आषाढे तोयधेनुं च घृतं भाद्रपदे तथा ।
माघे तु तिलधेनुः स्याद् यो दत्त्वा लभते हितम् ॥

तथा ।

धेनुं तिलमयीं माघे दद्याद्यस्तूत्तरायणे ।
सर्वान् कामानवाप्नोति ज्यैष्ठे तिलमयीं तथा ।
पौषे घृतमयीं दद्याच्छ्रेष्ठाहे विधिना मुने ॥

आदित्यपुराणे ।

ज्यैष्ठे मासि तिलान् दद्यात् पौर्णमास्यां विशेषतः ।
अश्वमेधस्य यत् पुण्यं तत् प्राप्नोति न संशयः ॥

आह यमः ।

घृतमाश्वयुजे मासि नित्यं दद्याद्द्विजातये ।
प्रीणयित्वाऽश्विनौ देवौ रूपभागभिजायते ॥

आह विष्णुः ।

आश्विनं सकलं मासं विप्रेभ्यः प्रत्यहं घृतं प्रदायाश्विनौ प्रीणयित्वा रूपभाग्भवति । तस्मिन्नेव मासि प्रत्यहं गोरसैर्ब्राह्मणान् भोजयित्वा आरोग्यभाग्भवति । तथा माघे मासि अग्निं प्रत्यहं तिलैर्हुत्वा घृतकुल्माषं ब्राह्मणान् भोजयित्वा दीप्ताग्निर्भवति ।

आह प्रचेताः ।

तिलप्रदः प्रजामिष्टां पुरुषः खलु विन्दति ।

माघे मासि विशेषेण तत्तमिस्त्रे विशेषतः ॥

## महाभारते ।

माघे मासि तिलान् यस्तु ब्राह्मणेभ्यः प्रयच्छति ।
सर्वसत्त्वसमाकीर्णं नरकं न स पश्यति ॥

इति मासदानविधिः ।

## अथ ऋतुदानानि विष्णुधर्मोत्तरे ।

स्नानानुलेपनादीनां वसन्ते दानमिष्यते ।
पानकानां तथा ग्रीष्मे छत्राणां तदनन्तरे ॥

## देवीपुराणे ।

यः पुनर्विधिना वत्स देवीमुद्दिश्य प्रावृषि ।
विप्रेषु विप्रकन्यासु तिलादीन् संप्रयच्छति ॥
तस्य सा तुष्यते देवी अचिरेण तु विद्यया ।

## विष्णुधर्मोत्तरे ।

शरद्यन्नस्य धर्मज्ञ वस्त्राणामपि हैमने ।
वह्निदानं नरः कृत्वा सूर्यस्योदयनं प्रति ॥

'वह्निदानं' शीतापनुत्त्यर्थं वह्निदानम् ।

शिशिरे सततं वह्निं तर्पयित्वा तथा तिलैः ।
कुल्माषं सघृतं दत्त्वा यथाशक्त्या द्विजातिषु ॥
कायाग्निदीप्तिप्राकाश्यं शत्रुनाशं च विन्दति ।
शक्तुं सिताखण्डयुतं त्रपुषोर्वारुकान्वितम् ॥
लवणाज्ययुतं दत्त्वा तथा हरितकान्वितम् ।
मध्याह्ने प्रावृषि स्नातः सततं द्विजपुङ्गवाः ॥
जलकुम्भोपरिकृतं ह्यक्षयं फलमश्नुते ।

यमः ।

क्षशरं भोजयित्वा तु स्वशक्त्या शिशिरे द्विजान् ।
दीप्ताग्नित्वं समाप्नोति स्वर्गलोकं च गच्छति ॥

इति ऋतुदानानि ।

अथ संवत्सरदानानि विष्णुधर्मोत्तरे ।

संवत्सरे तु दातॄणां तिलदानं महाफलम् ।
परिपूर्वे तथा दानं यवानां द्विजसत्तम ॥

'परिपूर्वे' इति परिवत्सर इत्यर्थः ।

इदापूर्वे च वस्त्राणां धान्यानां चानुपूर्वकम् ।
इत्पूर्वे रजतस्यापि दानं प्रोक्तं महाफलम् ॥

'इदापूर्वे' इत्यादि इदावत्सरः अनुवत्सरः 'इद्वत्सर' इति संवत्सरादयश्च ज्योतिःशास्त्रे प्रसिद्धाः ।

इति संवत्सरदानानि ।

इति श्रीमहाराजाधिराजश्रीमहादेवस्य समस्तकरणाधीश्वरसकल-
विद्याविशारदश्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ
दानखण्डे कालविशेषदानप्रकरणम् ॥ १२ ॥



## अथानन्तफलदानानि ।

येनारामाभिरामाः परिसरलहरीमग्ननागास्तडागाः
प्रासादाः सादयन्तो रविरथतुरगस्वैरसञ्चारलीलाम् ।
कूपा भूपालसेनाशतसततपयःकर्मनिर्माणदक्षा
नक्षत्राणि स्पृशन्त्यो द्विजवसतिहिता निर्मिता हर्म्यमालाः ॥
येन श्रवःसरणिसञ्चरणोचितानि
दानानि तान्यपि दृशोरतिथीकृतानि ।
हेमाद्रिरद्भुतविपश्चिदपश्चिमोऽयं
सम्प्रत्यनन्तफलदानसमूहमाह ॥

कानि पुनस्तानीत्यपेक्षायां भविष्यत्पुराणे ।

संपादयेच्च नियमादारोग्यं भोगसाधनम् ।
अभयं पान्थशुश्रूषामन्नोदकमहीरुहान् ॥
अनन्तफलदान्याहुर्दानान्येतानि सूरयः ।

तत्रारोग्यदानं तावदुच्यते । आह विश्वामित्रः ।

आरोग्यदानात् परमं न दानं विद्यते क चित् ।
अतो देयं रुजार्त्तानामारोग्यं भाग्यवृद्धये ॥
औषधं पथ्यमाहारं तैलाभ्यङ्गं प्रतिश्रयम् ।
यः प्रयच्छति रोगिभ्यः स भवेद्व्याधिवर्जितः ॥

संवर्त्तः ।

औषधं स्नेहमाहारं रोगिणां रोगशान्तये ।
ददानो रोगरहितः सुखी दीर्घायुरेव च ॥

**अगस्त्यः ।**

अन्नौषधप्रदातारः सुखं यान्ति निरामयाः ।

**सौरपुराणे ।**

रोगिणे रोगशान्त्यर्थमौषधं यः प्रयच्छति ।
रोगहीनः स दीर्घायुः सुखी भवति सर्वदा ॥

**नन्दिपुराणे ।**

अञ्जनं यो नरो दद्यादक्ष्णोर्व्याधिनिवृत्तये ।
विप्राय स पुमान् याति सूर्यलोकं महामतिः ॥
आरोग्यनयनो दिव्यः सुभगो जायते नरः ।

**तस्मिन्नेव पुराणे ।**

धर्मार्थकाममोक्षाणामारोग्यं साधनैर्युतः ।
अतस्त्वारोग्यदानेन नरो भवति सर्वदा ॥
आरोग्यशालां कुरुते महौषधपरिच्छदाम् ।
विदग्धवैद्यसंयुक्तां भृत्यावसथसंयुताम् ॥
वैद्यस्तु शास्त्रवित् प्राज्ञो दृष्टौषधपराक्रमः ।
औषधीमूलवर्णज्ञः समुद्धरणकालवित् ॥
रसवीर्यविपाकज्ञः शालिमांसौषधीगणे ।
योगविद्देहिनां देहं यो धिया प्रविशेद्बुधः ॥
धातुपथ्यमयज्ञश्च निदानविदतन्द्रितः ।
व्याधीनां पूर्वलिङ्गज्ञस्तदुत्तरविधानवित् ॥
देशकालविधानज्ञश्चिकित्साशास्त्रवित् तथा ।
अष्टाङ्गायुर्वेदवेत्ता मुष्टियोगविधानवित् ॥

'अष्टावङ्गानि' आयुर्वेदस्य । यथा शल्यं शालाक्यं कायचिकित्सा भूतविद्या कौमारभृत्यमगदतन्त्रं रसायनतन्त्रं वाजीकरणतन्त्रमिति सुश्रुतोक्तानि ।

एवंविधः शुभो वैद्यो भवेद्यत्राभियोजितः ।
आरोग्यशालामेवं तु कुर्याद्यो धर्मसंश्रयः ॥
स पुमान् धार्मिको लोके स कृतार्थः स बुद्धिमान् ।
सम्यगारोग्यशालायामौषधैः स्नेहपाचनैः ॥
व्याधिनं विरुजीकृत्य अप्येकं करुणायुतः ।
प्रयाति ब्रह्मसदनं कुलसप्तकसंयुतः ॥
आढ्यो वित्तानुसारेण दरिद्रः फलभाग्भवेत् ।
दरिद्रस्य कुतः शाला आरोग्याय भिषग्बुधा ॥
अपि मूलेन केनापि मर्दनाद्यैरथापि वा ।
स्वस्थीकृते भवेन्मर्त्यो पूर्वोक्तं लोकमव्ययम् ॥
वातपित्तकफाद्यानां चयापचयभेदिनाम् ।
यस्तु स्वल्पाभ्युपायेन मोचयेत् व्याधिपीडितान् ॥
सोऽपि याति शुभाँल्लोकानवाप्यान् यज्ञयाजिभिः ।

स्कन्दपुराणे ।

आरोग्यशालां यः कुर्यात् महावैद्यपुरस्कृताम् ।
सर्वोपकरणोपेतां तस्य पुण्यफलं शृणु ॥
धर्मार्थकाममोक्षाणामारोग्यं साधनं यतः ।
तस्मादारोग्यदानेन तद्दत्तं स्याच्चतुष्टयम् ॥
अथैकमार्त्तविद्वांसं स्वस्थीकृत्य प्रयत्नतः ।
प्राप्नोति सुमहत् पुण्यमनन्तं क्षयवर्जितम् ॥
ज्ञानयोगरतं शान्तं रोगार्त्तं शिवयोगिनम् ।
यः स्वस्थं कुरुते सोऽपि सर्वदानफलं लभेत् ॥
ब्रह्मा विष्णुः सुराः सर्वे व्याधयः स्वजना नृपाः ।

योगस्यैते महाविघ्ना व्याधयस्ते न योगिनाम्* ॥
ब्रह्मक्षत्रियविट्शूद्रान् रोगार्त्तान् परिपाल्य च ।
यत् पुण्यं महदाप्नोति न तत्सर्वैर्महामखैः ॥
आकाशस्य यथा नान्तः सुरैरप्युपलभ्यते ।
तद्वदारोग्यदानस्य नान्तो वै विद्यते क्व चित् ॥
पुण्येनानेन महता गत्वा शिवपुरं नरः ।
मोदते विविधैर्भोगैर्विमानैः सर्वकामिकैः ॥
एकविंशत्कुलोपेतः सभृत्यः परिपालितः ।
आस्ते शिवपुरे तावद्यावदाहूतसंप्लवम् ॥
ततः स्वधर्मशेषेण संप्राप्तः प्रयतः सदा ।
ज्ञानमुत्पद्यते तस्य रुद्रेभ्यः परिचारकः ॥
ज्ञानाद्विरक्तः संसाराच्छिवध्यानमुपाश्रितः ।
स्वदेहं तृणवत् त्यक्त्वा सर्वदुःखान्तमाप्नुयात् ॥
समस्तदुःखनिर्मुक्तः शुद्धः स्वात्मव्यवस्थितः ।
सर्वज्ञः परिपूर्णश्च मुक्त इत्यभिधीयते ॥
तस्माद्भोगापवर्गार्थं रोगार्त्त समुपाचरेत् ।
विशेषेण तु योगीन्द्रं शरीरेण धनेन च ॥
रोगिणो नोद्विजेत् प्राज्ञो दुर्बलानपि सर्वदा ।
तान् न्यसेद्गुरुवन्नित्यमेवं धर्मः प्रवर्त्तते ॥
योऽनुगृहीतमात्मानं मन्यमानो दिने दिने ।
उपसर्पेत रोगार्त्तस्तीर्णस्तेन भवार्णवः ॥

इत्यारोग्यदानम् ।

---

* स्वेन योगिनामिति वा पाठः ।

अथ रोगहरदानानि । ब्रह्माण्डपुराणे । ब्रह्मोवाच ।

भगवन् प्राणिनः सर्वे रोगार्त्ताः प्रभवन्त्यतः ।
एषां तत्परिहारार्थं किं कर्त्तव्यं जगत्पते ॥
इत्येवमुक्तो भगवान् ब्रह्मणा परमेष्ठिना ।
यदाह तस्मै तत् सर्वं ब्रवीमि मुनिसत्तमाः ॥
आधयो व्याधयश्चैव शरीरपरिशोषणाः ।
पुण्यं तत्परिहारार्थं कर्त्तव्यं हितमिच्छता ॥
ज्वरातिसारो यक्ष्मा च गुल्मशूलभगन्दराः ।
कुष्ठाग्निरोगा वातश्च कण्ठशूलमसूरिकाः ॥
कण्ठदन्ताक्षिकर्णेषु शिरोरोगोपजिह्विका ।
त्रिदोषसम्भवाः सर्वे रोगाः प्राणिभयङ्कराः ॥
ग्रन्थयो मूत्रकृच्छ्रं च वस्तिरोगो महोदरम् ।
एते चान्ये च बहवो महावेगा महाबलाः ॥
व्याधयः शतसङ्ख्याका मृत्योर्हेतव एव ते ।
यद्यद्रोगशमं कुर्यात् तत् तत् कार्यं मनीषिभिः ॥
औषधं जपहोमादि दानं देवार्चनादिकम् ।
सर्वरोगप्रशमनं सौवर्णं दानमुच्यते ॥
ज्वरे मसूरिकायां च राजयक्ष्मणि चैव तत् ।
गुल्मे तथाऽऽयसं प्रोक्तं कुष्ठे राजतमुच्यते ॥
रत्नदानाच्छमं यान्ति गुदोत्पन्नाश्च सर्वशः ।
शमः स्यादन्ततो व्याधे*र्भूदानात् कमलासन ॥
शमार्थं वातरोगाणां वासोदानं विधीयते ।
कण्ठजिह्वोद्भवादीनां रोगाणां शान्तिमिच्छता ॥

* उत्तरव्याधेरिति क्वचित् पाठः ।

धान्यं वासो हिरण्यं वा दातव्यानि प्रयत्नतः ।
सुवर्णदानं सर्वेषां रोगाणां शमकारणम् ॥
तस्मात् सर्वप्रयत्नेन दातव्यं कमलोद्भव ।
अक्षिसम्भवरोगाणामाज्यं कनकसंयुतम् ॥
पानीयं पायसं मुद्गाः शर्करा घृतसंयुताः ।
सर्वाङ्गतोदकाशोषु खण्डं वै सोपवर्हणम् ॥
दद्याद्वै कण्ठरोगाणां कम्बलं कमलोद्भवे ।
तथा च रत्नरजतैर्यथा शक्त्यनुरूपतः ॥
कृत्वा च प्रतिमां व्याधेर्दद्याद्विप्राय यत्नतः ।
शतेन वा तदर्धेन त्रिंशता निष्कसङ्ख्यया ॥
जातरूपमयं व्याधेः प्रतिरूपं तु कारयेत् ।
निधाय पात्रे संपूर्णे तण्डुलैः शतरूपकैः ॥
अलङ्कृत्य च सौवर्णं रूपं त्वगुरुलेपनैः ।
वासोयुगेन संवेष्ट्य हिरण्यवहुभूषणैः ॥
अलङ्कृताय विप्राय दत्त्वा मन्त्रमुदीरयेत् ।
ये मां रोगाः प्रबाधन्ते देहस्थाः सततं तताः ॥
गृह्णीष्व प्रतिरूपेण तान् रोगान् द्विजसत्तम ।
वाढमित्येव तद्रूपं गृह्णीयाद्व्याधिभिः सह ॥
ततस्त्वरोगी दाता च दीर्घायुष्ट्वं प्रपद्यते ।
एवं बहुविधं शान्त्यै रोगाणां कमलासन ॥
कार्यमुक्तं मया तेभ्यः किमन्यत् कथयामि ते ।
एवमुक्तो भगवता ब्रह्मा लोकपितामहः ॥
यदाह नारदायेदं मया तत् सर्वमीरितम् ।

इति रोगहरदानविधिः ।

अथ भोगदानानि । तत्र रत्नदानं तावदाह जाबालिः ।

रत्नानि च द्विजे दद्याद्बहुमूल्यानि मानवः ।
अलङ्कारनिमित्तं वा देवताभ्योऽतियत्नतः ॥
स पापतापनिर्मुक्तो मुक्तिमेव समश्नुते ।
न रत्नेभ्यः परं वस्तु न चास्ति भुवनत्रये ॥
अतस्तद्दानतो यत् स्यात् फलं तत् केन वर्ण्यते ।

विश्वामित्रः ।

यः प्रयत्नेन रत्नानि विप्रेभ्यः संप्रयच्छति ।
स सर्वगुणसम्पन्नान् पुत्रान् विन्दति नन्दति ॥

संवर्त्तः ।

समुद्रजानि रत्नानि नरो विगतकल्मषः ।
दत्त्वा विप्राय महते प्राप्नोति महतीं श्रियम् ॥

वेदव्यासः ।

रत्नदानं च सुमहत् पुण्यमुक्तं जनाधिप ।
तानि विक्रीय यजति ब्राह्मणो ह्यभयङ्करः ॥

स्कन्दपुराणे ।

विद्रुमाणां प्रदानेन रुद्रलोकं व्रजेन्नरः ।
सर्वपातकनिर्मुक्तो मुक्तादानेन जायते ॥
लोकमाप्नोति दानेन नरो वज्रस्य वज्रिणः ।
तथा प्रदत्तैर्गोमेदैर्मोदते नन्दने वने ॥
सर्वे ग्रहाः प्रतुष्यन्ति पुष्परागस्य दानतः ।
गारुत्मतैर्मरुत्वन्तं नियतं जयति श्रिया ॥
वैदूर्यैः सूर्यलोकं च पद्मरागैररोगताम् ।

दत्तैरिति शेषः ।

प्रदानादिन्द्रनीलानां लीलानां भाजनं भवेत् ।
सुखी शङ्खप्रदानेन शक्तिः शुक्तिप्रदानतः ॥

इति रत्नदानम् ।

अथाह वृद्धगौतमः ।

माणिक्यं पद्मरागं च वज्रं वैदूर्यमेव च ।
मौक्तिकं गोमेदं पुष्परागं मरकतं तथा ॥
हरितं च नवैतानि स्वर्णपात्रोपरि न्यसेत् ।
अथ वा राजते ताम्रे आज्येन च प्रपूरयेत् ॥
नवग्रहाणां प्रीत्यर्थं ब्रह्मणा निर्मितं पुरा ।
गन्धपुष्पाक्षतैर्धूपैर्नैवेद्यैस्तान् प्रपूजयेत् ॥
स्वलिङ्गैश्चैव मन्त्रैश्च होमः कार्यस्तु पूर्ववत् ।

'पूर्ववत्' इति यद्दयत्रोक्तमार्गेणेत्यर्थः ।

ततो ब्राह्मणमाहूय सर्वशास्त्रार्थकोविदम् ।
आदित्यादिग्रहाः सर्वे नवरत्नप्रदानतः ॥
विनाशयन्तु मे हृष्टाः क्षिप्रमेव भगन्दरम् ।

दानमन्त्रः ।

अनेन कर्मणा नूनं यथावद्विहितेन तु ।
नरो नैरुज्यमाप्नोति निःसन्दिग्धं भगन्दरी ॥

इति भगन्दरहरदानम् ।

तथा ।

माणिक्यं वज्रसहितमव्रणं जातितः शुभम् ।
रक्तवस्त्रेण संवेष्ट्य खारिकापञ्चकोपरि ॥
यद्वा विभवसारेण माणिक्यं यवपुञ्जके ।

निधाय गन्धपुष्पाद्यैरर्चयेद्भक्तिपूर्वकम् ॥
ब्राह्मणं श्रुतसम्पन्नं स्वाचारं संयतेन्द्रियम् ।
विनीतवेषमाहूय भक्त्या प्रयतमानसः ॥
सौवर्णेनोपवीतेन सम्यग्वस्त्राङ्गुलीयकैः ।
पूजयित्वा तु विधिवत् कृतहोमाय पूर्ववत् ॥
मन्त्रेणानेन विधिवत् तस्मै दद्याद्व्रणी शुभम् ॥
देव सूर्य जगन्नाथ सर्वलोकनमस्कृत ।
माणिक्यवज्रदानेन प्रणाशय मम व्रणम् ॥

स्नानमन्त्रः ।

व्रणाः शस्त्रेण येऽपि स्यु विषदिग्धेन संयुगे ।
तेऽपि शुद्धाः प्ररोहन्ति यथा प्रोक्तं तु वायुना ॥

इति व्रणघरत्नदानम् ।

## वायुपुराणे ।

गलगण्डी गलद्रव्यहर्त्ता भवति मानवः ।
दानेन तत्प्रतीकारं वक्ष्यामि शृणु भास्कर ॥
माणिक्यं पद्मरागं च वज्रं गोमेदमेव च ।
वैदूर्यं पुष्परागं च मुक्ता मरकतं तथा ॥
एभिर्मालां प्रकुर्वीत सूत्रमप्यत्र राजतम् ।
अलाभे मौक्तिकाद्यन्यतमैर्मालां प्रकल्पयेत् ॥
सर्वत्र राजतं सूत्रमिति देवैः प्रकल्पयेत् ।
ताम्रपात्रे विनिक्षिप्य तिलानामुपरि न्यसेत् ॥
तिलानां च परीमाणं द्रोणपञ्चकमिष्यते ।
यद्वा तदर्धमेव स्यात् स्वशक्त्या वाऽपि कारयेत् ॥
महाशान्तिं तथा कुर्याद्ब्राह्मणैर्वेदपारगैः ।

'महाशान्तिः' नवग्रहशान्तिरित्यर्थः ।

आचार्यश्च शुचिर्दक्षः सर्वशास्त्रार्थतत्त्ववित् ।
श्रुतवृत्तोपसम्पन्नः सर्वप्राणिहिते रतः ॥
एवंविधं पूजयित्वा वस्त्रमाल्यानुलेपनैः ।
होमं च कारयेत् तेन समिदाज्यचरूत्कटम् ॥
आसत्येन तथा मन्त्रो गणानामिदमित्यपि ।
मन्त्राः क्रमेण संयोज्याः सोमं राजानमित्यपि ॥
मन्त्रेण स्विष्टकृतं दद्याद्गलगण्डी च वाग्यतः ।
मन्त्रेणानेन विधिवत् प्राङ्मुखाय ह्युदङ्मुखः ॥
मालेयं सर्वदैवत्या ब्रह्मविष्णुशिवादिभिः ।
रुद्रादिलोकपालैश्च तथा सर्वामरैरपि ॥
सततं कण्ठलग्ना या धारिता प्रीतिपूर्वकम् ।
ब्राह्मणाय प्रदत्तेयं गळगण्डं व्यपोहतु ॥

दानमन्त्रः ।

ग्रहशान्तिः कृता यैस्तु तेभ्यो दद्याच्च दक्षिणाम् ।
पुण्याहवाचनं कृत्वा भुञ्जीत सह बन्धुभिः ॥

इति गलगण्डहरव्रतदानम् ।

## अथालङ्कारदानम् । ब्रह्मवैवर्त्तपुराणे ।

द्विजातिभ्यस्तु यो दद्यादलङ्कारान् समुज्ज्वलान् ।
सोऽलङ्कृतः स्वर्गलोके क्रीडत्यप्सरसां गणैः ॥
अलङ्कारप्रदानेन सुरूपः सुभगो भवेत् ।
तथाऽलङ्कारदानेन दीर्घमायुश्च विन्दति ॥
नराभरणदानेन तुष्टिं याति सदाशिवः ।
योषिदाभरणैर्दत्तैः प्रीयते हिमशैलजा ॥

महाभारते ।

युवाऽप्यविकलाङ्गोऽपि दधानोऽप्युज्ज्वलं वपुः ।
विनाऽलङ्करणैर्नूनं न धत्ते मञ्जुलां श्रियम् ॥
दुर्लभं मानुषं तावत् तत्रापि शुभवेषता ।
तस्यापि भूषा तारुण्यं जायते नरसत्तम ॥
एतत् सर्वं मनुष्याणां वृथैव स्यादभूषणम् ।
तस्मात् सर्वप्रयत्नेन प्रदद्याद्भूषणानि तु ॥

विष्णुधर्मोत्तरे ।

मूर्धाभरणदानेन व्रजेन्मूर्धाभिषिक्तताम् ।
कर्णजैः कर्णकीर्त्तिः स्याल्लक्ष्मीः कण्ठैरकुण्ठिता ॥
पाणिजैः प्राणिजैत्रः स्याज्जघनैरजघन्यता ।
जानुजैर्मनुजैत्रं स्याच्चरणं चरणोद्भवैः ॥
नालङ्कृतेभ्यो नरपुङ्गवेभ्यः परं नृलोके स्पृहणीयमस्ति ।
न लभ्यते तच्च विना प्रदानादतः प्रदेयानि विभूषणानि ॥

इत्यलङ्कारदानम् ।

अथ वस्त्रदानम् । देवलः ।

कान्तियुक् सुभगः श्रीमान् भवत्यम्बरदानकृत् ।

नन्दिपुराणे ।

वस्त्रं यश्चार्थिने दद्याच्छुभ्रं वाऽपि यदृच्छया ।
स भवेद्धनवान् श्रीमान् बृहस्पतिपुरे वसेत् ॥

आदित्यपुराणे ।

योगिनां च दरिद्राणां ये च वस्त्रप्रदा नराः ।
तेषां दिव्यानि वस्त्राणि सुगन्धीनि मृदूनि च ॥

वातश्चैव प्रवहति सुगन्धो ह्यमृतोपमः ।

लिङ्गपुराणे ।

वस्त्रं जलं पवित्रं च दद्याच्च शिवयोगिने ।
स महाभोगमाप्नोति अन्ते योगं च शाश्वतम् ॥

महाभारते ।

वाससां तु प्रदानेन स्वदारनिरतो नरः ।
सुवस्त्रश्च सुवेषश्च भवतीत्यनुशुश्रुमः ॥

भविष्यत्पुराणे ।

मध्यमोत्तमवस्त्राणि प्रदद्यादहतानि च ।
स तेनैवानुसारेण प्राप्नोति विपुलं फलम् ॥

विष्णुधर्मोत्तरे । हंस उवाच ।

दानानामुत्तमं लोके वस्त्रदानं प्रकीर्त्तितम् ।
वासो हि सर्वदैवत्यं सर्वप्रायोज्यमुच्यते ॥
वस्त्रदाता सुवेषः स्याद्रूपद्रविणसंयुतः ।
युक्तो लावण्यसौभाग्यैर्नीरोगश्च तथा द्विजः ॥
नीलं रक्तं तथा जीर्णं न देयं ब्राह्मणस्य तु ।
देयं वरं चाङ्गिरसं लोकं याति बृहस्पतेः ॥
दत्त्वा कार्पासिकं वस्त्रं स्वर्गलोके महीयते ।
दत्त्वा सरोम तत्रापि फलं दशगुणं भवेत् ॥
आविकं वसनं दत्त्वा भृगूणां लोकमाप्नुयात् ।
छागं दत्त्वा चाङ्गिरसं क्षौमं दत्त्वा बृहस्पतेः ॥
वसूनां लोकमाप्नोति कुशकौशेयवाससी ।
कृमिजं च तथा दत्त्वा सोमलोके महीयते ॥

अग्निष्टोममवाप्नोति दत्त्वेव मृगलोमिकम् ।
दत्त्वा वल्कलजं वासो वसूनां लोकमाप्नुयात् ॥
समोचककदल्यादि दत्त्वा चैव तथाऽजिनम् ।
वारवाणमुरस्त्राणं शिरस्त्राणं तथैव च ॥
पादत्राणं च ददतः पृथग्*यज्ञफलं लभेत् ।
वस्त्रदानं पवित्रं तु पितृणामपि तारणम् ॥
कौसुम्भरक्तं दत्त्वा तु सौभाग्यमहदाप्नुयात् ।
दानात् कुङ्कुमरक्तस्य लावण्यं महदाप्नुयात् ॥
रङ्गैरन्यैश्च नीलैश्च रक्तं दत्त्वा सुखी भवेत् ।
यथा यथा तु† वस्त्रस्य भवतीह महार्घता ॥
यथा यथा तु शुभता तथा पुण्यफलं महत् ।
अन्येषामेव दानानामेतदेव प्रकीर्त्तितम् ॥
सर्वदो वस्त्रदः प्रोक्तो यतः सर्वत्र वस्त्रवान् ।
अवाप्नोति च धर्मज्ञस्तद्धि तस्माद्विशिष्यते ॥
वस्त्रदः सुचिरं कालं भुक्त्वा देवसुखं भुवि ।
विमानेनार्कवर्णेन हंसयुक्तेन भास्वता ॥
मानुष्यमासाद्य भवत्यरोगः शौचान्वितः सौख्यपरोऽपहीनः ।
जनाभिरामश्च तथा सुवेषः पूज्यश्च लोके विदुषां सदैव ॥

इति वस्त्रदानम् ।

## अथ शौचकीये । ईश्वर उवाच ।

वासोदानं प्रवक्ष्यामि मम प्रीतिविवर्धनम् ।
आयुरारोग्यदं नृणां सौख्यहेतुकमुत्तमम् ॥

---

* जन्मफलम् इति न॰ प्र॰ पु॰ पा॰ ।

† सुलभात् इति न॰ प्र॰ पु॰ पा॰ ।

वस्त्रयुग्मं सितं सूक्ष्ममेकैकस्य प्रकल्पयेत् ।
एकादशानां विप्राणां रुद्रैकादशरूपिणाम् ॥
गन्धपुष्पैरलङ्कृत्य भोजयित्वा विधानतः ।
उक्तमन्त्रैरथैतेभ्यस्तानि वस्त्राणि दापयेत् ॥
प्रसीदतु भवो नित्यमस्माकं कृत्तिवाससः ।
वस्त्राण्यस्मत्प्रदत्तानि प्रतिगृह्णातु शङ्करः ॥
दत्तेषु वस्त्रेषु नरस्तन्तुभिर्गुणिताः समाः ।
रुद्रतुल्यो बली भूत्वा रुद्रलोके महीयते ॥

एकादशरुद्रनामानि रुद्रैकादशतिलदाने द्रष्टव्यानि ।

इति रुद्रैकादशवस्त्रदानविधिः ।

## अथ देवताभ्यो वस्त्रदानम् । आदित्यपुराणे ।

वह्नेर्वस्त्रप्रदानेन ब्रह्मलोकं प्रपद्यते ।

## नन्दिपुराणे ।

वासांसि तु विचित्राणि सारवन्ति मृदूनि च ।
स्नापितानि शिवे दद्यात् द्विकोपाणि * नवानि च ॥
यावत् तद्वस्त्रतन्तूनां परिमाणं विधीयते ।
तावद्वर्षसहस्राणि शिवलोके महीयते ॥

## वाराहपुराणे ।

क्षौमाम्बराणि यो दद्यात् पत्त्रोर्णानि च चक्रिणे ।
कार्पासजानि वा भक्त्या दद्याद्वित्तानुसारतः ॥
तत्र वाससि यावन्तस्तन्तूनां परमाणवः ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥

---

* विशोकानीति क्वचित् पाठः ।

भविष्यत्पुराणे ।

यो वस्त्रं भानवे दद्यादहतं च महाधनः ।
स हेलिलोकमासाद्य वन्द्यते त्रिदशैरपि ॥

देवीपुराणे ।

अण्डजैर्वोर्णजैर्वाऽपि वस्त्रैरभ्यर्च्य शैलजाम् ।
संभूष्याभरणैः शक्र चक्रवर्त्तित्वमाप्नुयात् ॥

अथ शोकहरवस्त्रदानम् । तत्र वृद्धबौधायनः ।

विघ्नकर्त्ता च भोक्तॄणां शोकी भवति मानवः ।
तस्य कर्मविपाकोत्थं व्याधिनाशनमुत्तमम् ॥
दानं वक्ष्याम्यशेषेण सर्वशोकविनाशनम् ।
क्षौमवस्त्रं समानीय बहुमूल्यं यदर्हति ॥
मुक्ताफलानि बध्नीयाद्वस्त्रप्रान्ते समन्ततः ।
कुङ्कुमेनाङ्कितं सम्यक् कर्पूरागुरुधूपितम् ॥
तण्डुलोपरि संस्थाप्य तण्डुलाँश्च स्वशक्तितः ।
उपचारैः षोडशभिराचार्यः पूजयेन्मुदा ॥
युवं युवासुवासाभ्यां मन्त्राभ्यां पूजनं विदुः ।

युवं वस्त्राणीत्येकः । युवा सुवासा इत्यपरो मन्त्रः ।

होमं चापि प्रकुर्वीत समिदाज्यतिलैरपि ।
उद्बुद्धस्व इदं विष्णुरापस्मिन् सप्त इत्यपि ॥
मन्त्रैः क्रमेण जुहुयात् स्विष्टिकृच्च यदस्य च ।

'यदस्य कर्मणोऽत्यरीरिचम्'-इति मन्त्रेण होमः ।

हुत्वा हुत्वा च सम्पातान् पात्रे सर्वान् निवेश्य तु ।
सङ्ख्या चाष्टोत्तरशतमष्टाविंशतिरेव च ॥

सम्पातेनाङ्गमामृज्य सर्वमेव हि रोगिणः ।
अक्षिभ्यामिति सूक्तेन यथा लिङ्गं तथैव च ॥
वाससां मार्जनं कुर्यान्मार्जयेद्दर्भपिञ्जलैः ।
आचार्यायाथ तद्वस्त्रं दद्याच्छोकी सदक्षिणम् ॥
मन्त्रेणानेन विधिवद्दक्षिणाभिमुखः शुचिः ।
ऋषीणां प्रवरोऽगस्त्यो लोपामुद्रापतिः प्रभुः ॥
क्षौमवस्त्रप्रदानेन तुष्टो व्याधिं व्यपोहतु ।

दानमन्त्रः ।

ब्राह्मणेभ्यस्तथाऽन्येभ्यो दद्याच्छक्त्या च दक्षिणाम् ।
ततः स्नातः शुचीभूतो वस्त्रमाल्योपशोभितः ॥
ब्राह्मणैर्बन्धुभिः सार्धं भुञ्जीतातीवभक्तितः ।

इति वस्त्रदानम् ।

## अथोष्णीषदानम् । नन्दिपुराणे ।

उष्णीषदायिनो मर्त्या जायन्ते मुकुटोज्ज्वलाः ।
विस्तीर्णे राजवंशे तु सितच्छत्राग्रचलक्षणाः ॥

## विष्णुधर्मोत्तरे ।

उष्णीषाणि विचित्राणि यः प्रदद्याद्द्विजातिषु ।
रक्तानि वाऽथ श्वेतानि कौसुम्भान्यथ वा पुनः ॥
स सौन्दर्यं परं प्राप्य वनितावल्लभो भवेत् ।
सुकेशाः सुमुखा राजन् यस्मादुष्णीषदायिनः ॥
तस्मात् तेषां प्रदानेषु प्रयतस्व महाभुज ।

## अथोर्णापटदानम् । आह काश्यपः ।

और्णं प्रावरणं योऽपि भक्त्या दद्याद्द्विजातये ।
सोऽपि याति परां सिद्धिं मर्त्यैरन्यैः सुदुर्लभाम् ॥

यस्त्वकिञ्चनवृत्तिभ्यस्तपस्विभ्यः प्रयच्छति ।
और्णं प्रावरणं दिव्यं शीतवातातपापहम् ॥
निरस्तसर्वदुःखौघो जायते स महाधनी ।

## वह्निपुराणे ।

नवं सूक्ष्मं सुविपुलं यः प्रयच्छति कम्वलम् ।
शीतार्दिने द्विजेन्द्राय तेषां मार्गसुखप्रदः ॥

## नारदीयपुराणे ।

निष्किञ्चनेभ्यो दीनेभ्यः शीतवातमहातपैः ।
अर्दितेभ्यः करुणया वस्त्रमौर्णं ददाति यः ॥
न तस्य सुकृतं वक्तुं शक्यते त्रिदशैरपि ।
आधिव्याधिविनिर्मुक्तः सोऽक्षयं सुखमश्नुते ॥

## अथ शय्यादानम् । वेदव्यासः ।

सुगन्धिचित्रास्तरणोपपन्नं दद्यान्नरो यः शयनं द्विजाय ।
रूपान्वितां पक्षवतीं मनोज्ञां भार्यामयत्नोपचितां लभेत् सः ॥

## अथ विष्णुसंहितायाम् ।

शय्यादानं च यो दद्यात् तस्यापि शृणु विस्तरम् ।
सर्वकालेषु दातव्यं तथा पुण्यदिनेषु च ॥
गजदन्तैः प्रवालैर्वा सुवर्णरजतेन वा ।
कार्या गात्राणि पादाश्च वलेभ्यश्च सदक्षिणाः ॥
अलाभेऽपि च कर्त्तव्यास्तुल्यकाष्ठमयाः शुभाः ।
सन्ध्याभ्रपटलाकारैरास्तीर्णास्तरणैः शुभैः ॥
शिरोधरैः सवितानैः प्राकारैर्वस्त्रसंयुतैः ।
मणिसौवर्णपात्रैश्च रौप्यैस्ताम्रैश्च संयुताम् ॥

फलपुष्पैः सुगन्धैश्च ताम्बूलाद्यैः सुविस्तरैः ।
दर्पणैः पदत्राणैश्च नानाद्रव्यैर्विभूषणैः ॥
चतुष्कोणेषु संस्थाप्य यथाशक्ति युधिष्ठिर ।
घृतकुङ्कुमगोधूमपूर्णपात्रं जलस्य च ॥
शय्यां संपूजित्वा तु मद्भक्तो मत्परायणः ।
कृताञ्जलिपुटो भूत्वा कुर्याच्छय्याप्रदक्षिणम् ॥
नमः प्रमाण्यै देव्यै च प्रणम्य च चतुर्दिशम् ।
ब्राह्मणाय दरिद्राय श्रुताध्ययनशालिने ॥
तथाऽऽत्मज्ञानविदुषे शय्यां दद्याद्विचक्षणः ।
तस्य दानस्य यत् पुण्यं विमानं कनकोज्ज्वलम् ॥
नानारत्नसमाकीर्णं नानापुष्पसमन्वितम् ।
नानादिव्याप्सरःसेव्यं नानारत्नैः समावृतम् ॥
नानाद्रव्योपसंयुक्तं विमानमधिरोहति ।
तस्मादिन्द्रपुरं गच्छेत् सेव्यमानोऽप्सरोगणैः ॥
षष्टिर्वर्षसहस्राणि क्रीडयित्वा यथासुखम् ।
इन्द्रलोकात् परिभ्रष्ट इह लोके नृपो भवेत् ॥
षष्टियोजनविस्तीर्णे स्वामी भवति मण्डले ।
धर्मज्ञो जितभृत्यश्च तेजस्वी रूपवाँस्तथा ॥

महाभारते ।

शय्यामास्तरणोपेतां सुप्रच्छादनसंवृताम् ।
प्रदद्याद्यस्तु विप्राय शृणु तस्यापि यत् फलम् ॥
सुरूपः सुभगः श्रीमान् स्त्रीसहस्राभिसंवृतः ।
दशवर्षसहस्राणि स्वर्गलोके महीयते ॥

भविष्योत्तरे ।

शय्यादानं प्रवक्ष्यामि तव पाण्डुकुलोद्वह ।
यां दत्त्वा शिवभागी स्यादिह लोके परत्र च ॥
शय्यादानं प्रशंसन्ति सर्वदैव द्विजोत्तमाः ।
अनित्यं जीवितं यस्मात् पश्चात् कोऽन्यः प्रदास्यति ॥
तावत् स बन्धुः स पिता यावज्जीवति भारत ।
मृतो मृत इति ज्ञात्वा क्षणात् स्नेहो निवर्त्तते ॥
तस्मात् स्वयं प्रदातव्यं शय्याभोज्यजलादिकम् ।
आत्मैव चात्मनो बन्धुरिति सञ्चिन्त्य चेतसि ॥
आत्मैव यदि नात्मानं दानभोगैर्न पूजयेत् ।
कोऽन्यो हिततरस्तस्माद्यः पश्चात् पूजयिष्यति ॥
तस्माच्छय्यां समासाद्य सालदारुमयीं दृढाम् ।
दन्तपत्रचितां रम्यां हेमपट्टैरलङ्कृताम् ॥
हंसतूलीप्रतिच्छन्नां शुभगण्डोपधानकाम् ।
प्रच्छादनपटीयुक्तां धूपगन्धादिवासिताम् ॥
तस्यां संस्थापयेद्धैमं हरिं लक्ष्म्या समन्वितम् ।
उच्छीर्षके घृतभृतं कलशं परिकल्पयेत् ॥

लक्ष्मीनारायणरूपं तु देवतादानप्रकरणस्थितलक्ष्मीनारायणदाने द्रष्टव्यम् ।

विज्ञेयः पाण्डवश्रेष्ठ स निद्राकलशो बुधैः ।
ताम्बूलकुङ्कुमाक्षोदकर्पूरागुरुचन्दनम् ॥
दीपिकोपानहच्छत्रं चामरासनभाजनम् ।
पार्श्वेषु स्थापयेद्भक्त्या सप्त धान्यानि चैव हि ॥
शयनस्थस्य भवति यदन्यदुपकारकम् ।
भृङ्गारकरकाद्यं तु पञ्चवर्णवितानकम् ॥

शय्यामेवंविधां कृत्वा ब्राह्मणायोपपादयेत् ।
सपत्नीकाय संपूज्य पुण्येऽह्नि विधिपूर्वकम् ॥
यथा न कृष्णशयनं शून्यं सागरजातया ।
शय्या ममाप्यशून्याऽस्तु तथा जन्मनि जन्मनि ॥
यस्मादशून्यं शयनं केशवस्य शिवस्य च ।
शय्या ममाप्यशून्याऽस्तु तथा जन्मनि जन्मनि ॥
दत्त्वैवं तल्पममलं प्रणिपत्य विसर्जयेत् ।
एवं शय्याप्रदाने तु विधिरेष प्रकीर्त्तितः ॥
स्वर्गे पुरन्दरगृहे सूर्यपुत्रालये तथा ।
सुखं वसत्यसौ जन्तुः शय्यादानप्रभावतः ॥
सूर्यपुत्रालये चैव तथा वैवस्वते पुरे ।
पीडयन्ति न तं याम्याः पुरुषा भीषणाननाः ॥
न घर्मेण न शीतेन बाध्यते स नरः क्वचित् ।
अपि पापसमायुक्तः स्वर्गलोकं स गच्छति ॥
विमानवरमारूढः सेव्यमानोऽप्सरोगणैः ।
आहूतसंप्लवं यावत् तिष्ठत्यातङ्कवर्जितः ॥
शय्याप्रदानममलं तव पाण्डुपुत्र
संकीर्त्तितं सकलसौख्यविधानभूतम् ।
यो वै ददाति विधिवत् स्वयमेव नाके
कल्पं विकल्परहितः स विभाति मर्त्त्यः ॥

## अथ शिवशय्यादानम् । शिवधर्मे ।

हंसतूलीसमायुक्तां मृद्वीं खट्वामलङ्कृताम् ।
सर्वोपकरणोपेतां शिवशय्यां निवेदयेत् ॥
शिवं देवीसमायुक्तं पैष्टं कृत्वा निवेदयेत् ।

शिवदेवीरूपं तु देवतादानप्रकरणस्थितोमामहेश्वरदाने द्रष्टव्यम् ।

शिवज्ञानार्थतत्त्वज्ञे आचार्ये च दयान्विते ।
संपूज्य गन्धपुष्पाद्यैर्वस्त्रालङ्कारचामरैः ॥
भक्ष्यभोज्यैरशेषैश्च ततः शय्यां निवेदयेत् ।
तदूर्णातूलवस्त्राणां परिसङ्ख्या तु यावती ॥
तावद्वर्षसहस्राणि रुद्रलोके महीयते ।

## अथ सूर्यशय्यादानम् । भविष्यत्पुराणे ।

हंसतूलीसमायुक्तां मृदुखट्वां सुकल्पिताम् ।
सर्वोपकरणैर्युक्तां सूर्यशय्यां प्रकल्पयेत् ॥
राज्ञीदेवीसमायुक्तां ततः शय्यां निवेदयेत् ।
सौरज्ञानार्थतत्त्वज्ञमाचार्यं तु दयान्वितम् ॥
संपूज्य पुष्पगन्धाद्यैर्वस्त्रालङ्कारचामरैः ।
भक्ष्यभोज्यैस्तथा पेयैरनेकरससंयुतैः ॥

## राज्ञीरूपमुक्तं विश्वकर्मणा ।

राज्ञी च द्विभुजा कार्या हारिणी च किरीटिनी ।
वरदं च निजे पाणौ विभ्रती पङ्कजस्थिता—इति ॥
तदूर्णातूलवस्त्राणां परिसङ्ख्या तु यावती ।
तावद्युगसहस्राणि सूर्यलोके महीयते ॥
सौरादिसर्वलोकेषु भुक्त्वा भोगानशेषतः ।
क्रमादागत्य लोकेऽस्मिन् राजा भवति भूतले ॥

## अथासनदानम् । लिङ्गपुराणे ।

आसनं शयनं चैव यो ददाति यशस्विने ।
समं सर्वेषु भूतेषु तस्य दुःखं न विद्यते ॥

स्कन्दपुराणे ।

आसनं यः प्रयच्छेत संवीतं ब्राह्मणाय वै ।
स्वाराज्यं स्थानमाप्नोति तेजस्वी विगतज्वरः ॥

आदित्यपुराणे ।

सुगन्धचित्राभरणोपशोभितं यस्त्वासनं वेदविदे प्रदद्यात् ।
ग्रामाधिपत्यं लभते स शीघ्रं कुले महत्त्वं स लभेत् समग्रम् ॥

विष्णुः ।

आसनं दानस्य स्थानमिति ।

फलमिति शेषः ।

अथ दर्पणदानम् । मार्कण्डेयपुराणे ।

दर्पणं यो नरो दद्यान्निर्मलं च द्विजातये ।
स चन्द्रलोकमासाद्य मोदते शरदां शतम् ॥

नन्दिप्रोक्ते ।

शिवस्य पुरतो दद्याद्दर्पणं चारु निर्मलम् ।
पर्यन्तशोभितं कृत्वा श्वेतमाल्यैः सचन्दनैः ॥
चन्द्रांशुनिर्मलः श्रीमान् सुभगः कामरूपधृक् ।
कल्पायुतसहस्राणि रुद्रलोके महीयते ॥

ब्रह्मपुराणे ।

चन्द्रमण्डलसङ्काशं नक्षत्रे विष्णुदैवते ।
द्वादश्यां पुण्यकाले वा विष्णुं संपूज्य भक्तितः ॥
दर्पणं यो नरो दद्यात् स्रक्चन्दनविभूषितम् ।
रूपवान् सुभगः श्रीमान् ज्ञानवान् जायते नरः ॥

अथ व्यजनदानम् । भविष्यत्पुराणे ।

तालवृन्तं द्विजेभ्यस्तु यः प्रयच्छति भक्तितः ।

स दिव्यभोगसंयोगमरोगः सर्वदाऽश्नुते ॥
महाऽऽतपःपरिश्रान्तिघर्मनिर्मूलनक्षमम् ।
न तालवृन्तपवनादपरं नृपरञ्जनम् ॥
परं रम्भोरुसम्भोगसम्भवं स्वेदमेदुरम् ।
हर्त्तुं श्रमं समर्थेत नान्यद्व्यजनवीजनात् ॥
अतः सदा मुदा युक्तस्तालवृन्तं द्विजातये ।
दद्यादवद्यनिर्मुक्तमुक्तिसंभुक्तिहेतवे ॥

महाभारते ।

योददाति द्विजाग्र्येभ्यो व्यजनं जननन्दनम् ।
स नन्दनवनामोदमोदमानमना दिवि* ॥
वसेदशेषकल्पान्तपर्यन्तमपकल्मषः ।

विष्णुधर्मोत्तरे ।

प्रदाय व्यजनं वांशं वंशे महति जायते ।
चार्मणं कर्मणां सिद्धिं दत्वा व्यजनमश्नुते ॥
तथैव दत्ते मायूरे नायुरेतस्य हीयते ।
पात्रेण पुत्रतामेति वास्त्रेण स्त्रैणवल्लभः ॥
व्यजनेनेह दत्तेन तस्मात् तं प्रतिपादयेत् ।

अथ चामरदानम् । महाभारते ।

यस्तु भक्त्या द्विजाग्र्येभ्यो दद्याच्चामरमुज्ज्वलम् ।
स भौपत्यमवाप्नोति निःशेषावनिमण्डले ॥

वायुपुराणे ।

चामरं चामरेशाय यः शिवाय निवेदयेत् ।

---

* स चन्दनवनामोदभाजनं मानवो दिवि—इति क्वचित् पाठः ।

स सर्वकामसम्पूर्णः स्वर्णशैलतले वसेत् ॥
मायूरं चामरं योऽपि शिवाय विनिवेदयेत् ।
स विमानवरारूढो वीज्यतेऽप्सरसां गणैः ॥

पद्मपुराणे ।

प्रदाय चामरवरं श्रद्धया विष्णवे नरः ।
परं पदमवाप्नोति यत् सुरैरपि दुर्लभम् ॥
एतत् सर्वोपचारेभ्यो देवदेवस्य वल्लभम् ।

अथ वितानदानम् । कालिकापुराणे ।

चन्द्रोदयं सुविस्तीर्णं वर्णकैश्चित्रितं तथा ।
प्रलम्बिमुक्तास्तवकैः शोभितं रत्नसङ्कुलम् ॥
सुरक्तपट्टसूत्रादिबन्धसम्बन्धबन्धुरम् ।
सर्वतोभद्रमुख्यानां मण्डलानां विभक्तिभिः ॥
विराजितं तथा चित्रपत्रवल्लीसमाकुलम् ।
यक्षराक्षसगन्धर्वकिन्नरद्वन्द्वमूर्त्तिभिः ॥
लिखिताभिश्च परितो महाविस्मयकारकम् ।
एवंविधं वितानं यो विधायाथ द्विजन्मने ॥
शिवाय विष्णवे वाऽथ पुण्येऽह्नि प्रतिपादयेत् ।
स समुद्धरते नूनमात्मनः पूर्वपूरुषान् ॥
स्वयं शिवपुरे रम्ये भोगान् भुक्त्वा मनोरमान् ।
क्रमादागत्य लोकेऽस्मिन् सुखी ज्ञानी धनी भवेत् ॥

पद्मपुराणे ।

चन्द्रोदयं तु यो भक्त्या प्रयच्छति स पुण्यधीः ।
न तस्य श्रेयसामन्तः कदा चिदपि जायते ॥

अथ गन्धदानम् । संवर्त्तः ।

गन्धानाभरणाद्यं च यः प्रयच्छति धर्मवित् ।
स सुगन्धामोदयुक्तो यत्र तत्रापि जायते ॥

स्कन्दपुराणे ।

नरः सुगन्धदेहत्वं गन्धदानादवाप्नुयात् ।
भोगवान् जायते नित्यं शरीरं नास्य तप्यति ॥

पद्मपुराणे ।

अनुलेपनगन्धानां प्रदानेन हि मानवः ।
न कदा चिन्मनोदाहं देहे वा दाहमश्नुते ॥
सुगन्धधूपदानेन लोकमप्सरसां व्रजेत् ।

विष्णुधर्मोत्तरे ।

अनुलेपनदानेन रूपवानभिजायते ।
नरश्चन्दनदानेन सर्वपापैः प्रमुच्यते ॥
सौभाग्यकारकं प्रोक्तं प्रदानं कुङ्कुमस्य तु ।
तथा कर्पूरदानेन सर्वान् कामानवाप्नुयात् ॥
मृगदर्पप्रदानेन यशसा भुवि राजते ।
यक्षकर्दमदानेन साम्राज्यं प्राज्यमश्नुते ॥

अथ ताम्बूलदानम् । भविष्यत्पुराणे ।

ताम्बूलं यो नरो दद्यात् प्रत्यहं नियमान्वितः ।
देवेभ्योऽथ द्विजातिभ्यो महाभाग्यं* समश्नुते ॥
इह संसारिणां लोके मनुष्यत्वं सुदुर्लभम् ।
ताम्बूलदानात् तत्र ग्रामनायासेन जायते ॥

---

* सदा भाग्यं समश्नुते इति क्व चित् पाठः ।

ब्रह्माण्डपुराणे ।

ताम्बूलमुज्ज्वलं दद्याद्यो विप्रेभ्यः समाहितः ।
शिवाय केशवायाथ नाकलोके स पूज्यते ॥

विष्णुधर्मोत्तरे ।

ताम्बूलस्य प्रदानेन सौभाग्यमपि विन्दति ।
दत्त्वा जातीफलं विप्राः सफलां विन्दति क्रियाम् ॥
मुखवासप्रदानेन मुखसौगन्ध्यमाप्नुयात् ।

अथ पुष्पदानम् । महाभारते ।

मनो ह्लादयते यस्माच्छ्रियं चापि ददाति यः ।
तस्मात् सुमनसः प्रोक्ता नरैः सुकृतकर्मभिः ॥
देवताभ्यः सुमनसो यो ददाति नरः शुचिः ।
सर्वकामानवाप्नोति प्रेत्य स्वर्गे महीयते ॥
तस्मात् सुमनसः प्रोक्ता यस्मात् तुष्यन्ति देवताः ।
यं यमुद्दिश्य दीयेरन् देवे सुमनसः प्रभो ॥
मङ्गलार्थं स तेनास्य प्रीतो भवति दैत्यपः ।

नन्दिपुराणे ।

धूपदः सुरभिर्नित्यं पुष्पदः सुभगः सदा ।
तस्माद्देवाय विप्राय दातव्यं तत् सुखार्थिभिः ॥

लिङ्गपुराणे ।

पुष्टिर्भवेत् सदा कालं* प्रदानाद्गन्धमाल्ययोः ।

यमः ।

देवतापुष्पदानेन जायते श्रीसमन्वितः ।

---

* तुष्टिः पुष्टिर्भवेत् कालमिति क्वचित् पाठः ।

ऊर्ध्वां गतिमवाप्नोति यश्च धूपप्रदो नरः ॥

विश्वामित्रः ।

देयाः सुमनसो नित्यं नरैः पुण्यफलार्थिभिः ।
किमस्ति दैवतं तादृग्यत् पुष्पैर्न हि तुष्यति ॥

अथ गीतादिदानम् । नन्दिपुराणे ।

यो गीतवाद्यं दद्यात् तु ब्राह्मणाय सुबुद्धिमान् ।
स गन्धर्वपुरे गच्छेद्वसेत् तत्र युगत्रयम् ॥

स्कन्दपुराणे ।

गायन् याति पिबन् याति खादन् याति गृहं यथा ।
यो भोजनस्य वेलायां विप्राणां गेयमाचरेत् ॥

विष्णुधर्मोत्तरे ।

देवतायतने यस्तु ब्राह्मणानां गृहेषु वा ।
गायन् गीतं सुमधुरं गन्धर्वाणां पुरे वसेत् ॥
आतोद्यविद्यया राजन् प्रीणयन् द्विजदेवताः ।
स स्वर्गलोकमासाद्य देवताद्यैर्विनोद्यते ॥
देवताग्रे द्विजाग्रे वा यो नित्यं नृत्यमाचरेत् ।
विनोदयन्ति तं स्वर्गे नित्यमप्सरसां गणाः ॥
यो गीतवाद्यनृत्यानि मूल्यं दत्त्वा तु कारयेत् ।
स शक्रभवने तिष्ठेद्यावदाहूतसंप्लवम् ॥
यो वाऽपि मुखवाद्येन विनोदयति देवताम् ।
स धौतकल्मषमलः स्वर्गं याति न संशयः ॥
वचनेन प्रियेणाथ यः प्रीणाति च मानवान् ।
विमत्सरमना भूत्वा यः स्तौति गुणिनो गुणान् ॥

स्वीयैः परकृतैर्वाऽपि यः स्तोत्रैः स्तौति देवताम् ।
तस्य पुण्यवतः पुण्यमगण्यं केन गण्यते ॥

अथ छत्रोपानहद्दानम् । बृहस्पतिः ।

असिपत्रवनं मार्गं क्षुरधारासमन्वितम् ।
तीक्ष्णातपं च तरति छत्रोपानत्प्रदो नरः ॥

आदित्यपुराणे ।

निदाघकाले वर्षासु छत्रं यः संप्रयच्छति ।
नास्य कश्चिन्मनोदाहः कदा चिदपि जायते ॥

महाभारते ।

उपानहौ प्रयत्नाद्यो ब्राह्मणेभ्यः प्रयच्छति ।
मर्दते कण्टकान् सर्वान् विषमान् संतरत्यपि ॥
शकटं दम्यसंयुक्तं दत्तं भवति तेन वै ।
यानं चाश्वतरीयुक्तं तस्य स्वर्गे विशां पते ॥
उपतिष्ठन्ति कौन्तेय रौप्यकाञ्चनशोभनम् ।
ब्राह्मणाय सुशीलाय यो दद्यात् काष्ठपादुके ॥
स वाहनेन दिव्येन दिवं गच्छति भोगवान् ।

सूर्यकरसन्तप्तरेणुकादर्शनकोपितस्य जमदग्नेः सूर्येण सह संवादे । सूर्य उवाच ।

महर्षे शिरसस्त्राणं छत्रं मद्रश्मिवारणम् ।
प्रतिगृह्णीष्व पद्भ्यां च त्राणं त्वं चर्मपादुके ॥
अद्य प्रभृति चैवैतल्लोकेषु प्रचरिष्यति ।
पुण्यकेषु च कालेषु परमक्षयमेव च ॥
उपानच्छत्रमेतद्ध सूर्येणेह प्रवर्त्तितुम् ।

पुण्यमेतत् तु विख्यातं त्रिषु लोकेषु भारत ॥
तस्मात् प्रयच्छ विप्रेभ्यश्छत्रोपानहमुत्तमम् ।
धर्मस्ते सुमहान् भावी न मेऽत्रास्ति विचारणा ॥
छत्रं हि पुरुषव्याघ्र यः प्रदद्याद्द्विजातये ।
शुभ्रं शतशलाकं वै स प्रेत्य सुखमेधते ॥
शक्रलोके स वसते पूज्यमानो द्विजातिभिः ।
अप्सरोभिश्च सततं देवैश्च भरतर्षभ ॥
दह्यमानाय विप्राय यः प्रयच्छत्युपानहौ ।
स्नातकाय महाबाहो संशिताय द्विजातये ॥
सोऽपि लोकानवाप्नोति देवतैरपि पूजितान् ।
गोलोके वसते कल्पं प्रतिस्वर्गे तु भारत ॥
एतत् ते भरतश्रेष्ठ मया कात्स्न्येन कीर्त्तितम् ।
छत्रोपानहदानस्य फलं भरतसत्तम ॥

वह्निपुराणे ।

घर्मवर्षातपत्राणं छत्रं दद्याद्द्विजातये ।
सर्वव्याधिविनिर्मुक्तः श्रियं पुत्रांश्च विन्दति ॥
विमानेन च दिव्येन किङ्किणीजालमालिना ।
महेन्द्रभवनं याति सेव्यमानोऽप्सरोगणैः ॥
दह्यमानाय विप्राय यः प्रयच्छत्युपानहौ ।
न तस्य मनसो दाहः कदा चिदपि जायते ॥
यानमश्वतरीयुक्तं तस्य हेममयं शुभम् ।
उपतिष्ठति विप्रर्षे सर्वरत्नविभूषितम् ॥

लिङ्गपुराणे ।

वर्षासु छत्रदानेन तथा ग्रीष्मे च नारद ।

सर्वाह्लादयुतास्ते स्युः सर्वकामैश्च संयुताः ॥
पुत्रान् श्रियं च लभते यश्छत्रं संप्रयच्छति ।
चक्षुर्व्याधिं न लभते यज्ञभागमथाश्नुते ॥
कृच्छ्राच्च विषमाच्चैव स त्र मोक्षमवाप्नुयात् ।
एवमाह महाभागः शाण्डिल्यो भगवानृषिः ॥

कात्यायनः ।

वातवर्षातपत्राणं छत्रं दद्याद्द्विजातये ।
स सर्वव्याधिरहितः श्रियं पुत्रांश्च विन्दति ॥

देवलः ।

छत्रदश्छायया याति यानेनोपानहप्रदः ।

यमः ।

छत्रदो गृहमाप्नोति गृहदो नगरं तथा ।

जमदग्निः ।

दह्यमानाय विप्राय यः प्रयच्छत्युपानहौ ।
स्नातकाय महाबाहो संशिताय द्विजातये ॥
सोऽपि लोकानवाप्नोति दैवतैरपि पूज्यते ।
गोलोके स मुदा युक्तो वसत्यपि हि भारत ॥

अत्रिः ।

श्राद्धकालेषु यो दद्याद्भोजनं च उपानहौ ।
तस्य वै विपुलं पुण्यमश्वदानफलं लभेत् ॥

स्कन्दपुराणे ।

यः प्रयच्छेद्द्विजेन्द्राय उपानत्काष्ठपादुके ।
स वराश्वेन महता सुखं याति ममालयम् ॥

अथ पात्रदानम् । स्कन्दपुराणे ।

भाजनं यः प्रयच्छेत् तु हैमं रत्नविभूषितम् ।
सोऽप्सरःशतसंकीर्णविमाने दिवि मोदते ॥
राजतं यः प्रयच्छेत् तु विप्रेभ्यो भाजनं शुभम् ।
स गन्धर्वपदं प्राप्य उर्वश्या सह मोदते ॥
ताम्रं यो भाजनं दद्याद्ब्राह्मणेभ्यो विशेषतः ।
स भवेत् यक्षराजस्य प्रभुर्बलसमन्वितः ॥

विष्णुधर्मोत्तरे ।

तैजसानि तु पात्राणि दत्त्वा सलवणानि च ।
पात्रमेति च कामानां लावण्यं चाप्नुयान्महत् ॥
तैजसानि तु पात्राणि सतैलानि प्रयच्छतः ।
आरोग्यमुत्तमं प्रोक्तं लावण्यमपि चोत्तमम् ॥
तैजसानि तु पात्राणि सघृतानि प्रयच्छतः ।
आरोग्यमुत्तमं प्रोक्तं स्वर्गे वासस्तथा द्विजाः ॥
तैजसानि तु पात्राणि समधूनि प्रयच्छतः ।
लावण्यमुत्तमं प्रोक्तं सौभाग्यमपि चोत्तमम् ॥

अथ रुक्मादिपात्रदानम् । कालिकापुराणे ।

रौक्मं क्षीरान्वितं पात्रं दधिपूर्णं च राजतम् ।
मौक्तिकानां शतं योऽथ वस्त्रयुग्मं निवेशयेत् ॥
ततः पुण्याहवाद्येन जयशब्दादिमङ्गलैः ।
हरिं चैवार्चयेद्यत्नात् स्थाप्य सौवर्णपङ्कजे ॥

विष्णुरूपमुक्तं तु तुलापुरुषदाने ।

ततस्तत् पात्रमादाय वाद्यब्रह्मस्वनैः स्वयम् ।
कुर्यात् प्रदक्षिणं तस्मै विष्णवे प्रभविष्णवे ॥

ततश्चामन्त्र्य विधिवत् पूजयेत् तु विशेषतः ।
एवं विप्रं तु संपूज्य प्रणम्य च क्षमापयेत् ॥
ब्राह्मणानपरान् भोज्य दक्षयेच्चैव काञ्चनम् ।
व्रतिनश्चान्नदानेन वस्त्राद्यैः पूज्य तर्पयेत् ॥
दीनान्धकृपणानां च अनिवार्यौदनं ददेत् ।
उपोष्यैकादशीं शुक्लां माघमासे तु पूर्णिमाम् ॥
कुर्याद्विधिमिमं सम्यक् स हरेस्तु व्रजेत् पदम् ।
उपहसन्ति ये देवान् ब्राह्मणाँश्च तपस्विनः ॥
पात्ररूपव्रतं चेदं न देयं तेषु कर्हि चित् ।
बुद्धिरूपप्रदं चायुर्धनसौभाग्यसंप्रदम् ॥
पुत्रदं सुखदं चैव विधिना चरितं त्विदम् ।
व्रतस्यास्य प्रवक्तारं शमयुक्तं गुणान्वितम् ॥
पूजयेद्भूतिकामार्थं पादुकावस्त्रकाञ्चनैः ।
रौक्ममाज्ययुतं चाथ पात्रं नीलमणीयुतम् ॥
अभावे तु तथा हेम्नः कर्षार्धेनाम्बरार्चितम् ।

नीलमणेरभावे कर्षार्धमात्रेण हेम्ना भूषितमध्यभागं विधेयम् ।

वस्त्रयुग्मं नवं सूक्ष्मं पुष्पप्रकरचर्चितम् ।
आनीय तत्र तत् पात्रं शुचौ देशे निवेशयेत् ॥
ततो जागरणं कुर्याद्गीतवाद्यादिमङ्गलैः ।
प्रभाते तन्नयेत् पात्रं हरेरायतनं महत् ॥
स्नाप्य क्षीरादिभिर्देवं विष्णुं संपूज्य चैव तु ।
निवेदयेत् तु तत् पात्रं प्रीयतामित्युदीरयेत् ॥
ततो नानाविधैर्भक्ष्यैः सुगन्धेनौदनेन च ।
दधिखण्डाद्ययुगुदत्त्वा नैवेद्यं च वलिं हरेत् ॥

ततो नत्वा गृहं गच्छेद्दत्वा च प्रणमेत् पुनः ।
प्रणम्य भोजयेद्भक्त्या व्रतिनश्च द्विजैः सह ॥
दीनान्धकृपणानां च सर्वेषामनिवारितम् ।
आचार्यं हेमवस्त्राद्यैर्दक्षयेद्विधिवत् तदा ॥
यथाशक्त्या परं चैव दीर्घमायुर्जिजीविषुः ।
एतत् पात्रव्रतं ज्ञेयं गुह्यं चात्र प्रकाशितम् ॥
न देयं दुष्टबुद्धीनां द्विषतां पापकर्मणाम् ।
वैष्णवे शिवभक्ते तु सौरे भागवते सदा ॥
देयमेतद्विधानेन आयुर्धनविवृद्धये ।
ये द्विषन्ति नरा मूढा विष्णुं वाऽथ वृषध्वजम् ॥
ते नूनं विष्णुभक्तास्ते विष्णुं चैव हरन्ति ये ।
अनेनापि व्रतेनैव प्राप्य तत् पदमुत्तमम् ॥
मोदते सुचिरं कालमायुष्मान् धनवानिह ।

## अथ भाण्डदानम् । वशिष्ठः ।

दाता ताम्रस्य भाण्डानां रत्नानां भाजनं भवेत् ।

## लिङ्गपुराणे ।

ताम्रायसानां भाण्डानां दाता यक्षाधिपो भवेत् ।
लभते च परं स्थानं युज्यते च महाश्रिया ॥

## ब्रह्मपुराणे ।

औदुम्बराणि भाण्डानि यो दद्यादायसानि वा ।
महतीमृद्धिमाप्नोति दुर्लभां त्रिदशैरपि ॥

## वायुपुराणे ।

स्वर्णरूप्यमयं भाण्डं देवतार्थे ददाति यः ।
कुबेरलोकमासाद्य मोदते बहुवत्सरान् ॥

अथापाकदानम् । भविष्योत्तरे युधिष्ठिर उवाच ।

तन्मे कथय देवेश येन दत्तेन मानवः ।
बहुपुत्रो बहुधनो बहुभृत्यश्च जायते ॥

श्रीभगवानुवाच ।

पुरा भारतवर्षेऽस्मिन् राजाऽऽसीद्बभ्रुवाहनः ।
पितृपैतामहं तेन राज्यं प्राप्तमकण्टकम् ॥
न तस्य देशे विद्वांसो न च वैरिभिर्भयम् ।
शरीरैस्तथा महाव्याधिः न चैवान्तरदायकः ॥
तस्यैवं कुर्वतो राज्यं पूर्वकर्मार्जितं शुभम् ।
नास्ति भृत्यो भारसहः सर्वराज्यधुरन्धरः ॥
न पुत्रः प्रियकृत् कश्चिन्न मन्त्री मधुराक्षरः ।
न मित्रं कार्यकरणे समर्थो न सुहृत् तथा ॥
न भोज्यसमये प्राप्ते भोजनं सार्वकामिकम् ।
न पत्रफलसंयुक्तं ताम्बूलं वसनं न च ॥
न धनं जनसम्बन्धं कारितो रत्नसञ्चयः ।
तस्यैवं कुर्वतो राज्यमव्याहतिविचेष्टितम् ॥
अथैकस्मिन् दिने विप्रः पिप्पलादोऽतिविश्रुतः ।
आजगाम महायोगी राज्ञः पार्श्वं महामतिः ॥
तमागतं मुनिं दृष्ट्वा राज्ञो राज्ञी शुभावती ।
पाद्यार्घासनदानेन सर्वथा तमपूजयत् ॥
तत्कथान्ते च कस्मिँश्चित् तमुवाच शुभावती ।
भगवन् राज्यमेतन्मे सर्वबाधाविवर्जितम् ॥
कस्मान्न भृत्याः पुत्रा वा मन्त्रिमित्रादिकं द्विज ।
भोगावाप्तिर्न च तथा सर्वकालातिशायिनी ॥

पिप्पलाद उवाच ।

यद्येन पूर्वविहितं तदसौ प्राप्नुते फलम् ।
कर्मभूमिरियं राज्ञि नातः शोचितुमर्हसि ॥
न तत् कुर्वन्ति राजानो दायादा न च शत्रवः ।
न बान्धवा न मित्राणि यद्येन च पुरा कृतम् ॥
तस्माद्भवद्भिर्यद्दत्तं प्राप्तं तद्राज्यमुत्तमम् ।
भृत्यमित्रादिसम्बन्धो न दत्तः प्राप्यते कुतः ॥

शुभावत्युवाच ।

इदानीमपि विप्रर्षे कस्मात् तन्नोपदिश्यते ।
येन मे बहवः पुत्रा धनं भृत्या भवन्ति च ॥
मित्रं वा बन्धुयोगो वा व्रतं दानमुपोषितम् ।
कथयस्वामलमते येन संपद्यते सुखम् ॥
ततः स कथयामास पिप्पलादो द्विजोत्तमः ।
आपाकाख्यं महादानं सर्वसम्पत्प्रदायकम् ॥
श्रद्धया कुरु शार्दूल नारी वाऽप्यथ वा पुमान् ।
येन दत्तेन भाग्यानां बहूनां भाजनं भवेत् ॥
ततः श्रुत्वा ददौ राजा आपाकं दानमुत्तमम् ।
लभेत् पुत्रान् बहून् भृत्यान् मन्त्रिमित्रं सुहृज्जनम् ॥

श्रीभगवानुवाच ।

आपाकाख्यं महादानं कथयामि युधिष्ठिर ।
दत्तेन येन कामानां पुत्रो भवति भाजनम् ॥
ग्रहताराबलं लब्ध्वा कुम्भकारं च पूजयेत् ।
वासोभिर्भूषणैश्चैव पुष्पैश्चागुरुचन्दनैः ॥

ब्रूयात् तथेदं सामान्यं यथा तुष्टोऽभिजायते ।
त्वं मे भाण्डानि चित्राणि गुरूणि च लघूनि च ॥
मणिकादीनि शुभ्राणि स्थाल्यश्च सुमनोहराः ।
घटकान् करकाँश्चैव प्रणीताः कुण्डकानि च ॥
शरावादीनि पात्राणि भाण्डान्युच्चावचानि च ।
अलिञ्जराः प्रतिघटा मन्थनीकटहानि च ॥
एवमन्यच्च यत् किञ्चिदुपभोग्यं भवेद्गृहे ।
सम्पादय महाभाग विश्वकर्मा त्वमेव हि ॥
भार्गवोऽपि प्रयत्नेन भाण्डौघैरन्वितं शुभम् ।
आपाकं कल्पयेदेवं विधिदृष्टेन कर्मणा ॥
सहस्रमेकं भाण्डानां स्थापयित्वा विचक्षणः ।
सन्ध्याकाले मथित्वा तु हुत्वा वाऽपि हुताशनम् ॥
रात्रौ जागरणं कुर्याद्गीतमङ्गलनिःस्वनैः ।
ततः प्रभाते विमले ज्ञात्वा निर्वापितं शनैः ॥
रक्तवस्त्रैः समासाद्य* पुष्पमालाभिरर्चयेत् ।
यजमानस्ततः स्नात्वा शुक्लाम्बरधरः शुचिः ॥
हैमरौप्याणि भाण्डानि ताम्रलोहमयानि च ।
परितः स्थापयित्वा च स्वशक्त्या तानि षोडश ॥
तानि चत्वारि चत्वारि न्यसेत् पूर्वादिदिक्क्रमात् ।
पूजयित्वा प्रयत्नेन कृत्वा वाऽपि प्रयत्नतः ॥
नार्यश्चाविधवास्तत्र समानीय प्रपूजयेत् ।
प्रदक्षिणं ततः कृत्वा मन्त्रेणानेन पूजयेत् ॥

---

* समाच्छाद्येति पुस्तकान्तरे पाठः ।

आपाक ब्रह्मरूपोऽसि भाण्डनीमानि जन्तवः ।
प्रजानां ते प्रजापुष्टिः स्वर्गश्चास्तु ममाक्षयः ॥
भाण्डरूपाणि यान्यत्र कल्पितानि मया किल ।
भूत्वा सत्त्वानुरूपाणि उपतिष्ठन्तु तानि वै ॥

दानमन्त्रः ।

## अत्रेदं दानवाक्यम् ।

ॐ अद्य इममापाकं नानाभाण्डरचितं विष्णुदैवतं नानाजनेभ्यः सौभाग्यावैधव्यसर्वगुणोपेतगृहप्राप्तिपुत्रपौत्रादिसन्ततिस्वाम्ययोग्यसदा-सुखकामोऽहमुत्सृजामि—इति ।

यो ह्यर्थी येन भाण्डेन तत् तस्य प्रतिपादयेत् ।
स्वेच्छया चैव गृह्णन्तु न निवार्यस्तु कश्चन ॥
अनेन विधिना यस्तु दानमेतत् प्रयच्छति ।
विश्वकर्मा भवेत् तुष्टस्तस्य जन्मत्रयं नृपे ॥
नारी च दत्त्वा सौभाग्यमतुलं प्रतिपद्यते ।
गृहं सर्वगुणोपेतं भृत्यमित्रजनैर्वृतम् ॥
अवियोगं सदा भर्त्रा रूपं चानुत्तमं लभेत् ।
प्रदानमेतन्निर्दिष्टं प्रकारेण तवानघ ॥
भिद्यते बहुभिर्भेदैर्भूमिरेषा नरोत्तम ।

निष्पाद्य भाण्डनिचयप्रवरं प्रयत्ना-
दापाकदानमिह या कुरुते वरा स्त्री ।
सा पुत्रपौत्रपशुवृद्धिसुखानि लब्ध्वा
प्रेत्याशु भर्त्तृसहिता सुखिनी सदाऽऽस्ते ॥

## अथ स्थालीदानम् । भविष्योत्तरे ।

अथातः सर्वपापघ्नं शुभदं कथयामि ते ।

दानं मानकरं पुंसां सर्वकामप्रदायकम् ॥
कृत्वा ताम्रमयीं स्थालीं पलानां पञ्चभिः शतैः ।
अशक्तस्तु तदर्धेन चतुर्थांशेन वा पुनः ॥
सर्वशक्तिविहीनस्तु मृण्मयीमपि कारयेत् ।
सुगम्भीरोद्दरदरीं दृढदण्डकडच्छकाम् ॥

'दण्डकडच्छक'-शब्देन दर्विरभिधीयते ।

मृदुतण्डुलनिष्पन्नस्विन्नक्षीरप्रपूरिताम् ।
उपदंशौदकयुतां घृतपात्रसमन्विताम् ॥
कृतपार्श्वां धौतवर्णां चर्चितां चन्दनेन च ।
स्थाप्य मण्डलके गन्धैः पुष्पधूपैरथार्चयेत् ॥
आदित्येऽहनि संक्रान्तौ चतुर्दश्यष्टमीषु च ।
एकादश्यां तृतीयायां विप्राय प्रतिपादयेत् ॥
ज्वलज्ज्वलनपार्श्वस्थैस्तण्डुलैः सजलैरपि ।
न भवेद्भोज्यसंसिद्धिर्भूतानां पिठरीं विना ॥
त्वं सिद्धिः सिद्धिकामानां त्वं तुष्टिस्तुष्टिमिच्छताम् ।
अतस्त्वां प्रणतो याचे स त्वं कुरु वचो मम ॥
ज्ञातिबन्धुसुहृद्वर्गविप्रेषु स्वजनैस्तथा ।
अभुक्तवत्सु नाश्नीयां तथा भव वरप्रदा ॥
इत्युच्चार्य प्रदातव्या हण्डिका द्विजपुङ्गवे ।
तुष्टिपुष्टिप्रदा पुंसां सर्वान् कामानभीप्सता ॥
वशिष्ठवचनं श्रुत्वा सा चकार तथैव तत् ।
प्रादात् स्थालीं ब्राह्मणानां बहूनां बहुदक्षिणाम् ॥
स्थालीं विशालवदनां सकडच्छकां च
यच्छन्ति ये मधुरशुल्वमयीं द्विजेभ्यः ।

तेषां सुहृत्सुजनविप्रजनेन भोज्यं
संभुज्यमानमपि कृष्ण न याति नाशम् ॥

अथाग्निष्टिकादानम् । भविष्योत्तरे । श्रीकृष्ण उवाच ।

अग्निष्टिकामहं पार्थ कथयामि निबोध ताम् ।
यथा येन विधानेन सर्वसत्त्वसुखप्रदाम् ॥
आदौ मार्गशिरे मासि शोभने दिवसे शुभाम् ।
अग्निष्टिकां कारयित्वा सुखासनवतीं दृढाम् ॥
देवाङ्गणे मठे हट्टे विस्तीर्णे चत्वरे तथा ।
उभयोः सन्ध्ययोः कृत्वा सुशुष्कं काष्ठसञ्चयम् ॥
ततः प्रज्वालयेदग्निं हुत्वा व्याहृतिभिः क्रमात् ।
ब्राह्मणान् भोजयेच्छक्त्या तेभ्यो दद्याच्च दक्षिणाम् ॥
अनेन विधिना कृत्वा प्रत्यहं ज्वालयेत् ततः ।
यदि कश्चित् क्षुधार्थी स्याद्भोज्यं तत्र प्रकल्पयेत् ॥

इदमिह दानवाक्यम् ।

ॐ अद्यादि हेमन्तशिशिराख्यमृतुद्वयं यावत् सर्वकालं वा यथासुखं सर्वसत्त्वप्रतापनार्थमिमामग्निष्टिकां विष्णुदैवतामपरिमितकालभोग्यब्रह्मलोकप्राप्तिसर्वार्थसम्पन्नचतुर्वेदब्राह्मणत्वकामोऽहमुत्सृजामि—इति ।

सुखासीनो जनस्तत्र विशीतो विज्वरस्तथा ।
या करोति कथाः पार्थ न ताः शक्या मयोदितुम् ॥
राजवार्त्ता धर्मवार्त्ता जनवार्त्ता यदृच्छया ।
वदेल्लोकः सुखासीनो न केनापि निवार्यते ॥
अनेन विधिना यस्तु दद्यादग्निष्टिकां नरः ।
तस्य पुण्यफलं राजन् कथ्यमानं निबोध मे ॥

विमानेनार्कसंकाशे समारूढो महावने ।
षष्टिर्वर्षसहस्राणि षष्टिर्वर्षशतानि च ॥
अर्चितोऽत्यन्तसन्तुष्टो ब्रह्मलोके महीयते ।
इह लोकेऽवतीर्णश्च चतुर्वेदो द्विजो भवेत् ॥
नीरुजः सत्रयाजी च अग्नितेजःप्रभावतः ।
चैत्ये सुरालयसभावसथेषु भव्यां
येऽग्निष्टिकां प्रचुरकाष्ठवतीं प्रदद्युः ।
हेमन्तशैशिरऋतौ सुखदां जनानां
कायाग्निदीप्तिममलं वपुराप्नुवन्ति ॥

कात्यायनः ।

हेमन्ते शिशिरे चैव पुण्याग्निं यः प्रयच्छति ।
सर्वलोकस्य तापार्थं स पुण्यां गतिमाप्नुयात् ॥
यस्तापनार्थं काष्ठानि ब्राह्मणेभ्यः प्रयच्छति ।
सर्वार्थास्तस्य सिद्ध्यन्ति तेजस्वी चाभिजायते ॥

वह्निपुराणे ।

य इन्धनानि काष्ठानि ब्राह्मणेभ्यः प्रयच्छति ।
सर्वलोकप्रतापार्थं स पुण्यां गतिमाप्नुयात् ॥

संवर्त्तः ।

दद्याच्च शिशिरे वह्निं बहुकाष्ठं प्रयत्नतः ।
कायाग्निदीप्तिं प्रज्ञां च रूपसौभाग्यमाप्नुयात् ॥
इन्धनानि च यो दद्याद्द्विजेभ्यः शिशिरागमे ।
नित्यं जयति संग्रामे श्रिया युक्तस्तु दीप्यते ॥

विष्णुः ।

इन्धनप्रदानेन दीप्ताग्निर्भवति संग्रामे शिवमाप्नोति ।

यमः ।

इन्धनानां प्रदानेन दीप्ताग्निर्भुवि जायते ।

महाभारते ।

यश्चेन्धनार्थं काष्ठानि ब्राह्मणेभ्यः प्रयच्छति ।
प्रतापनार्थं राजेन्द्र प्रवृत्ते शिशिरे नरः ॥
सिद्ध्यन्त्यर्थाः सदा तस्य कार्याणि विविधानि च ।
उपर्युपरि शत्रूणां वपुषा दीप्यते च सः ॥
भगवांश्चाशु सुप्रीतो वह्निर्भवति नित्यशः ।
न तं त्यजन्ति पशवः संग्रामेषु जयत्यपि ॥

अथ दीपदानम् । महाभारते ।

दीपप्रदाने वक्ष्यामि फलयोगमनुत्तमम् ।
यथा येन यदा चैव प्रदेया यादृशाश्च ये ॥
ज्योतिस्तेजः प्रकाशं वाऽप्यूर्ध्वगत्याऽपि वर्ण्यते ।
प्रदाने तेजसस्तस्मात् तेजो वर्धयते नृणाम् ॥
अन्धं तमस्तमिश्रं च दक्षिणायनमेव च ।
उत्तरायणमेतस्मिन् दीपदानं प्रशस्यते ॥
यस्मादूर्ध्वं गमे तत् तु तमसश्चैव भेषजम् ।
तस्मादूर्ध्वगतिर्दाता भवेत् तत्रेति निश्चयः ॥
देवास्तेजस्विनो यस्मात् प्रभावन्तः प्रकाशकाः ।
तामसा राजसाश्चेति तस्माद्दीपः प्रदीयते ॥
आलोक्यदानाच्चक्षुष्मान् प्रभायुक्तो भवेन्नरः ।
तं दत्त्वा नोपसेवेत न हरेन्नोपहिंसयेत् ॥
दीपहर्त्ता भवेदन्धस्तमोगतिरथाशुभा ।

दीपदः सर्वलोकेषु दीपमाली विराजते ॥
गिरिप्रपाते गहने चैत्यस्थाने चतुष्पथे ।
दीपदाता भवेन्नित्यं य इच्छेद्भूमिमात्मनः ॥
कुलद्योतविशुद्धात्मा प्रकाशत्वं स गच्छति ।
ज्योतिषां चैव सायोज्यं दीपदानरतः सदा ॥

स्कन्दपुराणे ।

शिवादिदेवतागारे यतीनामाश्रमेषु च ।
अग्निहोत्रिगृहे चैव तथैव च प्रतिश्रये ॥
सर्वत्र शङ्करः साक्षाद्वसतीति विचिन्त्य च ।
सततं दीपकान् दद्यात् श्रोत्रियाणां गृहेषु च ॥

देवलः ।

दीपकोद्योतकृद्राजा भवेन्मार्जनकृन्नरः ।

वेदव्यासः ।

यथा प्रशंसते दीपानस्मत्पितृहितेच्छया ।
यस्माद्दीपप्रदो नित्यं सन्तारयति वै पितॄन् ॥
दातव्याः सततं दीपास्तस्माद्भरतसत्तम ।
देवतानां पितॄणां च चक्षुष्यास्ते मताः प्रभो ॥
दीपालोकप्रदानेन चक्षुष्मान् जायते नरः ।

यमः ।

लोके प्रकाशो भवति चक्षुष्मानपि दीपतः ।

नन्दिपुराणे ।

दूर्वाक्षतैस्तु सलिलैर्दीपधूपमनोरमैः ।
दीपं ददाति यो मर्त्यो सुरब्राह्मणवेश्मसु ॥

स तु दिव्येन यानेन महाभानुप्रभासिना ।
गच्छति स्वर्गमतुलं वसेत् तत्र समाः शतम् ॥
यास्यं तमोमयं घोरं वर्त्म दुर्गं महाभयम् ।
व्रजन्ति तेन मुदिता ये के चिद्दीपदायिनः ॥

स्कन्दपुराणे ।

द्योतयन्तो दिशः सर्वा यान्ति दीपप्रदायिनः ।
चतुष्पथेषु चैत्येषु ब्राह्मणावसथेषु च ॥
वृक्षमूलेषु गोष्ठेषु कान्तारगहनेषु च ।
दीपदानाद्धि सर्वत्र महाफलमुपाश्नुते ॥
विप्रवेश्मनि यो दद्यात् कार्त्तिके मासि दीपकम् ।
अग्निष्टोमफलं तस्य प्रवदन्ति मनीषिणः ॥
सन्ध्यादीपप्रदो यस्तु स गच्छेत् परमं पदम् ।

गारुडपुराणे ।

नीलकण्ठस्य मोक्षेण गयायां च तिलोदकैः ।
वर्षासु दीपदानेन पितॄणामनृणो भवेत् ॥
यस्तु ब्राह्मणगेहेषु दीपमालां प्रयच्छति ।
स निर्वर्त्त्य तमो घोरं ज्योतिषां लोकमाप्नुयात् ॥

संवर्त्तः ।

देवागारे द्विजानां वा दीपं दत्त्वा चतुष्पथे ।
मेधावी ज्ञानसम्पन्नश्चक्षुष्माँश्च सदा भवेत् ॥

विष्णुधर्मोत्तरे ।

महावर्त्तिः सदा देया भूमिपाल महाफला ।
कृष्णपक्षे विशेषेण तत्रापि च विशेषतः ॥

अमावास्या च निर्दिष्टा द्वादशी च महाफला ।
आश्वयुज्यामतीतायां कृष्णपक्षस्य वा भवेत् ॥
अमावास्या तदा पुण्या द्वादशी च विशेषतः ।
देवस्य दक्षिणे पार्श्वे देया तैलतुलान्विताः ॥
पलाष्टकयुता राजन् वर्त्तिं तत्रैव दापयेत् ।
महारजतरक्तेन समग्रेण तु वाससा ॥
वामपार्श्वे च देवस्य देया घृततुला नृप ।
पलाष्टकयुतां शुक्लां वर्त्तिं तत्रैव दापयेत् ॥
वाससा तु समग्रेण सोपवासो जितेन्द्रियः ।
महावर्त्तिद्वयमिदं सकृद्दत्त्वा महीपते ॥
स्वर्लोकं सुचिरं भुक्त्वा जायते भूतले यदा ।
तदा भवति लक्ष्मीवान् रूपसौभाग्यसंयुतः ॥
राष्ट्रे च जायते यस्मिन् देशे च नगरे तथा ।
कुले च राजशार्दूल तत्र स्यात् दीपवान् प्रभो ॥
अत्युज्ज्वलश्च भवति युद्धेषु कलहेषु च ।
ख्यातिं याति सदा लोके सज्जनानां च सद्गुणैः ॥
एकामप्यथ यो दद्यादभीष्टमनयोर्द्वयोः ।
मानुष्ये सर्वमाप्नोति यदुक्तं ते मयाऽनघ ॥
स्वर्गे तथा समाप्नोति भोगं कालं च यादव ।
सामान्यस्य तु दीपस्य राजन् दानं महाफलम् ॥
किं पुनर्महतो यस्य फलस्यान्तो न विद्यते ।
दीपदानं परं पुण्यमन्यदेवेष्वपि ध्रुवम् ॥
किं पुन र्देवदेवस्य अनन्तस्य महात्मनः ।
गिरिश्टङ्गेषु दातव्या नदीनां पुलिनेषु च ॥

चतुष्पथेषु रथ्यासु ब्राह्मणानां च वेश्मसु ।
वृक्षमूलेषु गोष्ठेषु कान्तारे गहनेषु च ॥
दीपदानेन सर्वत्र महत् फलमुपाश्नुते ।
यावन्त्यक्षिनिमेषाणि दीपे प्रज्वलिते पुनः ॥
तावन्त्येव स राजेन्द्र वर्षाणि दिवि मोदते ।
दीपदानेन राजेन्द्र चक्षुष्मानिह जायते ॥
रूपसौभाग्ययुक्तश्च धनधान्यसमन्वितः ।
दीपमालां प्रयच्छन्ति ये नराः शार्ङ्गिणो गृहे ॥
भवन्ति ते चन्द्रसमाः स्वर्गमासाद्य मानवाः ।
केशवायतने दत्त्वा दीपवृक्षं मनोहरम् ॥
अतीव भ्राजते लक्ष्म्या दिवमासाद्य मानवः ।
दीपदानं नरः कृत्वा कुण्डागारनिभं शुभम् ॥
केशवालयमासाद्य नाके भाति स शक्रवत् ।
यथोज्ज्वलः सदा दीपो दीपदानाच्च मानवः ॥
तथा नित्योज्ज्वलो लोके नाकपृष्ठेऽपि जायते ।
सदीपे तु यथा देशे चक्षूंषि फलवन्ति हि ॥
तथा दीपस्य दातारो भवन्ति सफलेक्षणाः ।
यथैवोर्ध्वगतिर्नित्यं राजन् दीपशिखा पुनः ॥
दीपदातुस्तथैवोर्ध्वं गतिर्भवति शोभना ।
तस्मात् सर्वप्रयत्नेन दीपा देया नरेश्वर ॥
आश्वयुज्यामतीतायां यावद्राजेन्द्रकार्त्तिकी ।
तावद्दीपप्रदस्योक्तं फलं राजन् विशेषतः ॥
तावत् कालं प्रयच्छन्ति ये तु दीपं सदा निशि ।
तुङ्गे देशे बहिस्तेषां महत् पुण्यफलं लभेत् ॥

यस्यान्धकारे गहने प्राकाश्यं तु प्रजायते ।
प्राकाश्यं यदुशार्दूल तेन यान्ति हि तत् सुखम् ॥
श्रावणे दीपकं दत्त्वा नदीद्वितयसङ्गमे ।
तेजस्वी च यशस्वी च रूपवानभिजायते ॥
दीपा नदीषु दातव्याः कार्त्तिक्यां च विशेषतः ।
अश्वयुक्कृष्णपक्षस्य यावत् पञ्चदशी भवेत् ॥
बिलद्वारेषु दातव्याः सदा दीपा यथाविधि ।
अन्यत्रापि सदा दीपैर्महत् पुण्यफलं लभेत् ॥
श्रवणद्वादशीयोगे कृष्णपक्षे विशेषतः ।
घृतेन दीपा दातव्यास्तैलैर्वा यदुनन्दन ॥
वसामज्जादिभिर्दीपा न तु देयाः कथं चन ।
दत्त्वा दीपं न कर्त्तव्यं तेन कर्म विजानता ॥
निर्वापणं च दीपस्य हिंसनं च विगर्हितम् ।
यः कुर्यात् कर्मणा तेन स्यादसौ पुष्पितेक्षणः ॥
दीपहर्त्ता भवेदन्धः काणो निर्वापको भवेत् ।
दीपदानात् परं पुण्यं न भूतं न भविष्यति ॥
दीपदानं च कर्त्तव्यं विप्रवेश्मसु पण्डितैः ।
द्विजवेश्मनि यो दद्यात् कार्त्तिके मासि दीपकान् ॥
अग्निष्टोमफलं तस्य प्रवदन्ति मनीषिणः ।
प्राणिजां नीलरक्तां च दीपवर्त्तिं च वर्जयेत् ॥
विशेषेण च कर्त्तव्या पद्मसूत्रभवा नृप ।
पद्मसूत्रोद्भवां वर्त्तिं गन्धतैलेन दीपकम् ॥
विरोगः सुभगश्चैव दत्त्वा भवति मानवः ।
प्रक्षाल्य देवदेवेश कर्पूरेण च दीपकम् ॥

अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् ।
एतन्मयोक्तं तव दीपदाने फलं समग्रं यदुवंशचन्द्र ।
श्रुत्वा यथावत् सततं हि देया दीपास्त्वया विप्रसुरालयेषु ॥
इति भोगदानानि समाप्तानि ।

अथाभयदानम् । तत्र विष्णुः ।
सर्वप्रदानाधिकाभयदानम् । तत्प्रदानेनाभीष्टलोकमवाप्नोति ।

संवर्त्तः ।
भूताभयप्रदानेन सर्वान् कामानवाप्नुयात् ।
दीर्घमायुश्च लभते सदा च सुखितो भवेत् ॥

नन्दिपुराणे ।
महतां सूक्ष्मदेहानां तथा च व्याधितात्मनाम् ।
हिंस्राणां सौम्यमूर्त्तीनां तथा ह्यफलदाभयम् ॥
वरमेकस्य सत्त्वस्य जीविताभयरक्षणम् ।
न तु विप्रसहस्रस्य गोसहस्रं सदक्षिणम् ॥

मार्कण्डेयपुराणे ।
धिक् तस्य जीवितं पुंसः शरणार्थिनमातुरम् ।
यो नार्त्तमनुगृह्णाति वैरपक्षमपि ध्रुवम् ॥
यज्ञदानतपांसीह परत्र च न भूतये ।
भवन्ति तस्य यस्यार्थपरित्राणे न मानसम् ॥

महाभारते ।
लोभाद्द्वेषाद्भयाद्वाऽपि यस्त्यजेच्छरणागतम् ।
ब्रह्महत्यासमं तस्य पापमाहुर्मनीषिणः ॥
शास्त्रेषु निष्कृतिर्दृष्टा महापातकिनामपि ।

शरणागतहन्तॄणां न दृष्टा निष्कृतिः क्व चित् ॥
महतामपि यज्ञानां कालेन क्षीयते फलम् ।
भीताभयप्रदानस्य क्षय एव न विद्यते ॥

तथा ।

प्राणिनं वध्यमानं हि यः शक्तः समुपेक्षते ।
स याति नरकं घोरमिति प्राहुर्मनीषिणः ॥
चतुःसागरपर्यन्तां यो दद्यात् पृथवीमिमाम् ।
सत्त्वेभ्यो ह्यभयं यश्च तयोरभयदोऽधिकः ॥

रामायणे ।

बद्धाञ्जलिपुटं दीनं याचन्तमपराधिनम् ।
न हन्याच्छरणं प्राप्तं सतां धर्ममनुस्मरन् ॥
आर्त्तो वा यदि वा त्रस्तः परेषां शरणागतः ।
अपि प्राणान् परित्यज्य रक्षितव्यः क्षतात्मना ॥
न चेद्भयाद्वा मोहाद्वा कामाद्वा तं तु रक्षति ।
स्वयं शक्त्या यथान्यायं तत्पापं लोकगर्हितम् ॥
विनष्टः पश्यतो यस्यारक्षितः शरणागतः ।
आदाय सुकृतं तस्मात् सर्वं गच्छत्यरक्षितः ॥
सुपर्याप्तनिसृष्टस्य नाश्वमेधस्य तत् फलम् ।
यत् फलं जातसंत्रासे रक्षिते शरणागते ॥

'सुपर्याप्तनिसृष्टस्य' इति सुपर्याप्तं सुसम्पूर्णं निसृष्टं दानं यस्य स तथा ।

पद्मपुराणे ।

सर्वेषामेव दानानामिदमेवैकमुत्तमम् ।
अभयं सर्वभूतानां नास्ति दानमतः परम् ॥

चराचराणां भूतानामभयं यः प्रयच्छति ।
स सर्वभयनिर्मुक्तः परं ब्रह्माधिगच्छति ॥

**वह्निपुराणे । शिविरुवाच ।**

एकतः क्रतवः सर्वे समाप्तवरदक्षिणाः ।
एकतो भयभीतस्य प्राणिनः प्राणरक्षणम् ॥
नातो गुरुतरो धर्मः कश्चिदन्योऽस्ति भूतले ।
प्राणिनां भयभीतानामभयं यत् प्रदीयते ॥
चरात्मकस्य सत्त्वस्य प्रदत्तं जीविताभयम् ।
न च विप्रसहस्रस्य गोसहस्रमलङ्कृतम् ॥
हेमधेनुधरादीनां दातारः सुलभा भुवि ।
दुर्लभः पुरुषो लोके सर्वभूताभयप्रदः ॥
महतामपि यज्ञानां कालेन क्षीयते फलम् ।
भीताभयप्रदानस्य क्षय एव न विद्यते ॥
अभयं सर्वसत्त्वेभ्यो यो ददाति दयापरः ।
तस्य देहाद्विमुक्तस्य क्षयो नास्ति कुतश्चन ॥
दत्तमिष्टं तपस्तप्तं तीर्थसेवाश्रयं तथा ।
सर्वाण्यभयदानस्य कलां नार्हन्ति षोडशीम् ॥
चतुःसागरपर्यन्तां यो दद्यात् पृथिवामिमाम् ।
अभयं यस्य भूतेभ्यो यो ददाति ततोऽधिकम् ॥
अपि त्यजे राज्यमहं शरीरं वाऽपि दुस्त्यजम् ।
न त्वेनं भयसन्त्रस्तं त्यजे दीनं कपोतकम् ॥
यन्ममास्ति शुभं किञ्चित् तेन जन्मनि जन्मनि ।
भये त्राता महार्त्तानामार्त्तिनाशाय देहिनाम् ॥
न ह्यहं कामये राज्यं न स्वर्गं नापुनर्भवम् ।

प्राणिनां दुःखतप्तानां कामये दुःखनाशनम् ॥
यथाऽत्र नानृतां वाणीमहमेतामुदाहरे ।
सत्येनानेन भगवान् प्रसीदतु महेश्वरः ॥

विष्णुधर्मोत्तरे ।

स एकः पुरुषो लोके सर्वधर्मभृतां वरः ।
वधभीतस्य यः कुर्यात् परित्राणं नरोत्तमः ॥
शक्रलोके स्थितिस्तस्य यावदिन्द्राश्चतुर्दश ।
तमःप्रवेशभीतस्य परित्राणेन मानवः ॥
ब्रह्मलोकमवाप्नोति नात्र कार्या विचारणा ।

'तमःप्रवेशनं' चक्षुरुत्पाटादिनाऽन्धीकरणम् ।

वधादपि परं पापं चक्षुषां तु वियोजनम् ।
पार्थिवेन न तत् कार्यं कदा चिदपि कस्य चित् ॥
तमःप्रवेशनं कृत्वा परेषां पुरुषाधमः ।
अन्धत्वं ध्रुवमाप्नोति यत्र यत्रापि जायते ॥
अपि कल्पसहस्राणि तमसा ह्यभियुज्यते ।
अङ्गच्छेदनभीतस्य कृत्वा त्राणविनिर्मितम् ॥
रुद्रलोकमवाप्नोति कल्पाशेषमिति श्रुतिः ।
कल्पादिसर्गे भवति ज्ञानयुक्तो नरस्ततः ॥
कृत्वा बन्धनभीतस्य परित्राणं नरोत्तमः ।
सर्वबन्धविनिर्मुक्तो वायुलोके महीयते ॥
आरोधनाद्धि भीतस्य त्राणं कृत्वा तथा नरः ।
सर्वदुःखविनिर्मुक्तः साध्यानां लोकमाप्नुयात् ॥
ताडनात्तु भीतस्य त्राणं तत्र समाचरेत् ।
सर्वदुःखविनिर्मुक्तो भृगूणां लोकमश्नुते ॥

विवासनाच्च भीतस्य त्राणं कृत्वा तथा नरः ।
सर्वलोकमवाप्नोति मानुष्ये स्थानमुत्तमम् ॥
धनापहारभीतस्य त्राणं कृत्वा नरोत्तमः ।
दानपुण्यमवाप्नोति लोके दानदमेव च ॥
अवमानाच्च भीतस्य त्राणं कृत्वा नरोत्तमः ।
स्वर्गलोकमवाप्नोति पूजां देवगणात् तथा ॥
नरोऽकृतपरित्राणः पुण्यं किञ्चिद्यदाचरेत् ।
भोगी तस्यापरित्रातुः नरः पुण्यस्य कर्मणः ॥
पशूनां च मृगाणां च पक्षिणां च तथा द्विजः ।
तृणद्रुमलतानां च त्राणाद्भवति नाकभाक् ॥
वधकस्य गतं हस्ते पशुं हृत्वा नरोत्तमः ।
नाकलोकमवाप्नोति सुखी सर्वत्र जायते ॥
यावन्ति पशुरोमाणि तावद्वर्षाणि मानवः ।
सर्वलोकमवाप्नोति यस्य त्राणं करोत्यसौ ॥
अपि कीटपतङ्गस्य त्राणात् स्वर्गमुपाश्नुते ।
बहून्यब्दसहस्राणि नात्र कार्या विचारणा ॥
चौरग्रस्तं नृपग्रस्तं रिपुग्रस्तं विमोक्षयेत् ।
व्यालग्रस्तं तथा विप्राः सोऽश्वमेधफलं लभेत् ॥
व्याधितस्यौषधं कृत्वा प्राणदानफलं लभेत् ।
उपदेशं तथा कृत्वा भिषङ्मूल्यं विना द्विजाः ॥
प्राणदानफलं प्राप्य नाकलोके महीयते ।

ये रक्षणायाभिरता मनुष्या भीरून् गतास्ते त्रिदशेन्द्रलोकम् ।
च्यवन्ति नाद्यापि च ते नृवीराः कालेऽपि तेषां च्यवनं च नास्ति ॥

इत्यभयदानविधिः ।

६१

अथ पान्थशुश्रूषा । गारुडपुराणे ।

पान्थं परिचरेद्यस्तु शयनासनभोजनैः ।
स स्वल्पेन प्रयासेन जयति क्रतुयाजिनाम् ॥
प्रतिश्रयं सुनिर्वातं शुचि भूमितलं शुभम् ।
अध्वनीनाय सम्पाद्य सद्यो दहति पातकम् ॥
वर्षायामुष्मलतमे हेमन्ते शिशिरेषु च ।
ग्रीष्मे च शीतलतले पान्थं विश्राम्य नाकभाक् ॥
दत्त्वा वासो विवस्त्राय रोगिणे रुक्प्रतिक्रियाम् ।
तृषार्त्ताय जलं स्वादु मृष्टमन्नं बुभुक्षवे ॥
पथिकाय यथा वित्तं सर्वं तरति दुष्कृतम् ।
अध्वन्यमनुमान्यापि शाकमूलफलैर्जलैः ॥
सकृत् सत्कृत्य वाचाऽपि श्रेयसो भाजनं भवेत् ।
अध्वगानां सुखार्थाय मार्गसंस्कारकारिणः ॥
अगाधजलसञ्चारे तेषां नौकाधिकारिणः ।
प्रपामपां रसैर्दिव्यैः पूर्णां पथिकहेतवे ॥
ये कुर्वन्ति नरा राजन् सर्वे ते स्वर्गभागिनः ।

विष्णुधर्मोत्तरे ।

मार्गे सेतुं सुखं कृत्वा वह्निष्टोमफलं लभेत् ।
जलप्रतरणे सेतुं यः करोति नरोत्तमः ॥
स तीर्णः सर्वदुःखेभ्यो नाकलोकं प्रपद्यते ।

तथा ।

शर्करालोष्टपाषाणकण्टकानि तथा नरः ।
मार्गादपास्य यत्नेन गोदानफलमाप्नुयात् ॥
श्रान्तसंवाहनं कृत्वा तदेव फलमश्नुते ।

वीजयित्वा तथा पान्थं तालवृन्तेन मानवः ॥
स्कन्धेन श्रान्तमूह्यापि वाजपेयफलं लभेत् ।
वाहनेनाथ यानेन स्वेदश्रान्तं तथा वहन् ॥
साध्यानां लोकमासाद्य देवभोगानुपाश्नुते ।
श्रान्तस्य भोजनं दत्त्वा स्थानमाप्नोति शाश्वतम् ॥
श्रान्ते तु तर्पिते तोयैः स्वस्तिमाप्नोति मानवः ।
उपानद्भ्यां च च्छत्रेण श्रान्तं संयोज्य मानवः ॥
संस्थाप्य शुभदेशेषु क्षणाद्बहुफलं लभेत् ।
भारश्रान्तात् तथा भारं गृहीत्वा वहते तु यः ॥
कर्मणा तेन विप्रेन्द्रः स्वर्गलोकमुपाश्नुते ।
मूल्येन वाहयित्वा यः परभारं विचक्षणः ॥
अश्वमेधस्य यज्ञस्य फलं दशगुणं लभेत् ।
रक्षणं पथि यः कृत्वा पान्थानां मानवोत्तमः ॥
प्राप्य वृद्धिं परां लोके रुद्रलोके महीयते ।
चौरेभ्यो रक्षणं कृत्वा शक्रलोके महीयते ॥
नदीतीरेषु संतार्य पान्थान् पथि तथा नरः ।
शीघ्रं तरति दुर्गाणि क्षुरधारांश्च पर्वतान् ॥
सर्वपोतं तथा नावं यः करोति नदीतटे ।
अश्वमेधफलं तस्य नरः प्राप्नोति कर्मणः ॥
सभास्थानानि रम्याणि यः करोति विचक्षणः ।
उद्यानानि विचित्राणि शक्रलोके महीयते ॥
प्रोक्षणीयप्रदानेन स्मृतिं मेधां च विन्दति ।
पान्थानां हि दया कार्या कर्मणा येन केन चित् ॥
कूपास्थानं परं पान्थः स्वगृहाद्यो विनिःसृतः ।

लिङ्गी वाऽप्यथ वा वर्णी पान्थी पथि विचक्षणैः ॥
*उपाख्यानैश्च कर्त्तव्यः पान्थः पूज्यस्तु सर्वशः ।
पान्थस्य पूजां पुरुषस्तु कृत्वा स्थानं समासाद्य पुरन्दरस्य ।
प्राप्नोति पुण्यैर्दिवि देवभोगान् पान्थास्ततः पूज्यतमा नृलोके ॥
इति नानोपचाराः ।

## अथाभ्यङ्गदानम् । स्कन्दपुराणे ।

तैलेन शुभगन्धेन दत्त्वाऽभ्यङ्गं द्विजातये ।
†विरूक्ष्य शुभचूर्णेन स्नाप्य कोष्णेन वारिणा ॥
प्राप्नोति ‡चन्द्रसालोक्यं यावदाहूतसंप्लवम् ।
यस्तु मार्गपरिक्लान्तं द्विजातिं श्रमकर्षितम् ॥
तैलेनाभ्यञ्जयेत् प्राज्ञः स सुखी मोदते चिरम् ।
यश्च पक्वादितैलेन द्विजं वा केशवं शिवम् ॥
संस्नापयति पुण्यात्मा किं तस्य बहुभिर्मखैः ।
यो द्वादशीदिने विष्णुमभ्यञ्जयति भक्तितः ॥
शुभगन्धेन तैलेन शक्तितो गोघृतेन वा ।
तिलतैलेन वा लोके गन्धर्वाणां स मोदते ॥
सर्पिषा कपिलाधेनोरथ वाऽन्येन सर्पिषा ।
उत्तरायणमासाद्य योऽभ्यञ्जयति धूर्जटिम् ॥
महापूजां घृतेनैव तस्मिन्नेव दिने शुभे ।
कृत्वा मनुष्यो लभते राज्यं निहतकण्टकम् ॥
सर्पिःपलसहस्रेण गोविन्दस्य शिवस्य वा ।

---

* उपेक्षा नैव कर्त्तव्येति न· प्र· पु· पा· ।
† विभज्य इति न· प्र· पु· पा· ।
‡ रुद्रसालोक्यमिति न· प्र· पु· पा· ।

महास्नानं नरः कृत्वा ब्रह्महत्या निरस्यति ॥

पद्मपुराणे ।

पर्वणि ब्रह्मकूर्चेन यः स्नापयति देवताम् ।
तस्य पुण्यकृतो लोका न क्षीयन्ते कदा चन ॥
पञ्चामृतेन यो नित्यं पुण्यकालेषु वा पुनः ।
स्नपनं सर्वदेवानां महापातकनाशनम् ॥

ब्रह्मकूर्चपञ्चामृते परिभाषायां व्याख्याते ।

ब्रह्माण्डपुराणे ।

शिरोऽभ्यङ्गेन विप्राणां प्रोषितानां विशेषतः ।
सुरूपः सुभगः श्रीमाँस्तेजस्वी जायते नरः ॥

अथ पादाभ्यङ्गदानम् । कात्यायनः ।

पादाभ्यङ्गैः शिरोऽभ्यङ्गैर्दानमानार्चनादिभिः ।
मृष्टवाक्यैर्विशेषेण पूजनीया द्विजोत्तमाः ॥

नन्दिपुराणे ।

पादाभ्यङ्गं तु यो दद्यात् पान्थाय परिवेदिने ।
स शुभाभरणैः पादैर्वन्दिभिर्नित्यवन्दितः ॥
भवेन्नृपो महाभागो मण्डले दशयोजने ।
संवाह्य तु परिश्रान्तं पादाभ्यङ्गादिना नरः ॥
धर्मस्य पुरमाप्नोति सर्वकामगुणोज्ज्वलम् ।
दत्त्वा वारि सुखस्पर्शं पादाभ्यङ्गं द्विजातये ॥
उच्छिष्टमार्जनाच्चापि गोदानफलमाप्नुयात् ।

नारदीयपुराणे ।

पादाभ्यङ्गं द्विजे दत्त्वा यतिभ्यो वाऽपि यत्नतः ।

सुरेन्द्रलोकमासाद्य मोदते विगतव्यथः ॥
अध्वस्फुटितपादानां परिचर्यां करोति यः ।
स सर्वभोगसम्पूर्णं विमानमधिरोहति ॥

अथ यज्ञोपवीतदानम् । आह बौधायनः ।

यज्ञोपवीतदानेन जायते ब्रह्मवर्चसी ।
तस्मात् तानि प्रदेयानि ब्राह्मणेन विपश्चिता ॥
विना यज्ञोपवीतेन समस्ता निष्फलाः क्रियाः ।
विना यज्ञोपवीतेन ब्राह्मण्यादेव हीयते ॥
अतः पुण्यतमं प्राहुस्तस्य दानं महर्षयः ।

अत्रिः ।

क्षौमजं वाऽथ कार्पासं पट्टसूत्रमथापि वा ।
यज्ञोपवीतं यो दद्यात् घृतवर्णं सुशोभनम् ॥
यथाशक्त्या विधानेन अग्निष्टोमफलं लभेत् ।

नन्दिपुराणे ।

यजते मानवो धर्मी दशवर्षाण्यसंशयः ।
यज्ञोपवीतं दत्त्वा तु विधिपूर्वं द्विजातये ॥

तथा ।

यज्ञोपवीतदानेन सुरेभ्यो ब्राह्मणाय वा ।
भवेद्विप्रश्चतुर्वेदः शुद्धधीर्नात्र संशयः ॥
त्रिवृच्छुक्लं सुपीतं वा पट्टसूत्रादिनिर्मितम् ।
दत्त्वोपवीतं रुद्राय भवेद्वेदान्तपारगः ॥

आदित्यपुराणे ।

क्षौमजं वाऽथ कार्पासं पट्टसूत्रमथापि वा ।

दद्याद्यज्ञोपवीतं यस्तं न हिंसन्ति वायसाः ॥

वायुप्रोक्ते ।

उपाकर्मणि विप्रेभ्यो दद्याद्यज्ञोपवीतकम् ।
आयुष्मान् जायते तेन कर्मणा मानवो भुवि ॥

तथा ।

श्रावणे शुक्लपक्षस्य प्रतिपत्प्रभृतिक्रमात् ।
पवित्रारोहणं कुर्याद्देवतानां यथाविधि ॥
अग्निब्रह्माम्बिकेभास्यपन्नगस्कन्दभानवः ।
दुर्गायमेन्द्रगोविन्दकामेशपितरः स्मृताः ॥
इत्येताभ्यो देवताभ्यः श्रावणेऽमलपक्षके ।
पवित्रारोपणं कुर्वन् याति विष्णोः परं पदम् ॥

अथ शिरोरोगघ्नयज्ञोपवीतदानम् । वायुपुराणे ।

उपवीतं हिरण्येन निर्मितं तु पलार्धतः ।
तदर्धेन तदर्धेन यथा विभवतोऽपि वा ॥
उत्तरीयं राजतं च तावत्या सङ्ख्यया कृतम् ।
ब्राह्मणाय ब्रह्मविदे श्रोत्रियायोपपादयेत् ॥
मन्त्रेणानेन विधिवत् पूजितायाङ्गुलीयकैः ।
धाता विधाता जगतां परमात्मा चतुर्मुखः ॥
विनाशयतु मे क्षिप्रं रोगवेगं शिरोगतम् ।

दानमन्त्रः ।

अथ गर्भस्रावघ्नयज्ञोपवीतदानम् ।

यज्ञोपवीतं कुर्वीत काञ्चनं तु स्वशक्तितः ।
अत्यन्तवर्णयुक्तेन राजितं चोत्तरीयकम् ॥

पलार्धेन तदर्धेन तदर्धार्धेन वा पुनः ।
ग्रन्थिप्रदेशे देयं तु मौक्तिकं वज्रमेव च ॥
प्रक्षाल्य पञ्चगव्येन गायत्र्या ताम्रभाजने ।
मानप्रमाणं तस्मिँस्तु निक्षिपेदाज्यमध्यतः ॥
आज्यस्योपरि संस्थाप्यमुपवीतं सुपूजितम् ।
गन्धपुष्पाक्षतैर्धूपैर्नैवेद्यैरतिभक्तितः ॥
ततो ब्राह्मणमाहूय होमं तत्र च कारयेत् ।
तिलैराज्येन मधुना मिश्रैरष्टोत्तरं शतम् ॥
तस्मै हुतवते देयं वस्त्राद्यैः पूजिताय तु ।
मन्त्रेणानेन विधिवत् प्राङ्मुखेनोपवीतकम् ॥
उपवीतं परमिदं ब्रह्मणा विधृतं पुरा ।
भावत्कस्यास्य दानेन गर्भं सन्धारये ह्यहम् ॥

दानमन्त्रः ।

फलान्यपि ब्राह्मणेभ्यो यस्मिन् काले प्रदापयेत् ।
अनुव्रज्य तथाऽऽचार्यं प्रणिपत्य क्षमापयेत् ॥
गर्भस्रावभवाद्दोषादेवं कृत्वा विमुच्यते ।

## अथ यष्टिदानम् । नन्दिपुराणे ।

यष्टिं वृद्धाय यो दद्यात् पुरुषस्तु दयापरः ।
सदा श्रेयो भवेन्नित्यं गतभीः स्वर्गमाप्नुयात् ॥

## आदित्यपुराणे ।

यष्टिं ये तु प्रयच्छन्ति नेत्रहीनेऽथ दुर्बले ।
तेषां तु विफलः पन्थाः फलमूलोपशोभितः ॥

## ब्रह्मवैवर्त्ते ।

ये पङ्गुभ्यश्च पान्थेभ्यो दीनेभ्योऽपि दयालवः ।

यष्टिदानं प्रकुर्वन्ति नीरोगास्ते न संशयः ॥
पङ्कोश्चरणकार्याणि यष्टिः प्रकुरुते सदा ।
गोसर्पादिनिवृत्तिश्च जायते यष्टिधारणात् ॥
भीतानां शरणं यष्टिर्गच्छतां निशि वा वने ।
शङ्कां पङ्कादिदोषोत्थामियमेव निरस्यति ॥
अतः *प्रविकले यश्च यष्टिं तुष्टिकरां ददेत् ।

स्कन्दपुराणे ।

यतिभ्यो वैणवं दण्डं द्विजेभ्योऽपि खनित्रकम् ।
प्रदाय परलोकेऽसौ यमदण्डं न गच्छति ॥
प्रददाति यथावर्णं यो दण्डं ब्रह्मचारिणे ।
स महाब्राह्मणो भूत्वा ब्रह्मवर्चसमश्नुते ॥

अथ यत्यादिवपनम् । आह यमः ।

ब्रह्मचारियतिभ्यश्च वपनं यस्तु कारयेत् ।
नखकर्माणि कुर्वाणश्चक्षुष्मान् जायते नरः ॥

विश्वामित्रः ।

यतिभ्यो ब्रह्मचारिभ्यः पथिकेभ्यस्तथैव च ।
अन्येषामपि दीनानां प्रकुर्वन् केशकृन्तनम् ॥
नखानां धावनं चैव कृत्वा रूपयुतो भवेत् ।
यस्तु सर्वजनार्थाय केशश्मश्रुनखादिकीम् ॥
क्रियां समुद्दिश्य भृतिं नापिताय प्रयच्छति ।
देवागारेषु तीर्थे वा श्रद्धया परया युतः ॥
स वसेदाश्विने लोके वीतशोकः शतं समाः ।

---

* पथिकलोकस्य इति न॰ प्र॰ पु॰ पा॰ ।

अथ पान्थशुश्रूषाप्रसङ्गेन गोपरिचर्या निरूप्यते । तत्र ब्रह्मपुराणे ।

*वन्दनीयाश्च पूज्याश्च गावः सेव्यास्तु नित्यशः ।

तथा ।

गवां गोष्ठे स्थितानां तु यः करोति प्रदक्षिणम् ।
प्रदक्षिणीकृतं तेन जगत् सदसदात्मकम् ॥

विष्णुः ।

गावः पवित्रमाङ्गल्या गवि लोकाः प्रतिष्ठिताः ।
गावो वितन्वते यज्ञान् गावः सर्वाघसूदनाः ॥
गोमूत्रं गोमयं सर्पिः क्षीरं दधि च रोचना ।
षडङ्गमेतत् परमं माङ्गल्यं सर्वदा गवाम् ॥
शृङ्गोदकं गवां पुण्यं सर्वाघविनिषूदनम् ।
गवां कण्डूयनं चैव सर्वकल्मषनाशनम् ॥
गवां ग्रासप्रदानेन स्वर्गलोके महीयते ।

पद्मपुराणे ।

सदा गावः प्रणम्यास्तु मन्त्रेणानेन पार्थिव ।
नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च ॥
नमो ब्रह्मसुताभ्यश्च †भूयो भूयो नमो नमः ।
मन्त्रस्य स्मरणादेव गोदानफलमाप्नुयात् ॥

आदित्यपुराणे ।

लवणं च यथाशक्त्या गवां ये वै ददन्ति च ।

---

* गावः स्तुत्याश्च इति न॰ प्र॰ पु॰ पा॰ ।
† पवित्राभ्यो नमो नमः इति न॰ प्र॰ पु॰ पा॰ ।

तेषां पुण्यकृतां लोका गवां लोकं व्रजन्ति ते ॥

योऽग्रं भक्त्या किञ्चिदप्राश्य दद्याद्गोभ्यो नित्यं गोव्रती सत्यवादी ।
शान्तो बुद्धो गोसहस्रस्य पुण्यं संवत्सरेणाप्नुयाद्धर्मशीलः ॥

## देवीपुराणे ।

गोपालको* गवां गोष्ठे यस्तु धूमं न कारयेत् ।
मक्षिकालीननरके मक्षिकाभिः स भक्ष्यते ॥
मृतवत्सां तु गां यस्तु दमित्वा पिवते नरः ।
वाहिताऽस्याश्चिरं तिष्ठेत् क्षुधार्त्तो वै नराधमः ॥

## महाभारते ।

गोकुलस्य तृषार्त्तस्य जलान्ते वसुधाधिप ।
उत्पादयति यो विघ्नं तमाहुर्ब्रह्मघातकम् ॥
कृत्वा गवर्थे शरणं शीतवातक्षमं महत् ।
आसप्तमं तारयति कुलं भरतसत्तम ॥

## ब्रह्मपुराणे ।

सदोषा गौर्गृहे जाता परिपाल्या सदा स्वयम् ।
दुःशीलोऽपि द्विजः पूज्यो न तु शूद्रः सुसंयतः† ॥
अनाथानां गवां यत्नात् कार्यस्तु शिशिरे मठः ।
पुण्यार्थं यत्र दीयन्ते तृणतोयेन्धनानि च ॥

## हारीतः ।

द्वौ मासौ पाययेद्वत्सं तृतीये द्विस्तनं दुहेत् ।
चतुर्थे त्रिस्तनं चैव यथान्यायं यथाबलम् ॥

---

* गोरूपानामिति क्व चित् पाठः ।

† न शूद्रो विजितेन्द्रिय इति क्व चित् पाठः ।

ब्रह्मपुराणे ।

आषाढ्यामाश्वयुज्यां च पौष्यां माघ्यां च सर्वदा ।
न गृह्णीयाद्गवां क्षीरं सर्वं वत्साय निक्षिपेत् ॥
न षण्डान् वाहयेच्चैव न गां भारेण पीडयेत् ।
युगादिषु युगान्तेषु षडशीतिमुखेषु च ॥
दक्षिणोत्तरगे सूर्ये तथा विषुवतोर्द्वयोः ।
सङ्क्रान्तिषु च सर्वासु ग्रहणे चन्द्रसूर्ययोः ॥
पञ्चदश्यां चतुर्दश्यां द्वादश्यामष्टमीषु च ।
उपचारो गवां कार्यो मासि मासि यथाक्रमम् ॥
लवणस्य तु चत्वारि पलान्यष्टौ घृतस्य च ।
परकीयस्य दुग्धस्य तथा देयानि षोडश ॥
द्वात्रिंशत् शीतलस्यापि जलस्य च पलानि च ।
आदौ विचार्य पयसः परिमाणं बलं रुचि ॥
आकस्मिकं तु दातव्यं पुण्यार्थं तु गवाह्निकम् ।
प्रभाते लवणं यत्र दीयते च ततो जलम् ॥
ततस्तृणानि भोज्यं च पोषणं मांसवर्जितम् ।
निशि दीपः सतन्त्रीको दिव्या पौराणिकी कथा ॥
एवं कृते महीं पूर्णां रत्नैर्दत्त्वा भवेत् फलम् ।
गोप्रदानाय यत् पुण्यं गवां संरक्षणाद्भवेत् ॥
मनुष्यैस्तृणतोयाद्यैर्गावः पाल्याः प्रयत्नतः ।
देयाः पूज्याश्च पोष्याश्च प्रतिपाल्याश्च सर्वदा ॥

तथा ।

तृणोदकाद्येषु वनेषु मत्ताः क्रीडन्तु गावः सवृषाः सवत्साः ।
क्षीरं प्रमुञ्चन्तु सुखं स्वपन्तु शीतातपव्याधिभयैर्विमुक्ताः ॥

इमं मन्त्रं स शुद्धात्मा जपेन्नित्यं समाहितः ।
गच्छन् तिष्ठन् जपन् जिघ्रन् भुञ्जन् क्रीडन् समुत्सृजेत् ॥
महाभयेषु सर्वेषु समेषु विषमेषु च ।
प्रयाणकाले च तथा श्रोतव्यमभयप्रदम् ॥

तथा ।

घासग्रासादिकं देयं निशि दीपः सुभास्वरः ।
इतिहासपुराणानां व्याख्यानं सोपवीजनम् ॥
अन्तस्तुष्टैर्यथा शक्त्या परिचर्या यथाक्रमम् ।
ताडनाक्रोशखेदाश्च स्वप्नेऽपि न कदा चन ॥
तासां मूत्रपुरीषे तु नोद्वेगः क्रियते क चित् ।
शोधनीयश्च गोवाटः शुष्कक्षारादिकैः सदा ॥
ग्रीष्मे वृक्षाकुले वेश्मशीततोये विकर्दमे ।
वर्षासु चाथ शिशिरे सुखोष्णे वातवर्जिते ॥
उच्छिष्टं मूत्रविट्श्लेष्ममलं जह्यान्न तत्र च ।
रजस्वला न प्रवेश्या नान्त्यजातिर्न पुंश्चली ॥
न लङ्घयेद्वत्सतरीं न क्रीडेद्गोष्ठसन्निधौ ।
न गन्तव्यं गवां मध्ये सोपानत्कैः सपादुकैः ॥
हस्त्यश्वरथयानैश्च सवितानैः कदा चन ।
दक्षिणोत्तरगैः प्रह्वैर्गन्तव्यं च पदातिभिः ॥
गावः कृशातुराः पाल्याः श्रद्धया पितृमातृवत् ।
गिरिप्रपातसिंहर्क्षशीतातपभयातुराः* ॥
महाकोलाहले घोरे दुर्दिने देशविप्लवे ।
गवां तृणानि देयानि शीतलं च तथा जलम् ॥

---

* भयात् तथेति क चित् पाठः ।

विष्णुधर्मोत्तरे । पुष्कर उवाच ।

गवां हि पालनं राज्ञा कर्त्तव्यं भृगुनन्दन ।
गावः पवित्रा माङ्गल्या गोषु लोकाः प्रतिष्ठिताः ॥
गावो वितन्वते यज्ञं गावो विश्वस्य मातरः ।
शकृन्मूत्रं परं तासामलक्ष्मीतापनं परम् ॥
तद्धि मेध्यं प्रयत्नेन तत्र लक्ष्मीः प्रतिष्ठिता ।
उद्वेगं च न गन्तव्यं शकृन्मूत्रस्य जानता ॥
गवां मूत्रपुरीषे तु ष्ठीवनाद्यं न संत्यजेत् ।
गोरजः परमं पुण्यमलक्ष्मीविघ्ननाशनम् ॥
गवां कण्डूयनं चैव सर्वकल्मषनाशनम् ।
गवां शृङ्गोदकं राम जाह्नवीजलसन्निभम् ॥
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
पवित्रं परमं ज्ञेयं स्नाने पाने च भार्गव ॥
रक्षोघ्नमेतन्माङ्गल्यं कलिदुःस्वप्ननाशनम् ।
रोचना च तथा धन्या रक्षोगदगरापहा ॥
यस्तु कल्यं समुत्थाय मुखमाज्ये निरीक्षते ।
तस्य लक्ष्मीः क्षयं याति वर्धते न च किल्बिषम् ॥
गवां ग्रासप्रदानेन पुण्यं स महदश्नुते ।
यावतीः शक्नुयाद्गावः सुखं धारयितुं गृहे ॥
धारयेत् तावतीर्नित्यं क्षुधितास्ता न धारयेत् ।
दुःखिता धेनवो यत्र वसन्ति द्विजमन्दिरे ॥
नरकं समवाप्नोति नात्र कार्या विचारणा ।
दत्त्वा परगवे ग्रासं पुण्यं स महदश्नुते ॥
शिशिरं सकलं कालं ग्रासं परगवे तथा ।

दत्त्वा स्वर्गमवाप्नोति संवत्सरशतानि षट् ॥
अग्रभक्तं नरो दत्त्वा नित्यमेव तथा गवाम् ।
समाष्टकेन लभते नाकलोकसमायुतम् ॥
सायं प्रातर्मनुष्याणामशनं वेदनिर्मितम् ।
तथैकमशनं दत्त्वा गवां नित्यमतन्द्रितः ॥
द्वितीयं यः समश्नाति तेन संवत्सरान् नरः ।
गवां लोकमवाप्नोति यावन्मन्वन्तरं द्विजः ॥
शीतत्राणं गवां कृत्वा गृहे पुरुषसत्तम ।
गवां प्रपाने* पानीयं कृत्वा पुरुषसत्तम ॥
वारुणं लोकमाप्नोति †क्रीडत्यप्सरसां गणैः‡ ।
गवां पानप्रवृत्तानां यस्तु विघ्नं समाचरेत् ॥
ब्रह्महत्या कृता तेन घोरो भवति भार्गव ।
परां तृप्तिमवाप्नोति यत्र तत्राभिजायते ॥
गवां प्रचारभूमिं तु वाहयित्वा हलादिना ।
नरकं महदाप्नोति यावदिन्द्राश्चतुर्दश ॥
सिंहव्याघ्रभयत्रस्तां पङ्कलग्नां जले गताम् ।
गामुद्धृत्य नरः स्वर्गे कल्पभोगानुपाश्नुते ॥
गवां लवणदानेन रूपवानभिजायते ।
सौभाग्यं महदाप्नोति लावण्यं च द्विजोत्तम ॥
औषधं च तथा दत्त्वा विरोगस्त्वभिजायते ।
औषधं लवणं तोयमाहारं च प्रयच्छति ॥

---

* प्रयामे इति क्व चित् पाठः ।

† क्रीडत्यब्दगणायुतम् इति न॰ प्र॰ पु॰ पा॰ ।

‡ यावदिन्द्राश्चतुर्दश इति क्व चित् पाठः ।

तासां चेदवरुद्धानां चरन्तीनां मिथो वने ।
गामुत्प्लुत्य वृको *हन्यान्न पालस्तत्र किल्विषी ॥
गोवधेन नरो याति नरकानेकविंशतिम् ।
तस्मात् सर्वप्रयत्नेन कार्यं तासां तु पालनम् ॥
विक्रयाच्च गवां राम नरकं प्रतिपद्यते ।
तासां तु कीर्त्तनादेव नरः पापात् प्रमुच्यते ॥
तासां संस्पर्शनं धन्यं सर्वकल्मषनाशनम् ।
†दानेन च तथा तासां कुलान्यपि समुद्धरेत् ॥
उदक्यासूतिकादोषो नैव तत्र गृहे भवेत् ।
भूमिदोषस्तथाऽन्येऽपि यत्रैका वसते च गौः ॥
गवां निःश्वासवातेन परा शान्तिर्गृहे भवेत् ।
नीराजनं तत्परमं सर्वस्थानेषु कीर्त्त्यते ॥
गवां संस्पर्शनाद्राम कल्मषं क्षीयते नृणाम् ।
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ॥
एकरात्रोपवासश्च श्वपाकमपि शोधयेत् ।
पृथक् च प्रत्ययाभ्यस्तमिति सान्तपनं स्मृतम् ॥
सर्वकामप्रदं राम सर्वाशुभविनाशनम् ।
कृत्वाऽतिकृच्छ्रं पयसां दिवसानेकविंशतिम् ॥
निर्मलास्तेन चीर्णेन भवन्ति पुरुषोत्तमाः ।
त्र्यहमुष्णं पिवेन्मूत्रं त्र्यहमुष्णं घृतं पिवेत् ॥
त्र्यहमुष्णं पयः पीत्वा वायुभक्षः परं त्र्यहम् ।
तप्तकृच्छ्रमिदं प्रोक्तं सर्वाशुभविनाशनम् ॥

* हन्यात् पाले तत किल्विषं भवेत् इति न० प्र० पु० पा० ।
† वातेन इति न० प्र० पु० पा० ।

शीतकृच्छ्रस्तथैवैष क्रमाच्छीतैः प्रकीर्त्तितः ।
सर्वाशुभविनाशाय निर्मितो ब्रह्मणा स्वयम् ॥
गोमूत्रेणाचरेत् स्नानं वृत्तिं कुर्याच्च गोरसैः ।
उत्थितासूत्थितस्तिष्ठेदुपविष्टासु च स्थितः ॥
अभुक्तवत्सु नाश्नीयादपीतासु च नो पिबेत् ।
त्राणं चैवात्मनः कार्यं भयार्त्तांश्च समुद्धरेत् ॥
आत्मानमपि संत्यज्य गोव्रतं तत् प्रकीर्त्तितम् ।
सर्वपापप्रशमनं मासेनैकेन भार्गव ॥
व्रतेनानेन पूर्णेन गोलोकं पुरुषो व्रजेत् ।
अभीष्टमथ वा राम यावदिन्द्राश्चतुर्दश ॥
गवामाहारनिर्मुक्तानश्नन् प्रतिदिनं यवान् ।
मासेन तदवाप्नोति यत्किञ्चिन्मनसेच्छति ॥
गोमतीं च तथा विद्यां सायं प्रातस्तथा जपेत् ।
गोलोकमाप्नोति नरो नात्र कार्या विचारणा ॥
उपर्युपरि सर्वेषां गवां लोकः प्रकीर्त्तितः ।
न वसन्ति सदा यत्र गावस्त्वाकाशगा दिवि ॥
विमानेषु विचित्रेषु वृतेष्वप्सरसां गणैः ।
किङ्किणीजालचित्रेषु वीणामुरचनादिषु ॥
सदा कामफला नद्यः क्षीरपायसकर्दमाः ।
शीतलामलपानीयाः सुवर्णसिकतास्तथा ॥
पुष्करिण्यः शुभास्तत्र वैदूर्यकमलोत्पलाः ।
मानसी च तथा सिद्धिस्तत्र लोके भृगूत्तम ॥
तं तु लोकं नरा यान्ति गवां भक्त्या न संशयः ।
गोमतीं कीर्त्तयिष्यामि सर्वपापप्रणाशिनीम् ॥

तां तु मे गदतो विप्र शृणुष्व सुसमाहितः ।
गावः सुरभयो नित्यं गावो गुग्गुलगन्धिकाः ॥
गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं परम् ।
अन्नमेव परं गावो देवानां हविरुत्तमम् ॥
पावनं सर्वदेवानां रक्षन्ति च वहन्ति च ।
हविषा मन्त्रपूतेन तर्पयन्त्यमरान् दिवि ॥
ऋषीणामग्निहोत्रेषु गावो होमनियोजिताः ।
सर्वेषामेव भूतानां गावः शरणमुत्तमम् ॥
गावः पवित्रं परमं गावो मङ्गलमुत्तमम् ।
गावः स्वर्गस्य सोपानं गावो धन्याः सनातनाः ॥
नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च ।
नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः ॥
ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम् ।
एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति* ॥
देवब्राह्मणगोसाधुसाध्वीभिः सकलं जगत् ।
धार्यते वै यदाऽकस्मात् सर्वे पूज्यतमा मताः ॥
यत्र तीर्थे सदा गावः पिबन्ति तृषिता जलम् ।
उत्तरन्त्यथ वा येन स्थिता तत्र सरस्वती ॥
गवां हि तीर्थे वसतीह गङ्गा पुष्टिस्तथाऽऽसां रजसि प्रवृद्धा ।
लक्ष्मीः करीषे प्रणतौ च धर्मस्तासां प्रणामं सततं च कुर्यात् ॥

भविष्यत्पुराणे । ब्रह्मोवाच ।

गामालभ्य नमस्कृत्य कुर्याद्यस्तु प्रदक्षिणम् ।
प्रदक्षिणी कृता तेन सप्तद्वीपा वसुन्धरा ॥

---

* हविरन्यत्र तिष्ठतीति क्वचित् पाठः ।

गवां हुङ्कारशब्देन दृष्टिपातेन सत्तम ।
पापं प्रणश्यते यस्मात् तस्मात् पश्यन् स्पृशेच्च ताः ॥
कुतस्तस्य भवेत् पापं गृहं यस्य विभूषितम् ।
सततं बालवत्साभिरर्जुनीभिरलङ्कृतम् ॥
यावत् तीर्थानि मेदिन्यामासमुद्रसरांसि च ।
गवां शृङ्गोदकस्नानकलां नार्हन्ति षोडशीम् ॥
गवामस्थि न लङ्घेत मृते गन्धं न वर्जयेत् ।
यावदाघ्राति तद्गन्धं तावत् पुण्येन युज्यते* ॥
गवां कण्डूयनं धन्यं गोप्रदानफलप्रदम् ।
तुल्यं गोशतदानस्य भयरोगादिपालनम् ॥
तृणोदकादिसंयुक्तं यः प्रदद्याद्गवाह्निकम् ।
कपिलाशतदानस्य फलं विद्यान्न संशयः ॥
पञ्चभूते शिवे पुण्ये पवित्रे सूर्यसम्भवे ।
प्रतीच्छेदं मया दत्तं सौरभेयि नमोऽस्तु ते ॥
बहुना च किमुक्तेन गावः पाल्याः प्रयत्नतः ।
गावो देयास्तथा रक्ष्याः पूज्या ग्राह्याश्च सर्वशः ॥
गावो ये ताडयन्तीह सर्वलोकस्य मातरः ।
ते यान्ति रौरवं नाम नरकं नात्र संशयः ॥
ताडयेद्यस्तु वै मोहाद्यो वा कश्चिन्नराधमः ।
स गच्छेन्नरकं घोरं संपीडकमिति श्रुतिः ॥
आयान्तीं हन्तुकर्मा यः सौरभेयीं विभावरीम् ।
गच्छ मातरिति ब्रूयात् स याति परमं पदम् ॥

---

* तावद्गन्धेन युज्यते इति क्वचित् पाठः ।

वाराहपुराणे । यम उवाच ।

गावः पवित्रा माङ्गल्या देवानामपि देवताः ।
यस्ताः शुश्रूषते भक्त्या स पापेभ्यः प्रमुच्यते ॥
यावज्जीवं कृतं पापं तत् क्षणादेव नश्यति ।
लाङ्गूलेनोद्धृतं तोयं मूर्ध्ना गृह्णाति यो नरः ॥
शरत्सु ह्युपजातेभ्यः स पापेभ्यः प्रमुच्यते ।
प्रसवे यो गवां स्नायात् रोहिण्यां मानवो भुवि ॥
सर्वपापकृतान् दोषान् दहत्याशु न संशयः ।
धेनोः स्तनाद्विनिष्क्रान्तां धारां क्षीरस्य यो नरः ॥
शिरसा प्रतिगृह्णीयात् स पापेभ्यः प्रमुच्यते ।

इति गोपरिचर्या ।

अथान्नदानम् । महाभारते शान्तिपर्वणि दानधर्मे । युधिष्ठिर उवाच ।

कानि दानानि लोकेऽस्मिन् चारुकामो महीपतिः ।
गुणाधिकेभ्यो विप्रेभ्यो दद्याद्भरतसत्तम ॥
केन तुष्यति ते सद्यस्तुष्टाः किं प्रदिशन्ति च ।
शंस चैतन्महाबाहो फलं पुण्यकृतं महत् ॥
किं दत्तं फलवद्राजन्निह लोके परत्र च ।
भवतः श्रोतुमिच्छामि तन्मे विस्तरतो वद ॥

भीष्म उवाच ।

इममर्थं पुरा पृष्टो नारदो देवदर्शनः ।
यदुक्तवानसौ तन्मे गदतः शृणु भारत ॥

नारद उवाच ।

अन्नमेव प्रशंसन्ति देवा ऋषिगणाः सुराः ।

लोकतन्त्रं हि संज्ञाश्च सर्वमन्ने प्रतिष्ठितम् ॥
अन्नेन सदृशं दानं न भूतं न भविष्यति ।
तस्मादन्नं विशेषेण दातुमिच्छन्ति मानवः ॥
अन्नमूर्जस्करं लोके प्राणाश्चान्ने प्रतिष्ठिताः ।
अन्नेन धार्यते विश्वं सर्वं जगदिदं प्रभो ॥
अन्नाद्गृहस्था लोकेऽस्मिन् भिक्षवस्तत एव च ।
अन्नात् प्रभवति प्राणः प्रत्यक्षं नात्र संशयः ॥
कुटुम्बं पीडयित्वाऽपि ब्राह्मणाय महात्मने ।
दातव्यं भिक्षवे चान्नमात्मनो भूतिमिच्छता ॥
ब्राह्मणायाभिरूपाय यो दद्यादन्नमर्थिने ।
विदधाति निधिं श्रेष्ठं पारलौकिकमात्मनः ॥
आर्त्तमध्वनि वर्त्तन्तं वृद्धं द्विजमुपस्थितम् ।
अर्चयेद्भूतिमन्विच्छन् श्रोत्रियं गृहमागतम् ॥
क्रोधमुत्पतितं हित्वा सुशीलो वीतमत्सरः ।
अन्नदः प्राप्नुते राजन् दिवि चेह च तत्सुखम् ॥
नावमन्येदभिगतं न प्रणुद्यात् कथं चन ।
अपि श्वपाके शुनि वा न दानं विप्रणश्यति ॥
यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्त्तते ।
श्रान्तायादृष्टपूर्वाय स महाधर्ममाप्नुयात् ॥
पितॄन् देवाँस्तथा विप्राँस्तीर्थानि च नराधिप ।
यो नरः प्रीणयत्यन्नैस्तस्य पुण्यफलं महत् ॥
कृत्वाऽपि पातकं कर्म यो दद्यादन्नमर्थिने ।
ब्राह्मणाय विशेषेण न स पापेन युज्यते ॥
ब्राह्मणेष्वक्षयं दानम ं शूद्रे महत् फलम् ।

अन्नदानं हि शूद्रे च ब्राह्मणेभ्यो विशिष्यते ॥
न पृच्छेद्गोत्रचरणं स्वाध्यायं देशमेव वा ।
भिक्षिते ब्राह्मणे चेह दद्यादन्नं प्रयाचितः ॥
अन्नदस्यान्नवृक्षाश्च सर्वकामफलान्विताः ।
भवन्तीहाथ चामुत्र नृपते नात्र संशयः ॥
आशंसते हि पितरः सुवृष्टिमिव कर्षकाः ।
अस्माकमपि पुत्रो वा पौत्रो वाऽन्नं प्रदास्यति ॥
ब्राह्मणो हि महद्भूतं स्वयं देहीति याचते ।
अकामश्च सकामो वा दत्त्वा पुण्यमवाप्नुयात् ॥
ब्राह्मणः सर्वभूतानामतिथिः प्रभृताग्रभुक् ।
विप्रा यमभिगच्छन्ति भिक्षमाणा गृहं सदा ॥
सत्कृताश्च निवर्त्तन्ते तदतीव प्रवर्त्तते ।
महाभोगकुले जन्म प्रेत्य प्राप्नोति भारत ॥
दत्त्वा त्वन्नं नरो लोके तथा स्थानमनुत्तमम् ।
इष्टमिष्टान्नदायी च स्वर्गे वसति सत्कृतः ॥
अन्नं प्राणा नाराणां हि सर्वमन्ने प्रतिष्ठितम् ।
अन्नदः पशुमान् पुत्री धनवान् भोगवानपि ॥
प्राणवाँश्चापि भवति रूपवाँश्च तथा नृप ।
अन्नदः प्राणदो लोके सर्वदः प्रोच्यते स च ॥
अन्नं हि दत्त्वाऽतिथये ब्राह्मणाय यथाविधि ।
प्रदाता सुखमाप्नोति दैवैश्चापि प्रपूज्यते ॥
ब्राह्मणो हि महद्भूतं क्षेत्रं चरति पादवत् ।
उप्यते यत्र यद्बीजं तद्धि पुण्यफलं महत् =
प्रत्यक्षप्रीतिजननं भोक्तृणामन्नमेव च ।

सर्वाणीहान्नदानानि परोक्षे फलवन्त्यतः ॥
अन्नाद्धि प्रसवं विद्धि रतिमन्नाच्च पार्थिव ।
धर्मार्थावन्नतो विद्धि रोगनाशं तथाऽन्नतः ॥
अन्नं ह्यमृतमित्याहुः पुरा काले प्रजापतिः ।
अन्नं बिभर्त्ति लोकस्य शरीरं पाञ्चभौतिकम् ॥
अन्नं दिव्यं तु पुरुषं सर्वं ह्यन्ने प्रतिष्ठितम् ।
अन्नप्रणाशे भिद्यन्ते शरीरे पञ्चधातवः ॥
बलं बलवतोऽपीह प्रणश्यत्यन्नहानितः ।
आवाहाश्च विवहाश्च यज्ञाश्चान्नमृते तथा ॥
न वर्त्तन्ते नरश्रेष्ठ ब्रह्मन् चान्नं प्रमीयते ।
अन्नदः सर्वमेतद्धि यत् क चित् स्थाणु जङ्गमम् ॥
त्रिषु लोकेषु धर्मार्थमन्नं देयमतो बुधैः ।
अन्नदस्य मनुष्यस्य बलमोजो यशः सुखम् ॥
कीर्त्तिश्च वर्धते तस्य त्रिषु लोकेषु पार्थिव ।
मेधेष्वदत्तं नैवैतत् प्राणिनां पतनं शिव ॥
न च मेघगतं वारि शक्रो वर्षति भारत ।
आदत्ते च रसं भौममादित्यः स्वगभस्तिभिः ॥
वायुरादित्यतश्चान्तश्चरो देवः* प्रजापतिः ।
तद्यदा मेघतो वारि पतितं भवति क्षितौ ॥
तदा वसुमती देवी स्निग्धा भवति भारत ।
ततः सस्यानि रोहन्ति येनोद्धर्त्तयते जगत् ॥
मांसमेदोऽस्थिशुक्राणां प्रादुर्भावस्ततः पुनः ।
संभवन्ति ततः शुक्रात् प्राणिनः पृथिवीपते ॥

---

* वायुरादित्य यद्याश्च चरेद्धेव इति क चित् पाठः ।

अग्नीषोमौ हि तच्छुक्रं प्रजनं पुष्यतश्च ह ।
एवमन्नं च सूर्यश्च पवनः सर्व एव च ॥
एक एव स्मृतो राशिर्यतो भूतानि जज्ञिरे ।
प्राणान् दधाति भूतानां प्रजाश्च भरतर्षभ ॥
गृहमभ्यागतायाशु यो दद्यादन्नमर्थिने ।

भीष्म उवाच ।

नारदेनैवमुक्तोऽहमदामन्नं सदा नृप ।
अन्नं सूर्यस्वमप्यन्नं तस्माद्देहि युधिष्ठिर ॥
दत्त्वाऽन्नं विधिवद्राजन् द्विजेभ्यस्त्वमपि प्रभो ।
यथावदनुरूपेभ्यस्ततः स्वर्गमवाप्स्यति ॥
अन्नदानाद्धि ये लोकास्तान् शृणुष्व नराधिप ।
भवनानि प्रकाशन्ते दिवि तेषां महात्मनाम् ॥
नानासंस्थानरूपाणि नानास्तम्भान्वितानि च ।
चन्द्रमण्डलशुभ्राणि किङ्किणीजालवन्ति च ॥
तरुणादित्यवर्णानि स्थावराणि चराणि च ।
अनेकशतभौमानि सान्तर्जलवनानि च ॥
वैदूर्यार्कप्रकाशानि रूक्मरूप्यमयानि च ।
सर्वकामफलाश्चापि वृक्षा भवनसंस्थिताः ॥
वाप्यो वीथ्यः सभा कूपा दीर्घिकाश्चैव सर्वतः ।
घोषवन्ति च यानानि युक्तान्यथ सहस्रशः ॥
भक्ष्यभोज्यमयाः शाला वासांस्याभरणानि च ।
क्षीरं स्रवन्त्यः सरितस्तथा चैवान्यपर्वताः ॥
प्रासादाः पाण्डुराभासाः शय्याश्च कनकोज्ज्वलाः ।
तानन्नदाः प्राप्नुवन्ति तस्मादन्नप्रदो भव ॥

एते लोकाः पुण्यकृतामन्नदानान्महात्मनाम् ।
तस्मादन्नं विशेषेण दातव्यं मानवैर्भुवि ॥

अग्निपुराणे ।

अन्नदानस्य माहात्म्यं सर्वेभ्यो मुनिसत्तमैः ।
सुखप्रीतिकरं प्रोक्तं कथयामि तवानघ ॥
ददस्वान्नं ददस्वान्नं ददस्वान्नं नृपोत्तम ।
सद्यस्तुष्टिकरं लोके किं दत्तेनापरेण ते ॥
पुरा कल्पे तु रामेण यदुक्तं विधिनाऽनुगम् ।
निर्वेदाद्देवदेवेन तथाऽपि कथयामि ते ॥
पृथिव्यामन्नपूर्णायां वयमन्नस्य काङ्क्षिणः ।
सौमित्रे नूनमस्माभिर्न ब्राह्मणमुखे हुतम् ॥
यदुप्यते स्वकेदारे तस्यावश्यं फलं नरैः ।
प्राप्यते लक्ष्मणास्माभिर्न ब्राह्मणमुखे हुतम् ॥
यन्न प्राप्यं न तत् प्राप्यं विद्यया पौरुषेण वा ।
सत्यं लोके प्रवादोऽयं नादत्तमुपतिष्ठते ॥
भक्ष्योपयोगादन्नस्य दानं श्रेयस्करं परम् ।
प्रकारान्तरभोज्यानि दानान्यन्यानि पार्थिव ॥
स्नातानामनुलिप्तानां भूषितानां च भूषणैः ।
न सुखं न च सन्तोषो भवेदन्नादृते नृणाम् ॥
धर्मार्थकाममोक्षाणामन्नं परमसाधनम् ।
अन्नं प्रजापतिः साक्षादन्नं विष्णुस्तथा शिवः ॥
तस्मादन्नं विशेषेण दातव्यं मानवैर्भुवि ।

तत्र बृहस्पतिः ।

अन्नदानं गुणकरं सर्वदानाधिकं नृणाम् ।

अन्नाद्धि प्राणजननं नृणां वै जायते सदा ॥
प्राणाध्यायनमात्रं तु यो विप्राय प्रयच्छति ।
दुर्भिक्षेऽन्न विशेषेण *दातव्यं मानवैर्भुवि ॥

देवलः ।

कृत्वा तु पातकं कर्म यो दद्यादन्नमीप्सितम् ।
ब्राह्मणानां विशेषेण स निहन्त्यात्मनस्तमः ॥
आदरेण च भक्त्या च यदन्नमुपदीयते ।
तत् प्रीणयति गात्राणि नामृतं मानवर्जितम् ॥
दुर्लभस्तु मुदा दाता भोक्तारश्च सुदुर्लभाः ।
मुदा दाता च भोक्ता च तावुभौ स्वर्गवासिनौ ॥
योऽन्नं बहुमतं भुङ्क्ते यश्चान्नं नावमन्यते ।
यश्चान्नं प्रीतितो दद्यात् तस्यान्नमुपतिष्ठते ॥
प्रीतितोऽन्नं च यो दद्याद्गृह्णीयाद्योऽभिपूज्य च ।
प्रीतितोऽक्षयमश्नाति पूजितः स्वर्गमश्नुते ॥
यो दद्यादप्रियेणान्नं यश्चान्नं नाभिनन्दति ।
तावुभौ नरके मग्नौ वसेतां शरदः शतम् ॥

स्कन्दपुराणे ।

सर्वेषामेव दानानामन्नदानं परं स्मृतम् ।
सद्यः प्रीतिकरं दिव्यं बलबुद्धिविवर्धनम् ॥
नान्नदानसमं दानं त्रिषु लोकेषु विद्यते ।
अन्नाद्भवन्ति भूतानि म्रियन्ते तदभावतः ॥
गर्भस्था जायमानाश्च बालवृद्धाश्च मध्यमाः ।
आहारमभिकाङ्क्षन्ति देवदानवतापसाः ॥

---

* स लभेताक्षयं दिवम् । इति न॰ प्र॰ पु॰ पा॰ ।

क्षुधा हि सर्वरोगाणां व्याधिः श्रेष्ठतमः स्मृतः ।
तस्यान्नौषधलेपेन प्रतीकारः प्रकीर्त्तितः ॥
अन्नदः प्राणदः प्रोक्तः प्राणदश्चापि सर्वदः ।
तस्मादन्नप्रदानेन सर्वदानफलं लभेत् ॥
धर्मार्थकाममोक्षाणां देहः परमसाधनम् ।
स्थितिस्तस्यान्नपानाभ्यामतस्तत् सर्वसाधनम् ॥
अन्नं प्रजापतिः साक्षादन्नं विष्णुः शिवः स्वयम् ।
तस्मादन्नसमं दानं न भूतं न भविष्यति ॥

विष्णुधर्मोत्तरे । हंस उवाच ।

सर्वेषामेव दानानामन्नदानं विशिष्यते ।
अन्नदानात् परं दानं न भूतं न भविष्यति ॥
नात्र पात्रपरीक्षा स्यान्न कालनियमस्तथा ।
न च देशः परीक्ष्योऽत्र देयमन्नं सदैव तत् ॥
श्वभ्यश्च श्वपचेभ्यश्च पतितेभ्यस्तथैव च ।
कृमिकीटपतङ्गेभ्यो देयमन्नं सदैव हि ॥
अन्नं हि जीवितं लोके प्राणाश्चान्ननिबन्धनाः ।
अन्नदः प्राणदो लोके सर्वदश्च तथाऽन्नदः ॥
भुक्त्वा तथा च यस्यान्नं सन्ततिः स्याद्द्विजोत्तमाः ।
ज्ञातव्यं ब्राह्मणश्रेष्ठा यस्यान्नं तस्य सन्ततिः ॥
दातव्यं सर्ववर्णेभ्यो भोक्तव्यं ब्राह्मणस्य तु ।
यस्यान्नेनोदरस्थेन ब्राह्मणो म्रियते द्विजाः ॥
तां तु योनिमवाप्नोति नात्र कार्या विचारणा ।
भक्षदः स्वर्गमाप्नोति शक्रलोकं तु भोज्यदः ॥
लेह्यदोऽप्सरसां लोकं वसूनामपि चोष्यदः ।

वारुणं लोकमाप्नोति तथा पानप्रदो नरः ॥
पानकानि सुगन्धीनि शीतलानि प्रयच्छति ।
सर्वकामसमृद्धश्च नात्र कार्या विचारणा ॥
परमान्नप्रदानेन तृप्तिर्भवति शाश्वती ।
पिपासया न म्रियते गवां लोके महीयते ॥
गुडप्रदस्तथाऽऽरोग्यं सर्वान् कामान् मधुप्रदः ।
घृतदो जीवितं दीर्घमारोग्यं तैलदस्तथा ॥
सर्वान् कामानवाप्नोति लवणं यः प्रयच्छति ।
सक्तुदस्तृप्तिमाप्नोति* सिकतादस्तथा श्रियम् ॥
अकीर्तितानामन्येषां दानात् स्वर्गमवाप्नुयात् ।

अथ भगवतीपुराणे ।

लवणं च घृतं तैलं गुडं हिङ्गु च भारत ।
कटुकन्दं जीरकं च पत्रं शाकं च शोभनम् ॥

दत्त्वा सुखी स्यादिति शेषः ।

पद्मपुराणे ।

गुडमिक्षुरसं चैव लवणं व्यञ्जनानि च ।
सुरभीणि च पानानि दत्त्वाऽत्यन्तं सुखी भवेत् ॥

आह यमः ।

गोरसानां प्रदानेन तृप्तिमाप्नोत्यनुत्तमाम् ।
घृतप्रदानेन तथा दीर्घं विन्दति जीवितम् ॥

लिङ्गपुराणे ।

लवणस्य च दातारस्तिलानां सर्पिषां तथा ।

---

* सितादः काममीप्सितम् । फाणितस्य प्रदानेन परां तृप्तिमवाप्नुयात् । इति न० प्र० पु० पा० ।

तेजस्विनोऽभिजायन्ते भोगिनश्चिरजीविनः ॥

ब्रह्माण्डपुराणे ।

रक्तं मांस वसा शुक्रं क्रमादन्नात् प्रवर्त्तते ।
शुक्राद्भवन्ति भूतानि तस्मादन्नमयं जगत् ॥
हेमरत्नाश्वनागेन्द्रचन्द्रस्रक्चन्दनादिभिः ।
समस्तैरपि संप्राप्तैर्न रमन्ते बुभुक्षिताः ॥
नास्ति क्षुधासमं दुःखं नास्ति रोगः क्षुधासमः ।
नास्त्याहारसमं सौख्यं नास्ति क्रोधसमो रिपुः ॥
अत एव महत् पुण्यमन्नदानप्रदानतः ।
यतः क्षुधाग्निसन्तप्ता म्रियन्ते सर्वदेहिनः ॥
त्रैलोक्ये यानि रत्नानि भोगस्त्रीवाहनानि च ।
अन्नदानप्रदः सर्वमिहामुत्र समश्नुते ॥
यस्यान्नपानपुष्टाङ्गः कुरुते पुण्यसञ्चयम् ।
अन्नप्रदातुस्तस्यार्धं कर्त्तुश्चार्धं न संशयः ॥

ब्रह्मवैवर्त्ते ।

यस्य ह्यन्नमुपाश्नन्ति ब्राह्मणानां शतं समाः ।
हृष्टेन मनसा दत्तं न स तिर्यग्गतिर्भवेत् ॥
ब्राह्मणानां सहस्राणि दश भोज्या नरर्षभ ।
नरोऽधर्मात् प्रमुच्येत पापेष्वपि रतः सदा ॥
भोजयित्वा दशशतं नरो ब्रह्मविदां नृप ।
न्यायविद्धर्मविदुषां स्मृतिभाष्यविदां तथा ॥
न याति नरकं घोरं संसारांश्च न सेवते ।
यजेद्ब्राह्मणपूर्वं तु भोक्तुमन्नं सदा गृही ॥
अवन्ध्यं दिवसं कुर्यादन्नदानेन मानवः ।

भैक्ष्येणान्नं समाहृत्य विप्रेभ्यो यः प्रयच्छति ॥
स्वाध्यायनिरतो विप्रो दत्त्वेह सुखमेधते ।
सर्वावस्थं मनुष्येण न्यायेनान्नमुपार्जितम् ॥
कार्यं पात्रगतं नित्यमन्नं हि परमा गतिः ।

तथा ।

कौमुदे शुक्लपक्षे तु योऽन्नदानं करोत्यतः ।
स संतरति दुर्गाणि प्रेत्य चानन्त्यमश्नुते ॥

नन्दिपुराणे ।

अन्नाद्भूतानि जातानि देवा ह्यन्नाद्यकाङ्क्षिणः ।
न तस्य पात्रादिविधिर्विना श्राद्धं प्रकीर्त्तितम् ॥

तथा ।

अपि कीटपतङ्गानां शुनां चाण्डालयोनीनाम् ।
दत्त्वाऽन्नं लोकमाप्नोति प्राजापत्यं समासतः ॥
बान्धवेभ्योऽतिथिभ्योऽन्नं *मित्रेभ्यश्च प्रयच्छताम् ।
दीनान्धकृपणानां च स्वर्गः स्यादन्नदायिनाम् ॥
ग्रासमात्रं नरो दत्त्वा भूतानामन्नगृध्नवे ।
स्वर्गे वसेत् समानां तु शतं भोगैर्मनोरमैः ॥
ग्रासे ग्रासे फलं ह्येतद्विधिवत् परिकीर्त्तितम् ।
एतद्देवाय ते प्रोक्तं द्विगुणं पुण्यगौरवम् ॥
अन्नं विना कृशान्तस्य दत्त्वाऽन्नं देशकालतः ।
फलं पञ्चगुणं प्रोक्तं सर्वभावसमन्वितम् ॥

राजसादिभावसमन्वितमित्यर्थः ।

---

* यतिभ्योऽन्नमिति न॰ प्र॰ पु॰ पा॰ ।

देवतानां तु यो दद्यादन्नाद्यं श्रद्धयाऽन्वितः ।
सिक्थात् सिक्थाद्वसेल्लक्षसमानममरैः सह ॥
एतद्दशगुणं पुण्यमन्ने व्यञ्जनसंयुते ।
यथेष्टदेवतादत्तादेतत् पुण्यं प्रकीर्त्तितम् ॥
यो दद्याद्ब्राह्मणेऽन्नानि तस्य द्विगुणितं फलम् ।
तस्माद्विष्णौ च दत्त्वाऽन्नं द्विगुणं फलमश्नुते ॥
रुद्रायान्नप्रदानेन फलमेतच्चतुर्गुणम् ।
श्रद्धाकालसमायोगाद्व्यञ्जनानां च योगतः ॥
शतसङ्ख्यं भवेत् पुण्यं सम्यगन्नप्रदायिनाम् ।

लघुहारीतः ।

उपपन्नं यथा ह्यन्नं भुञ्जते समुपस्थिते ।
आपीतरसमुच्छिष्टं न दद्यान्नैव होमयेत् ॥

व्यासः ।

यस्त्वेकपङ्क्त्यां विषमं ददाति स्नेहाद्भयाद्वा यदि वाऽर्थहेतोः ।
देवैश्च दृष्टं मुनिभिश्च गीतं तां ब्रह्महत्यां मुनयो वदन्ति ॥

अत्रिः ।

अव्रताश्च ह्यमन्त्राश्च यत्र भैक्षचरा द्विजाः ।
तं ग्रामं दण्डयेद्राजा चौरभक्तिप्रदो हि सः ॥
अधीत्य चतुरो वेदान् सर्वशास्त्रार्थतत्त्ववित् ।
नरेन्द्रभवने भुक्त्वा विष्ठायां जायते कृमिः ॥
राजान्नं हरते तेजः शूद्रान्नं ब्रह्मवर्चसम् ।
स्वसुतान्नं च* यो भुङ्क्ते स भुङ्क्ते पृथवीमलम्† ॥

---

* आयुः सुवर्णकारान्नं यशश्चर्मविकर्त्तिन इति मनुसंहितायां पाठः ।
† पानीयं पावनं महदिति वा पाठः ।

देवलः ।

अघृतं भोजयन् विप्रं स्वगृहे सति सर्पिषि ।
परत्र निरयं घोरं गृहस्थः प्रतिपद्यते ॥
मृष्टमन्नं स्वयं भुक्त्वा पश्चात् कदशनं लघु ।
ब्राह्मणान् भोजयेन्मूर्खो निरये चिरमावसेत् ॥
यो मृष्टमन्नं द्विजपुङ्गवानां दद्यात् सुराणामथ वाऽतिथिभ्यः ।
स पुत्रपौत्रैरभिवर्द्धमानः समानतां वृत्ररिपोरुपैति ॥

इति पक्वान्नदानविधिः ।

अथामान्नदानम् । विष्णुधर्मोत्तरे । हंस उवाच ।

धान्यानामुत्तमं दानं कथितं द्विजपुङ्गवैः ।
धान्येभ्योऽपि परं धान्यं रक्तशालिः प्रकीर्त्तितम् ॥
रक्तशालिं नरो दत्त्वा सूर्यलोके महीयते ।
दत्त्वा तथा सुगन्धांश्च गन्धर्वैः सह मोदते ॥
कलमानां प्रदानेन शक्रलोके महीयते ।
महाशालेः प्रदानेन वसूनां लोकमाप्नुयात् ॥
कृष्णशालिं तथा दत्त्वा अलकायां प्रमोदते ।
व्रीहीनां सस्यदानानां दानात् स्वर्गमवाप्नुयात् ॥
यवप्रदानेन नरः शक्रलोके महीयते ।
तथा गोधूमदानेन वसूनां लोकमाप्नुयात् ॥
प्रियो भवति लोकस्य प्रियङ्गुं यः प्रयच्छति ।
ददाति यस्तु श्यामाकं प्रीयन्ते तस्य देवताः ॥
अन्येषां शूकधान्यानां प्रदाने निरतो नरः ।
स्वर्गलोकमवाप्नोति नात्र कार्या विचारणा ॥
मुद्गदः शक्रलोकं तु यमलोकं तु माषदः ।

यथेष्टं लोकमाप्नोति तथा विप्रस्तिलप्रदः ॥

षष्टिकान्नप्रदानेन लोकं नैर्ऋतिकं लभेत् ।

सचीनचणकं दत्त्वा लोकं वारुणमाप्नुयात् ॥

वायव्यं च मसूराणि राजमाषाणि धानदम् ।

अन्येषां शमिधान्यानां दानात् स्वर्गमवाप्नुयात् ॥

इक्षुनृद्धीकयोर्दानात् परं सौभाग्यमाप्नुयात् ।

पक्कान्नदानात् फलदं नृलोके शुष्कान्नमुक्तं हि तदाप्तिरस्मात् ।

यजन्ति यज्ञैर्हि ततो द्विजेन्द्रास्तस्मात् तु तत् पुण्यतमं प्रदिष्टम् ॥

इत्यामान्नदानविधिः ।

अथोदकदानम् । तत्र मनुः ।

सलिलं यः प्रयच्छेत जीवानां प्राणधारणम् ।

शीतलं ग्रीष्मकाले तु तस्य पुण्यफलं शृणु ॥

कपिलाकोटिदानस्य यत् पुण्यं हि विधीयते ।

तत् पुण्यफलमाप्नोति पानीयं यः प्रयच्छति ॥

पूर्णचन्द्रप्रकाशेन द्यां विमानेन रोहति ।

सौरपुराणे ।

पानीयदानं परमं सर्वदानाधिकं स्मृतम् ।

तस्मात् पानीयमानीय देयं धर्मविदा सदा ॥

वेदव्यासः ।

दुर्लभं सलिलं तात विशेषेण परत्र वै ।

पानीयस्य प्रदानेन तृप्तिर्भवति शाश्वती ॥

भविष्यत्पुराणे ।

पानीयं प्राणिनां प्राणास्तत्र यत् तेन दीयताम् ।

सर्वेषामेव दानानामेतदेवाधिकं यतः ॥

तथा ।

ग्रीष्मे चैव वसन्ते च पानीयं यः प्रयच्छति ।
वक्तुं जिह्वासहस्रेण तस्य पुण्यं न शक्यते ॥

पद्मपुराणे ।

सुगन्धाः शीतलाश्चापो रसैर्दिव्यैः समन्विताः ।
यः प्रयच्छति विप्रेभ्यस्तस्य दानफलं शृणु ॥
विमानं सूर्यसङ्काशमप्सरोगणसेवितम् ।
सोऽधिरुह्य दिवं याति वरुणस्य सलोकताम् ॥

नन्दिपुराणे ।

योऽपि कश्चित् तृषार्त्ताय जलपानं प्रयच्छति ।
स नित्यतृप्तो वसति स्वर्गे युगशतं नरः ॥

महाभारते ।

अन्नं हि सर्वदानानामधिकं मनुरब्रवीत् ।
अन्नाच्चापि प्रभवति पानीयं कुरुसत्तम ॥
नीरेण हि विना तात न किञ्चित् संप्रवर्त्तते ।
नीरजातश्च भगवान् सोमो ग्रहगणेश्वरः ॥
अमृतं वसुधा चैव स्वाहा चाथ स्वधा तथा ।
अन्नौषध्यो महाराज वीरुधश्च जलोद्भवाः ॥
अतः प्राणभृतां प्राणाः सम्भवन्ति विशां पते ।
देवानाममृतं ह्यन्नं नागानां वसुधा तथा ॥
पितॄणां च स्वधा प्रोक्ता पशूनां चापि वीरुधः ।
अन्नमेव मनुष्याणां प्राणानाहुर्मनीषिणः ॥

तच्च सर्वं नरव्याघ्र पानीयात् संप्रवर्त्तते ।
तस्मात् पानीयदानाद्धि न परं विद्यते शिवम् ॥
तच्च दद्यान्नरो नित्यं य इच्छेद्भूतिमात्मनः ।
धन्यं यशस्यमायुष्यं जलदानं विशां पते ॥
शत्रूँश्चाप्यधि* कौन्तेय स्वर्गे तिष्ठति तोयदः ।
सर्वान् कामानवाप्नोति कीर्त्तिमेवेह शाश्वतीम् ॥
प्रेत्य चानन्त्यमाप्नोति पापेभ्यश्च प्रमुच्यते ।
तोयदो मनुजव्याघ्र स्वर्गं गत्वा महाद्युते ॥
अक्षयान् समवाप्नोति लोकानित्यब्रवीन्मनुः ।

विष्णुधर्मोत्तरे ।

पानीयमेव सकलं त्रैलोक्यं सचराचरम् ।
विकारः सलिलस्येदं स्थावरं जङ्गमं तथा ॥
पानीयेन विना वृत्तिर्लोके नास्तीह कर्हिचित् ।
कृमिकीटपतङ्गानां जलमेव परायणम् ॥
यत्रोदकं तत्र सुराः सर्वे एव प्रतिष्ठिताः ।
यत्रोदकं तत्र तथा ऋषयश्च महाव्रताः ॥
दुर्लभं तच्च लोकानां परलोके द्विजोत्तमाः ।

गारुडपुराणे ।

मूल्येन कृत्वा धर्मार्थं जलदानं प्रयच्छति ।
प्रयाति चन्द्रसालोक्यं शुभमालांशुकावृतः ॥
क्षीरकुल्यस्तमायान्ति तथा यान्ति मधुस्रवाः ।
घृतदध्युदकास्तस्य समुद्रा वशवर्त्तिनः ॥
दिनानि वहु जीवन्ति अन्नेन रहिताः किल ।

---

* शत्रूँश्चाप्यधि—इति न॰ प्र॰ पु॰ पा॰ ।

न हि तोयविहीनस्तु दिनमेकं हि जीवति ॥

सर्वप्रदो नरव्याघ्र जलदानात् प्रकीर्त्तितः ।

उदके सर्ववीजानि इत्येवं गैाणिकी स्मृतिः ॥

स्कन्दपुराणे ।

त्रयाणामपि लोकानामुदकं जीवनं स्मृतम् ।

पवित्रममृतं तस्मात् तद्देयं पुण्यमिच्छता ॥

अथ करपत्रिकादिदानानि । देवलः ।

सतोयां पथिके विप्रे यो दद्यात् करपत्रिकाम् ।

फलं स कूपखातस्य नूनमाप्नोति मानवः ॥

महाभारते ।

बृहस्पतेर्भगवतः पौष्णस्यैव भगस्य च ।

अश्विनोश्चैव वह्नेश्च प्रीतिर्भवति भारत ॥

परमं भेषजं होतुर्यज्ञानामेतदुत्तमम् ।

पिपासया न म्रियते स्वोपच्छन्दश्च जायते ॥

न प्राप्नुयाच्च व्यसनं करकान् यः प्रयच्छति ।

प्रदद्याद् ब्राह्मणाग्रेभ्यः करकान् श्रद्धया युतः ॥

उपस्पर्शनषड्भागं लभते पुरुषः सदा ।

कात्यायनः ।

भोजयित्वा द्विजानन्नं करकान् यः प्रयच्छति ।

सुशीतसलिलोपेतान् सोऽपि सद्गतिमाप्नुयात् ॥

आदित्यपुराणे ।

यो ददाति घटीपात्रं कुण्डिकां करकाँस्तथा ।

तृषार्त्तस्य तथा धर्मं लभते शीतलं जलम् ॥

स्कन्दपुराणे ।

योघटं पयसा पूर्णं हेमपात्रनियोजितम् ।
संपूज्य वस्त्रयुग्मेन दद्यात् स्वर्गं व्रजेद्ध्रुवम् ॥

अथ धर्मघटदानम् । आह विष्णुः ।

शीतलेन सुगन्धेन वारिणा पूरितं घटम् ।
शुक्लचन्दनदिग्धाङ्गं पुष्पदामोपशोभितम् ॥
दध्योदनयुतं कुर्याच्छरावं तस्य चोपरि ।
उपानच्छत्रसंयुक्तं धर्माख्यं कल्पयेद्घटम् ॥
पुष्पाक्षतं गृहीत्वा तु इमं मन्त्रमुदीरयेत् ।
ॐ नमो विष्णुरूपाय नमः सागरसम्भव ॥
अपां पूर्णोद्धरास्माँस्त्वं दुःखसंसारसागरात् ।
उदकुम्भो मया दत्तो ग्रीष्मे काले दिने दिने ॥
उदकुम्भप्रदानेन प्रीयतां मधुसूदनः ।

भविष्योत्तरे ।

प्रत्यहं धर्मघटको वस्त्रसंवेष्टिताननः ।
ब्राह्मणस्य गृहे नेयः शीतामलजलः शुचिः ॥
वसन्तग्रीष्मयोर्मध्ये यः पानीयं प्रयच्छति ।
पले पले सुवर्णस्य फलमाप्नोति मानवः ॥
मार्गशीर्षात् समारभ्य उदकुम्भं तु यः क्षिपेत् ।
दिने दिने सहस्रस्य गवां पुण्यफलं लभेत् ॥
तस्यैवोद्यापनं कार्यं मासि मासि नरोत्तम ।
मण्डकावेष्टकाभिश्च पक्वान्नैः सार्वकामिकैः ॥
उद्दिश्य शङ्करं विष्णुं ब्रह्माणमथ वा पितॄन् ।
सतिलं प्रोक्षयित्वा तु मन्त्रेणानेन मानवः ॥

एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः ।
अस्य प्रदानात् सततं* मम सन्तु मनोरथाः ॥
अनेन विधिना यस्तु धर्मकुम्भं प्रयच्छति ।
वसन्ते ग्रीष्मसमये प्रपादानफलं लभेत् ॥
प्रपादानफलं सोऽपि प्राप्नोतीह न संशयः ।

## अथाश्वत्थसेचनम् । भविष्योत्तरे ।

उदकुम्भप्रदानेऽपि ह्यशक्तो यः पुमान् भवेत् ।
तेनाश्वत्थतरोर्मूलं सेच्यं नित्यं जितात्मना† ॥
सर्वपापप्रशमनं सर्वदुःखप्रणाशनम् ।
सर्वरोगप्रशमनं नित्यं सन्ततिवर्धनम् ॥
अश्वत्थरूपो भगवान् प्रीयतां मे जनार्दनः ।
इत्युच्चार्य नमस्कृत्य प्रत्यहं पापनाशनम् ॥
यः करोति तरोर्मूले सेकं मासचतुष्टयम् ।
सोऽपि तत् फलमाप्नोति श्रुतिरेषा सनातनी ॥

## अथ गलन्तिकादानम् । तथा ।

अथान्यदपि वक्ष्यामि जलदानविधिं परम् ।
वसन्तसमयं ज्ञात्वा गत्वा देवालयं परम् ॥
तत्र स्वायम्भुवं लिङ्गमार्षं वा देवपूजितम् ।
तस्य गर्भगृहान्तस्थं घटं तोयेन सम्भृतम् ॥
कुर्यात् सुरभिगन्धैश्च वासितं वस्त्रगालितम् ।
स्रवन्तं च दिवारात्रौ तज्जलं लिङ्गमूर्धनि ॥

---

* सफला इति क्वचित् पाठः ।

† नित्यं सिञ्चन्ति मानवा इति क्वचित् पाठः ।

एवं यः कारयेत् कुम्भं श्रद्धाभक्तिसमन्वितः ।
शिवस्य विष्णोरर्कस्य इष्टदेवस्य वा पुनः ॥
स्रवन्तं कारयेत् कुम्भमच्छिन्नं देवमस्तके ।
अनेन विधिना दत्त्वा नरो मासचतुष्टयम् ॥
ततः कर्कटके प्राप्ते देवं पञ्चामृतेन तु ।
संस्नाप्य पूजयेद्गन्धैर्नैवेद्यैश्च मनोरमैः ॥
प्रणिपत्य महेशानं मन्त्रमेतमुदीरयेत् ।
ॐ नमः शङ्करः शम्भुर्भवो धाता शिवो हरः ॥
प्रीयतां मे महादेव जलकुम्भप्रदानतः ।
एवं संकल्प्य दाता च पश्चादागत्य वेश्मनि ॥
स शक्त्या शिवभक्ताँश्च विप्रमुख्याँश्च भोजयेत् ।
एवं यः कुरुते ग्रीष्मे जलदानक्रियां हरे ॥
यावद्बिन्दूनि लिङ्गस्य पतितानि न संशयः ।
स वसेच्छाङ्करे लोके तावत्कोटीर्नरेश्वर ॥

अथ मणिकदानम् । तत्र देवलः ।

ग्रीष्मप्रवेशे मणिकं ददाति द्विजसद्मनि ।
योऽम्बुपूरितमाप्नोति स तडागकृतः फलम् ॥

भविष्योत्तरे । युधिष्ठिर उवाच ।

मणिकस्य कथं दानं कस्मिन् काले च दीयते ।
किं फलं तस्य दानेन तदाचक्ष्व जनार्दन ॥

श्रीकृष्ण उवाच ।

प्रपां दातुमशक्तेन विशेषधर्ममीप्सता ।
दानं तेन प्रकर्त्तव्यं मणिकस्य युधिष्ठिर ॥

वैशाखस्य तृतीयायां पौर्णमास्यां विशेषतः ।
वसन्ते ग्रीष्मकाले च मणिकं तत्र दीयते ॥
चत्वारिंशद्घटैः श्रेष्ठं त्रिंशद्भिर्मध्यमं स्मृतम् ।
विंशत्या कन्यसं प्रोक्तमतो हीनं न कारयेत् ॥
जलपूर्णं ततः कुर्यात् सहिरण्यं स्वशक्तितः ।
शुक्लचन्दनदिग्धाङ्गं पुष्पदामोपशोभितम् ॥
वासोभिः संपरिच्छाद्य सान्नभाण्डकृतोपरि ।
तस्योपरि न्यसेद्देवं वरुणं हेमनिर्मितम् ॥
सदक्षिणं तु विप्राय दद्यात् संचिन्त्य केशवम् ।
आपो नारा इति प्रोक्ता आदित्यवरुणौ यमः ॥
मणिकं पृथिवीसर्वदातुः शान्तिं प्रयच्छतु ।

पूजामन्त्रः ।

ॐ आपः पवित्रं लोकानामप्सु शेते जनार्दनः ।
मणिकाप्सु प्रदानेन प्रीयतां जलशायकः ॥

दानमन्त्रः ।

अनेन विधिना दत्त्वा मणिकं द्विजपुङ्गवे ।
दाता यत् फलमाप्नोति तच्छृणुष्व नरोत्तम ॥
वियोगो नैव तस्यासीत् पुत्रभ्रातृधनेषु च ।
गृहसंभारवैकल्यं न प्राप्नोति नरः क चित् ॥
या स्त्री ददाति मणिकं तस्य पुण्यफलं शृणु ।
अपुत्रा लभते पुत्रं दुर्भगा सुभगा भवेत् ॥
विधवा सप्त जन्मानि न जायेत मणिप्रदा ।
गृहदानफलं प्राप्य विष्णुलोके महीयते ॥
आश्वयुज्यां नवम्यां च शुक्लायां भरतर्षभ ।

संरूढपुष्पके दिव्ये आखण्डलपुरे वसेत् ॥

इति मणिकदानम् ।

अथ प्रपादानम् । महाभारते ।

प्रपाश्च कार्या दानार्थं नित्यं तु द्विजसत्तम ।
भुक्तेभ्यश्च प्रदीयन्ते पानीयानि विशेषतः ॥
निदाघकाले पानीयं यस्य तिष्ठत्यवारितम् ।
स दुर्गविषमं कृच्छ्रं न कदा चिदवाप्नुते ॥

यमः ।

कूपारामप्रपाकारी तथा वृक्षस्य रोपकः ।
कन्याप्रदः सेतुकारी स्वर्गमाप्नोत्यसंशयम् ॥

तथा ।

येषां तडागानि प्रपाः शुभाश्चारामाश्च कूपाश्च प्रतिश्रयाश्च ।
अन्नप्रदानं मधुरा च वाणी तेषामयं चैव परश्च लोकः ॥

लिङ्गपुराणे ।

सर्वात्मना च सततं देयं पानीयमोदनम् ।
एतत् सुदुर्लभतरं परलोके नराधिप ॥
तस्मात् कूपाश्च वाप्यश्च तडागानि प्रपास्तथा ।
कर्त्तव्यानि यथा शक्त्या नरैरात्महितैषिभिः ॥
ग्रामे वा नगरे वाऽपि मार्गे वा तोयवर्जिते ।
यः प्रपां कारयेद्रम्यां स पुण्यां गतिमाप्नुयात् ॥

विष्णुधर्मोत्तरे ।

प्रपां पथि शुभां कृत्वा नाकलोके महीयते ।
प्रपास्थानं शुभं कृत्वा स्थानमाप्नोति शाश्वतम् ॥

तस्य स्थानस्य संस्कारात् फलवृद्धिः प्रकीर्त्तिता ।
तत्रोपलेपनं कृत्वा सर्वपापैः प्रमुच्यते ॥
रज्जुं दत्त्वा प्रपास्थाने गोदो भवति मानवः ।
वारिधानीं तथा दत्त्वा तदेव फलमाप्नुयात् ॥
कुम्भप्रदानाद्भवति सदा पूर्णमनोरथः ।
प्रपायां च तथा दत्त्वा पुरुषं परिचारकम् ॥
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ।
वर्धमानानि यो दद्यात् प्रपायां द्विजसत्तमाः ॥
त्रिविधां वृद्धिमाप्नोति तेजसा यशसा श्रिया ।
लवणस्य प्रदानेन रसान् प्राप्नोति शाश्वतान् ॥
तत्र हरितदानेन गवां लोकमवाप्नुयात् ।
फलप्रदानेन तथा वह्निष्टोमफलं लभेत् ॥
सक्तूनां च प्रदानेन गोशतस्य फलं नरः ।
गोरसानां प्रदानेन गोलोकं समवाप्नुयात् ॥
शय्याश्च विविधाः कृत्वा प्रपायामासनानि च ।
स्वर्गलोकमवाप्नोति वसूनां नात्र संशयः ॥
तत्र वह्निं तथा कृत्वा शीतत्राणाय मानवः ।
कायाग्निदीप्तिप्राकाश्यं सौभाग्यं च तथाऽऽप्नुयात् ॥
इन्धनानां प्रदानेन रिपुभिर्नाभिभूयते ।
तत्रोपयोगिभाण्डानां दानात् स्वर्गमवाप्नुयात् ॥
इन्द्रलोकमवाप्नोति ताम्बूलादिप्रदानतः ।

भविष्योत्तरे । युधिष्ठिर उवाच ।

प्रपादानस्य माहात्म्यं वद देवेश किं चन ।
कथं देया कदा देया दानं तस्याश्च किं फलम् ॥

श्रीकृष्ण उवाच ।

अतीते फाल्गुने मासि प्राप्ते चैव महोत्सवे ।
पुण्येऽह्नि विप्रकथिते ग्रहचन्द्रबलान्विते ॥
मण्डपं कारयेद्विद्वान् घनच्छायं मनोरमम् ।
पुरस्य मध्ये पथि वा चैत्यवृक्षतलेऽथ वा ॥
सुशीतलतलं रम्यं विचित्रासनसंयुतम् ।
तन्मध्ये स्थापयेद्भव्यान् मणिकुम्भाँश्च शोभनान् ॥
आकालमूलान् करकान् वस्त्रैरावेष्टिताननान् ।
ब्राह्मणे शीलसम्पन्ने भृतिं दत्त्वा यथोदिताम् ॥
प्रपापालः प्रकर्त्तव्यो बहुपुत्रपरिच्छदः ।
पानीयपानादश्रान्तान् यः कारयति मानवान् ॥
एवंविधां प्रपां कृत्वा शुभेऽह्नि विधिपूर्वकम् ।
यथाशक्त्या नरश्रेष्ठ प्रारम्भे भोजयेद्द्विजान् ॥
ततश्चोत्सर्जयेद्विद्वान् मन्त्रेणानेन मानवः ।
प्रपेयं सर्वसामान्या भूतेभ्यः प्रतिपादिता ॥
अस्याः प्रदानात् पितरस्तृप्यन्तु च पितामहाः ।

इदमिह दावाक्यम् ।

अद्यादि मासचतुष्टयं यावत् त्रीन् वा द्वौ वा एकमेकं वा इमां प्रपां पानीयान्नव्यञ्जनादिसहितां त्रिंशद्वर्षकोटिपरिमितकालभोग्येन्द्रलोकप्राप्तिकामो मर्त्त्यलोके चतुर्वेदब्राह्मणत्वकामः सर्वभूतेभ्योऽहमुत्सृजामि—इति ।

अनिवारितं ततो देयं जलं मासचतुष्टयम् ।
त्रिपक्षं वा महाराज जीवानां जीवनं परम् ॥
गन्धाढ्यं सुरसं शीतं शोभने राजते स्थितम् ।
प्रदद्यादप्रतिहतं मुखं चानवलोकयन् ॥

प्रत्यहं कारयेत् तस्यां भोजनं शक्तितो द्विजाः ।
अनेन विधिना यस्तु ग्रीष्मे तापप्रणाशनम् ॥
पानीयमुत्तमं दद्यात् तस्य पुण्यफलं शृणु ।
कपिलाशतदानस्य सम्यग्दत्तस्य यत् फलम् ॥
तत्पुण्यफलमाप्नोति सर्वदेवैः सुपूजितः ।
पूर्णचन्द्रप्रतीकाशं विमानमधिरुह्य सः ॥
याति देवेन्द्रनगरं पूज्यमानोऽप्सरोगणैः ।
त्रिंशत्कोट्यो हि वर्षाणां यक्षगन्धर्वसेवितम् ॥
पुण्यक्षयादिहागत्य चतुर्वेदो द्विजो भवेत् ।
ततः परं पदं याति पुनरावृत्तिदुर्लभम् ॥

सुस्वादुशीतसलिला क्लमनाशनी च
प्रान्ते पुरस्य पथि पार्थ सराजभूमौ ।
यस्य प्रपा भवति सर्वजनोपभोग्या
धर्मोत्तरः स खलु जीवति जीवलोके ॥

इति प्रपादानविधिः ।

अथ जलाशयनिर्माणम् । तत्र कूपस्य तावदुच्यते । विष्णुधर्मोत्तरे ।

उदकेन विना वृत्तिर्नास्ति लोकद्वये सदा ।
तस्माज्जलाशयाः कार्याः पुरुषेण विपश्चिता ॥
अग्निष्टोमसमः कूपः सोऽश्वमेधसमो मरौ ।
कूपः प्रवृत्तपानीयः सर्वं हरति दुष्कृतम् ॥
कूपकृत् स्वर्गमासाद्य सर्वान् भोगानुपाश्नुते ।
तत्रापि भोगनैपुण्यं स्थानाभ्यासात् प्रकीर्त्तितम् ॥

स्कन्दपुराणे ।

अवटं यो नरः कुर्यादपां पूर्णं सुशोभनम् ।
दद्यात् सुब्राह्मणेभ्यस्तं भोजयित्वा यथाविधि ॥
अष्टाभिः सुविचित्राभिः पताकाभिरलङ्कृतम् ।
पितॄंस्तरेत पञ्चाशत् तं* दत्त्वा च नरोत्तम ॥
यात्यप्सरःसुगीतेन वरुणस्य सलोकताम् ।

नन्दिपुराणे ।

यो वापीमथ वा कूपं देशे तोयविवर्जिते ।
खानयेत् स नरो याति स्वर्गं प्रेत्य शतं समाः ॥
देवैरेकत्वमतुलं तृष्णाक्षुद्वर्जितः सदा ।

आदित्यपुराणे ।

सेतुबन्धरता ये च तीर्थे शौचरताश्च ये ।
तडागकूपकर्त्तारो मुच्यन्ते ते तृषाभयात् ॥

विष्णुः ।

अथ कूपकर्त्तुस्तत्प्रवृत्ते पानीये दुष्कृतार्थं विनश्यति । तडागकृन्नित्यतृप्तो वारुणं लोकमश्नुते जलप्रदः सदा तृप्तो भवति ।

'तत्प्रवृत्ते' तस्मात् कूपात् प्रवृत्ते ।

तथा ।

कूपारामतडागेषु देवतायतनेषु च ।
पुनः संस्कारकर्त्ता च लभते मौलिकं फलम् ॥

देवीपुराणे ।

कूपारामं यथा शस्तं कर्त्ता लोके प्रजायते ।

---

* पश्चात् तमिति क्व चित् पाठः ।

तथा कुर्यात् सुरश्रेष्ठ यथा शोभायुतं भवेत् ॥
पूर्वमाश्रित्य कर्त्तव्यं तस्योत्तरपथेऽपि वा ।
न पूर्वव्यत्ययं कुर्यान्न च देवालयाद्गृहात् ॥
कृतं भयप्रदं लोके तथा चाग्निभयं जलम् ।
वायव्यं वाऽपि देवस्य भयदं जायते कृतम् ॥

आह गर्गः ।

कुर्यात् पञ्चकरादूर्ध्वं पञ्चविंशत्करावधि ।
कूपं वृत्तायतं प्राज्ञः सर्वभूतसुखावहम् ॥

इति कूपनिर्माणविधिः ।

अथ वापीनिर्माणम् । विष्णुधर्मोत्तरे ।

यमलोकं प्रपश्यन्ति न जलाशयकारिणः ।
अतः कुर्यात् प्रयत्नेन सुरूपं भूप कुपकम् ॥
दशकूपसमा वापी तथा च परिकीर्त्तिता ।

देवीपुराणे ।

कूपः पञ्चकरादूर्ध्वं यावद्वर्गस्तदुद्भवः ।
वापी दण्डमयादूर्ध्वं दशवर्गान्नृपोत्तमैः ॥
कर्त्तव्या सर्वथोत्तारा द्वित्रिश्चैकमथापि वा ।
विन्यासं भद्रकं राज्ञो वृत्ता वा चायता तथा ॥
त्र्यस्रा वा चार्धचन्द्रा वा धनुश्चक्रसमाकृतिः ।
कर्त्तव्या द्रव्यसारेण गोपथा सर्वकामदा ॥
वेदाष्टमध्यगोत्सारा करसार्धा यथा भवेत् ।
कूपो वा शैलयष्टी वा देया नेमी यथा दृढा ॥
भवने काष्ठपाषाणैरूर्ध्वपीठससुच्छ्रया ।
सुबुद्धा तोरणोपेता गणनाथगृहान्विता ॥

नागयक्षगृहैर्देव्या भूषिता क्रीडिताकुला ।
वापी भद्रा सुरश्रेष्ठ सर्वकामप्रदा नृणाम् ॥
भद्रा पद्मा शुभा कान्ता विजया मङ्गला तथा ।
जया योक्तो भवेद्वापी नृपादीनां शुभावहा ॥
वृत्तायता चतुरस्रा वाप्यः साधारणा मताः ।
शेषाः काम्याधिकारेण कूपो वृत्तः शुभावहः ॥

नन्दिपुराणे ।

यो वापीमग्निसाक्ष्येण विधिवत् प्रतिपादयेत् ।
कोणेषूदककुम्भस्थान् समुद्रानर्च्य श्रद्धया ॥
चतुरश्चतुरन्ता तु तेन दत्ता मही भवेत् ।
तत्सन्निधौ द्विजानर्च्य विधिवत् पानभोजनैः ॥
स याति वारुणं लोकं दिव्यकामसमन्वितम् ।

अथ भद्रातडागनिर्माणम् । तत्र यमः ।

तडागे यस्य पानीयं सततं खलु तिष्ठति ।
स्वर्गलोकगतिस्तस्य नात्र कार्या विचारणा ॥
तडागकर्त्ता वसति स्वर्गे युगचतुष्टयम् ।
यत्र विप्रोऽथ गौरेका पायिनी सलिलं क चित् ॥
तडागं तादृशं कृत्वा स्वर्गे दशयुगान् वसेत् ।

महाभारते ।

देवा मनुष्याः पितरो गन्धर्वोरगराक्षसाः ।
स्थावराणि च भूतानि संश्रयन्ति जलाशयम् ॥
कुलं संतारयेत् सर्वं यस्य खाते जलाशये ।
गावः पिबन्ति सलिलं साधवश्च नराः सदा ॥

तडागे यस्य गावस्तु पिबन्ति तृषिता जलम् ।
मृगपक्षिमनुष्याश्च सोऽश्वमेधफलं लभेत् ॥
यत् पिबन्ति जलं तत्र स्नायन्ते विश्रमन्ति च ।
तडागदस्य तत् सर्वं प्रेत्यानन्त्याय कल्पते ॥

तथा ।

वर्षारात्रे तडागे तु सलिलं यस्य तिष्ठति ।
अग्निहोत्रफलं तस्येत्येवमाहुर्मनीषिणः ॥
वसन्तकाले पानीयं तडागे यस्य तिष्ठति ।
अतिरात्रस्य यज्ञस्य फलं स समुपाश्नुते ॥
निदाघकाले पानीयं तडागे यस्य तिष्ठति ।
वाजपेयसमं तस्य फलं महर्षयो विदुः ॥

विष्णुधर्मोत्तरे ।

कृत्वा तडागं च तथा वारुणं लोकमश्नुते ।
दशवर्षसहस्राणि कल्पमात्रं द्विजोत्तमाः ॥
ततोऽपि पुण्यमाप्नोति तडागकरणात् पथि ।
मरौ तडागे पानीयं यस्य तिष्ठति वै द्विजाः ॥
विमानेनार्कवर्णेन ब्रह्मलोकं स गच्छति ।
प्रावृट्कालेऽपि पानीयं तडागे यस्य तिष्ठति ॥
अग्निष्टोमफलं तस्य पुरुषस्य प्रकीर्त्तितम् ।
द्वादशाहफलं तस्य शिशिरे यस्य तिष्ठति ॥
वाजपेयफलं तस्य वसन्ते यस्य तिष्ठति ।
अश्वमेधफलं तस्य निदाघे यस्य तु द्विजाः ॥
सस्यानां सेचनार्थाय नदीवाहे तथा कृते ।
अन्नदः पानदश्चैव प्राणदश्च तथा भवेत् ॥

भागीरथस्य लोकानां समवाप्नोत्यसंशयः ।
पानीयशोधनं कृत्वा ह्रदे देवविनिर्मिते ॥
पुरुषः फलमाप्नोति दशगोदानजं द्विजाः ।
दारुपाषाणरचितं सुखसेव्यं जलाशयम् ॥
पुराणं मानवः कृत्वा नाकलोके महीयते ।
प्रणालकरणात् तत्र तृप्तिमाप्नोत्यनुत्तमाम् ॥
महत् पुण्यमवाप्नोति नाकलोके महीयते ।
स्वबाहुखातं यः कुर्यात् तडागं मतिमान्नरः ॥
सत् फलं नाप्नुते कर्त्ता राजसूयाश्वमेधयोः ।
परस्तु पुण्यं यः कुर्यात् किञ्चित् तस्य जलाशये ॥
पुण्यांशभागी भवति सोऽपि यस्य जलाशयः ।
प्राप्नोति तृप्तिं परमां मनुष्यो लोकाँस्तथाऽग्र्यान् सलिलाधिपस्य ।
जलाशयेऽल्पेऽपि कृते द्विजेन्द्रास्तस्मात् तु कार्यं सलिलं नृलोके ॥

## अथ द्वारीबन्धः । देवीपुराणे । ब्रह्मोवाच ।

देव्यः शस्ताः सुरश्रेष्ठ सर्वकामप्रसाधिकाः ।
तासां समुपभोगार्थं जलपात्राणि कारयेत् ॥
द्वारीबन्धादिकाः शक्र पुष्करिण्यन्तगाः शुभाः ।
तलखातं तडागं तु विपाली पैष्टिकी मता ॥
शोभाढ्या दीर्घिका प्रोक्ता चतुरस्रा तु वापिका ।
कूपः पादविहीनश्च सपादा तोरणान्विता ॥
शक्र सावन्धकरणा भिरन्ती भिण्टिका मता ।
गिरेरन्तर्गता द्वारी सस्फोटं हरकं तथा ॥
चक्रमर्दः सचलको ह्यर्गला चेति चान्तिमा ।
वज्रनागमधोगामि न सिद्ध्यन्ति कदा चन ॥

हेलात्मा च तथा चक्रं सुखसाध्या प्रकीर्त्तिता ।
उत्तमाधममध्या सा स्वल्पवृद्धा सुखग्रहा ॥
दैर्घ्योच्चबन्धगाथा तु साऽधमा परिकीर्त्तिता ।
शतसहस्रपर्यन्ता द्विदण्डाऽष्टद्विदण्डिका ॥
द्वारी श्रेष्ठाऽधमा तात बहुबन्धा च या भवेत् ।
सिकतापङ्कसंछिद्रा सप्रजा ? परिवर्जयेत् ॥
शुभाहे दैर्घ्यविस्तारं मित्वा बन्धं समाचरेत् ।
त्रिपञ्च चाष्टपर्यन्तः श्रेष्ठो बन्धः प्रकीर्त्तितः ॥
शतद्वयं शुभा पाली कराणां सप्तधाऽधमा ।
विस्तारः कथितः शास्त्रे पालीबन्धस्य पण्डितैः ॥
प्राकारकूटनलिकापुटकापृष्ठसञ्चयम् ।
पृष्ठमार्गे भवेद्बन्धमर्धचन्द्रं सकम्बलम् ॥
भूमेर्वा चलने शङ्के तत् स्थानं तोयसंयमम् ।
पाषाणघटितं बद्धमघटं विल्वकाष्ठजम् ॥
शिलास्तम्भनिबद्धं तु पृथुविस्तार्णसञ्चितम् ।
वज्रसन्धानसंयोगं समं वा दान्तकं परम् ॥
यथाकालसहं विद्वान् कुक्षिघातं तु कारयेत् ।
न मध्यहृदये खातं कम्बले वाऽपि दापयेत् ॥
महादोषकरं तत् तु द्वारीकर्त्तुर्भयप्रदम् ।
प्रयत्नः कुट्टने कार्यो मृत्तिकाकूर्चनादिके ॥
नलिकासु प्रदातव्यं लोहं मुशलघट्टितम् ।
समाप्तिपर्यंयं यावदुपलान् खातयेन्नृप ॥
अन्यथा न भवेद्गाढा स्रावदोषकरी भवेत् ।
पालीं तस्माद्दृढां कुर्यादग्रपृष्ठां न घट्टिताम् ॥

कूर्मवृषभमत्स्यादिहेमं चादौ विनिक्षिपेत् ।
प्रारम्भेऽस्या महापूजा श्येनकादिषु कारयेत् ॥
वारुणं नागदेवं तु यागमन्त्रजपं सदा ।
आनिष्पत्ति तु कर्त्तव्यमन्यथा भयदं भवेत् ॥
कर्त्तू राष्ट्रे जने शक्र द्वारी च न दृढा भवेत् ।
दृष्टार्थं प्रतिरूपाणि तथालिङ्गं विनायकम् ॥
शक्तिपूर्वाणि कुर्वीत महालक्ष्मीर्यथा पुरे ।
शुभदा भवने लोके तदा तोयं शिवं तथा ॥
आगमं तोरणं वापी कूपं वासमहोरगम् ।
द्वारीबन्धेषु कर्त्तव्यमुत्सर्गं गोप्रदानिकम् ॥
गोसहस्रं शुभं देयं महीं हेमं च दक्षिणाम् ।
श्येनकं नागयज्ञं च द्वारीबन्धे सदा शुभम् ॥
चतुस्तोरणसंयुक्तं पताकादिविभूषितम् ।
उत्सर्गं विहितं द्वार्यामन्यथा न शुभोदकम् ॥
शकटेन बलिर्देयः पशुपातपुरःसरम् ।
स्फुरन्तं नागहृदयं मन्त्रं तत्र प्रयोजयेत् ॥
संपूर्णं जायते सर्वं न्यूनाधिककृतं च यत् ।
फलं च हयमेधस्य यत् कृतस्य भवेदिह ॥
समग्रं लभते तस्य द्वारीबन्धे कृते सति ।
इह कीर्त्तिः शुभं सर्वं विशत्रुश्च भवेन्नृप ॥
द्वारीबन्धप्रकर्त्तारो नन्दन्ति प्रजया सह ।
तडागं नलकोपेतं परिदाहसमन्वितम् ॥
देवतारामसंयुक्तं सर्वकामप्रदायकम् ।
द्वारीबन्धे सुविस्तीर्णे परिदाहः शुभः सदा ॥

अन्यथा न भवेच्छक्र दृढत्वं पालिबन्धने ।
मध्ये पाल्याः सुविन्यासं जलमार्गं जलावहम् ॥
शैलं पक्वेष्टकं वाऽपि कार्यं क्रीडाय भूभृताम् ।
शालीक्षुरोपणे कुर्यान्नलकं शोभनं तथा ॥
सोपानपालिका कार्या विस्तीर्णा स्नानभोजने ।
शोभाधिक्येन संयुक्ता ऊर्ध्वे कार्या यथाविधि ॥
बन्धपृष्ठे दृढो बन्धः कार्यः कालसहस्तथा ।
एवं पुण्यमवाप्नोति स्थैर्यकालवशात् कृते ॥
वाजिमेधः क्रतुर्यद्वत् सोऽपि पुण्यप्रदो भवेत् ।
द्वारीबन्धस्तदा तात पुण्यदो जायते नृणाम् ॥
पुण्यात् स सिध्यते तच्च नन्दादीनां निवेशनात् ।
जयन्त्यादितडागानि अष्टौ पापहराणि च ॥
तेषु द्वारी भवेच्छ्रेष्ठा देवारामसमन्विता ।
कूपवापीजलोपेता पुत्रायुःकीर्त्तिदा सदा ॥
सा परिग्रहसंस्थानं भूपतेर्मानकल्पिता ।
पुरपत्तनदेवानां सिद्ध्यर्थं जायते शुभा ॥
सरित्सिद्धालयैर्या न विष्णुक्रान्ता वसुन्धरा ।
सौभाग्यद्वारीबन्धस्य जलवेष्टाष्टकभ्रमा ॥
पितृदेवमनुष्याणां तज्जलं त्वभिनन्दितम् ।
पावनं जायते शक्र अन्यथा निष्फलं मतम् ॥
अनुत्सर्गितद्वारीषु अपेयं सलिलं भवेत् ।
तस्माच्चौत्सर्गिकं पेयं वर्षासूत्सर्जनं शुभम् ॥
तत्पूर्वा चोत्तरे संस्था ऐशान्यां पूर्वगाऽपि वा ।
दक्षिणे चैव लिङ्गं तु शिवः स्याच्छुभदः सदा ॥

पश्चिमे सुभगा नाम्ना तां यथोत्तरतस्तथा ।
न कुर्युर्दारुये नैर्ऋत्यामाग्नेय्यां तु शुभार्थिनः ॥
प्रदक्षिणेन पूर्वस्यां रोपितव्यं शुभं सदा ।
अन्यथा कलहोद्वेगं मृत्युं वा लभते कृती ॥
तस्माद्राज्यायुःशुभदं पुत्रसन्ततिवर्धनम् ।
पश्चिमोत्तरपूर्वेण आरामं जायते कृतम् ॥
द्वारीबन्धं शिवोपेतं शक्तिभिर्नायकैर्युतम् ।
तदा कूपजलारामभूषितं सर्वकामदम् ॥
एवंविधं पुरोपेतं ब्रह्मसूर्यान्तकान्वितम् ।
कुर्याद्यः सुरशार्दूल स लभेदीप्सितं फलम् ॥
इह कीर्त्तिं शुभान् पुत्रान् परत्र परमां गतिम् ।
द्वारीबन्धात् फलं ब्रह्मन् हयमेधसमं भवेत् ॥
समस्तपातकोच्छित्तिः कृते भवति देववत् ।
तस्मान्नृपेण कर्त्तव्यं विधिना द्वारिगं जलम् ॥
समन्त्रं शास्त्रदृष्टेन कर्मणा सफलं भवेत् ।
श्येनकादेस्तथा पूजा नागाङ्कं हृदयं जपेत् ॥
द्वारीबन्धप्रसिद्ध्यर्थमन्यथा न लभेत् कृतम् ।
यतः पुण्यैस्तु सिद्ध्येत द्वारीबन्धः सुरोत्तम ॥
अतः पुण्यविधिः कार्यो जपहोमव्रतादिकः ।
दशैरगौकसं कार्यं शिवस्यादेशतः शुभम् ॥
नागानां द्वारिसिद्ध्यर्थं नन्दाकूपं भवेत् कृतम् ।
तर्ह्यपुण्या भवेद्द्वारी किन्तु संदेहसाधना ॥
कृता विशीर्यते कालात् तस्मात् कार्या सदा दृढा ।
छेषं पश्चिमयाम्यस्थं तत्कर्त्तुर्मृत्युदं भवेत् ॥

जपं पश्चिमपूर्वेण रतिपुत्रधनप्रदम् ।
याम्यसौम्यगतं दण्डं पत्नीधनविनाशनम् ॥
यक्षं वारुणगं भद्रशय्यायुःपुत्रदं मतम् ।
पूर्वोत्तरगतं देयं सुखदं धनदं मतम् ॥
पश्चिमे सङ्गतं* मन्दं धनकोशविवर्धनम् ।
जलवायुगतं हैमं हेमदं च भवेद्धनम् ॥
रक्षो वायुगतं काकानुच्चाटं कुरुते धनम् ।
अग्निवारुणिकं दाहं दहनं कीर्त्तिवर्धनम् ॥
देशदाहगतं पापं धनतापकरं तथा ।
वायुदाहगतं तेजो धनहेमगजापहम् ॥
एवं लक्षणमाश्रित्य कर्त्तव्या नाम वाटिका ।
शुभावहा सदा कर्त्तू राज्यायुःसुतवित्तदा ॥
वैपरीत्ये सदा लोके धनं कर्त्तुर्मदावहम् ।
नृप राष्ट्रे जने दोषान्न हन्याद्विधिना शुभम् ॥
सरुद्रां कारयेद्द्वारीं गणनाथसमन्विताम् ।
जयं च विजयं कार्यं सुष्ठु कुर्यात् सराष्ट्रकम् ॥
नागाख्यं हृदयं जप्त्वा प्रस्फुरत् स्थापने शुभम् ।
सेनाविवाहदेव्यश्च तर्पितव्याः पयोव्रतैः ॥
वस्त्रैर्नानाविधैर्गन्धैः फलधूपगणादिभिः ।
कार्यो महोत्सवो वाट्यां पालीबन्धदृढार्थिभिः ॥
दानं देयं सदा शक्र नृपराष्ट्रसुखावहम् ।
गोदानं भूमिदानं च कन्यादानं सुरोत्तम ॥

---

* मन्दं नन्दनं कोशवर्धनम् इति न॰ प्र॰ पु॰ पा॰ ।

द्वारीबन्धे प्रदातव्यमेकं कोटिगुणं भवेत् ।
गजाश्वरत्नदानं च अन्नदानं प्रयत्नतः ॥
द्वारोबन्धेषु दातव्यं सर्वं कोटिगुणं भवेत् ।
गोमेधे नरमेधे च हयमेधे तथा मखे ॥
पुण्यं यज्जायते शक्र द्वारीबन्धे ततोऽधिकम् ।
वापीकूपतडागानि देवतायतनानि च ॥
एतानि पूर्वधर्मेषु शुभानि फलदानि च ।
दीनान्धमूर्खभीरूणां दानं देयं यथाविधि ॥
एवं कोटिगुणं पुण्यं जायते नात्र संशयः ।
एतत् ते कथितं शक्र द्वारीबन्धस्य यत् फलम् ॥
प्रादुर्भावं तु देवीनां क्षेपान्माहात्म्यं कीर्त्तितम् ।
शिवदूत्यास्तथा सम्यक् प्रादुर्भावं समङ्गलम् ॥
यः शृणोति नरः सम्यक् सर्वं पुण्यफलं भवेत् ।
कूपारामतडागादि प्रपाद्यग्निप्रतिश्रयम् ॥
सर्वेशाधिष्ठितं वत्स अनन्तफलदायकम् ।
यः कुर्याद्द्वारिबन्धानां तडागानां शतं तथा ॥
सर्वेश्वरजलं कृत्वा लभेत् पुण्यं ततोऽधिकम् ।
शिवसूर्यहरिब्रह्मसंयुक्तं सर्वकामदम् ॥
आद्या मूर्त्तिः परा ह्येषा व्यापिनी मन्त्रतन्त्रगा ।
सर्वेशं सर्वदैवत्यं ब्रह्माद्यैः परिवारितम् ॥
स्थापितं जायते शक्र सर्वाघभयनाशनम् ।

इति द्वारीबन्धविधिः ।

## अथ तडागादिप्रतिष्ठा । मत्स्यपुराणे । सूत उवाच ।

जलाशयगतिं विष्णुमुवाच रविनन्दनः ।

तडागारामकूपानां वापीषु नलिनीषु च ॥
विधिं पृच्छामि देवेश देवतायतनेषु च ।
के तत्र ऋत्विजः कार्या वेदी वा कीदृशी भवेत् ॥
दक्षिणा वलयः कास्तु स्थानमाचार्य एव च ।
इत्यादिकानि* शस्तानि सर्वमाचक्ष्व तत्त्वतः ॥

मत्स्य उवाच ।

शृणु राजन् महाबाहो तडागादिषु यो विधिः ।

वह्निपुराणे ।

सुदिने शुभनक्षत्रे मुहूर्त्ते तु भवेद्यदा ।
वापीकूपतडागानां तस्मिन् काले विधिः स्मृतः ॥
संपूर्णे तु कृते कर्त्तुः संपूर्णाः स्युर्मनोरथाः ।
कर्कटे पुत्रलाभस्तु सौख्यं तु मकरे भवेत् ॥
मीने यशोऽर्थलाभस्तु कुम्भे च सुबहूदकम् ।
वृषे च मिथुने वृद्धिर्वृश्चिके निर्जलं भवेत् ॥
पितृतृप्तिस्तु कन्यायां तुलायां शाश्वती गतिः ।
सिंहो मेषो धनुर्नाशं जलस्य द्विज यच्छति ॥

मत्स्यपुराणे ।

प्राप्य पक्षं शुभं शुक्लमतीते चोत्तरायणे ।
पुण्येऽह्नि विप्रकथिते कृत्वा ब्राह्मणवाचनम् ॥
प्रागुदक्प्लवणे देशे तडागस्य समीपतः ।
चतुर्हस्तां शुभां वेदीं चतुरस्रां चतुर्मुखीम् ॥
तथा षोडशहस्तः स्यात् मण्डपश्च चतुर्मुखः ।
वेद्याश्च परितो गर्त्ताऽरत्निमात्रा त्रिमेखला ॥

---

* द्रव्याणि कानि इति न॰ प्र॰ पु॰ पा॰ ।

नव सप्ताथ वा पञ्च योनिर्वक्त्रे नृपात्मज ।
वितस्तिमात्रा योनिः स्यात् षट्सप्ताङ्गुलविस्तृता ॥
गर्त्ताश्च तत्र शस्ताः स्युस्त्रिपर्वोच्छ्रितमेखलाः ।
सर्वतः सर्ववर्णाः स्युः पताका ध्वजसंयुताः ॥
अश्वत्थोडुम्बरप्लक्षवटशाखाकृतानि तु ।
मण्डपस्य प्रतिदिशं द्वाराण्येतानि कारयेत् ॥
शुभास्तत्राष्ट होतारो द्वारपालास्तथाष्ट वै ।
अष्टौ तु जापकाः कार्या ब्राह्मणा वेदपारगाः ॥
सर्वलक्षणसंपन्ना मन्त्रवन्तो जितेन्द्रियाः ।
कुलशीलसमायुक्तः स्थापकः स्याद्द्विजोत्तमः ॥

पुण्येऽह्नि शुभलग्नादौ ब्राह्मणानां वाचनं परिभाषायां द्रष्टव्यम् । तत्रोत्सर्ग-पूर्वदिवसे 'श्वमुकतडागाद्युत्सर्गं करिष्ये' इति विहितसंकल्पो यजमानो वृद्धिश्राद्धमाभ्युदयिकं विधाय ब्राह्मणवाचनं कुर्यात् । वास्तुपूजा चात्र कर्त्तव्या । यतस्तदकरणे मत्स्य-पुराणे दोषः श्रूयते ।

वास्तुपूजामकुर्वाणोऽस्तथ्याहारो भविष्यति-इति ।

तत्प्रकारस्तुग्रहदाने दर्शितः । हस्तादिलक्षणमुक्तं परिभाषायाम् । 'गर्त्ताः' कुण्डानि । तानि च चतसृषु दिक्षु चत्वारि ऐशान्यां पञ्चममाचार्यकुण्डमिति पञ्च कुर्यात् । पताकास्तु प्राच्यादिप्रदक्षिणदिग्विदिक्षु पीतरक्तनीलाञ्जननिभशुक्लकृष्णहरितसर्ववर्णाः कार्याः । ध्वजस्तु किङ्किणीजालालङ्कृतः । श्राचार्यप्रमुखान् पञ्चविंशतिब्राह्मणान् 'श्रमुकोत्सर्गयज्ञेनाहं यक्ष्ये' तत्र 'मे त्वमृत्विग्भव' इत्यादि वृत्वा मधुपर्केणाभ्यर्चयेत् ।

प्रतिगर्त्तेषु कलशा यज्ञोपकरणानि च ।
व्यजनं चासने शुभ्रे ताम्रपात्रे सुविस्तरे ॥
ततस्त्वनेकवर्णाः स्युर्वलयः प्रतिदैवतम् ।
आचार्यः प्रक्षिपेद्भूमावनुमन्त्र्य विचक्षणः ॥
त्रिरत्निमात्रो यूपः स्यात् क्षीरवृक्षविनिर्मितः ।

यजमानप्रमाणो वा संस्थाप्यो भूतिमिच्छता ॥
हेमालङ्कारिण: कार्या: पञ्चविंशतिरृत्विज: ।
कुण्डलानि च हैमानि केयूरकटकानि च ॥
तथाङ्गुलीपवित्राणि वासांसि विविधानि च ।
दक्षयेच्च समं सर्वान् आचार्ये द्विगुणं पुन: ॥
दद्याच्छयनसंयुक्त*मात्मनश्चापि यत् प्रियम् ।
सौवर्णौ कूर्ममकरौ राजतौ मत्स्यडुण्डुभौ ॥
ताम्रौ कुलीरमण्डूकौ वायस: शिशुमारक: ।
एवमासाद्य तान् सर्वानादावेव विशां पते ॥
शुक्लमाल्याम्बरधर: शुक्लगन्धानुलेपन: ।
सर्वौषध्युदकस्नानस्नापितो वेदपुङ्गवै: ॥
यजमान: सपत्नीक: पुत्रपौत्रसमन्वित: ।
पश्चिमं द्वारमाश्रित्य प्रविशेद्यागमण्डपम् ॥
ततो मङ्गलशब्देन भेरीणां नि:स्वनेन च ।

'प्रतिगर्त्तेत्यादि' प्रतिकुण्डमासनद्वयं ताम्रपात्रद्वयं विष्टरद्वयं व्यजनं वस्त्रं स्रुवः स्रक्चन्दनादिभूषितं पञ्चरत्नगर्भं कलशं च स्थापयेत् । 'यज्ञोपकरणानि' पवित्रं पवित्रच्छेदनप्रोक्षणीपात्रप्रणीतापात्रस्थालीस्रुक्स्रुवेध्मबर्हिःसमिदाज्यप्रभृतीनि तथा स्थापयिष्यमाणदेवतार्थं बलीन् नानावर्णगन्धधूपदीपमाल्यानि क्षीरवृक्षनिर्मितं यूपं चोपकल्पयेत् । तं च यूपं देवताबलिहरणानन्तरं पूर्वकुण्डात् प्राच्यां दिशि दर्भानक्षतानि चावटे प्रक्षिप्य निखनेत् । 'डुण्डुभो' राजिलः । 'कुलीरः' कर्कटकः । कूर्मादींश्च पञ्चरत्नगर्भायां सुवर्णपात्र्यां निक्षिप्य स्थापयेत्† । एवमन्यदपि प्रकृतोपयोगि कर्मारम्भात् पूर्वमेवासादयेत् । 'सर्वौषध्यः' परिभाषायां दर्शिताः ।

---

* दद्यात् त्वशनसंयुक्त–इति न० प्र० पु० पा० ।
† कल्पयेदिति क्व चित् पाठः ।

रजसा मण्डलं कुर्यात् पञ्चवर्णेन तत्त्ववित् ।
षोडशारं ततश्चक्रं पद्मगर्भं चतुर्मुखम् ॥
चतुरस्रं च परितो वृत्तं मध्ये सुशोभनम् ।
वेद्याश्चोपरि तत् कृत्वा ग्रहाँल्लोकपतीँस्तथा ॥
विन्यसेन्मन्त्रतः सर्वान् प्रतिदिक्षु विचक्षणः ।
झषादीन् स्थापयेन्मध्ये वारुणं मन्त्रमाश्रितः ॥
ब्रह्माणं च शिवं विष्णुं तत्रैव स्थापयेद्बुधः ।
विनायकं च विन्यस्य कमलामम्बिकां तथा ॥
शान्त्यर्थं सर्वलोकानां भूतग्रामं न्यसेत् ततः ।
पुष्पभक्ष्यफलैर्युक्तमेवं कृत्वाऽधिवासयेत् ॥
कुम्भाँश्च रत्नगर्भाँस्तान् वासोभिरभिवेष्ट्य च ।
गन्धपुष्पैरलङ्कृत्य द्वारपालान् समन्ततः ॥
पठध्वमिति तान् ब्रूयादाचार्यस्त्वभिपूजयेत् ।
बह्वृचौ पूर्वतः स्थाप्यौ दक्षिणेन यजुर्विदौ ॥
सामगौ पश्चिमे स्थाप्यौ उत्तरेण त्वथर्वणौ ।
उदङ्मुखो दक्षिणतो यजमान उपाविशेत् ॥

रजसेत्यादि 'रजसा,' तण्डुलादिचूर्णेन तत्प्रकारस्तु परिभाषायां दर्शितः । 'ग्रहान्' आदित्यादीन् अधिदेवताप्रत्यधिदेवतासहितान् । 'लोकपतीन्' इन्द्रप्रभृतीन् । तेषामावाहनादिविधिस्तुलापुरुषे द्रष्टव्यः । 'झषादीन्' मकरादीन् । 'कमलां' लक्ष्मीम् । 'अम्बिकां' दुर्गाम् । 'तानिति' कुण्डसमीपस्थान् कलशान् । 'पूर्वतः' पूर्वकुण्डे बह्वृचौ होतारौ स्थापयेत् । एवं दक्षिणादिकुण्डेषु यथावेदं होतॄनुपवेश्य जापकद्वारपालानामप्येष एव क्रमो वेदितव्यः ।

यजध्वमिति तान् ब्रूयाद्धोतृकान् पुनरेव तु ।
उत्कृष्टमन्त्रजप्येन तिष्ठध्वमिति जापकान् ॥

एवमादिश्य तान् सर्वान् प्रयुज्याग्निं च मन्त्रवित् ।
जुहुयाद्वारुणैर्मन्त्रैराज्यं च समिधस्तथा ॥
ऋत्विग्भिश्चैव होतव्या वारुणैरेव सर्वशः ।
ग्रहेभ्यो विधिवद्धुत्वा तथेन्द्रायेश्वराय च ॥
मरुद्भ्यो लोकपालेभ्यो विधिवद्विश्वकर्मणे ।

जुहुयादाचार्य इति शेषः । वारुणमन्त्राः । 'तत्त्वा यामि ब्रह्मणा वन्दमान' इति पञ्च । 'त्वं नो अग्नेवरुणस्य विद्वान्' इति द्वे । 'इमं मे वरुण श्रुधी' इति च । होमसंख्या तु समिदाज्ययोरष्टोत्तरशतं विधेया ग्रहादिभ्यस्तु प्रत्येकमष्टाविंशतिराहुत यो होतव्याः । ग्रहादिमन्त्रास्तु तुलापुरुषेऽभिहिताः । विश्वकर्ममन्त्रः । रौद्रसूक्तम् 'य-इमा' इत्यादि ।

रात्रिसूक्तं च रौद्रं च पावमानं सुमङ्गलम्
जपेरन् पौरुषं सूक्तं*पूर्वतो जुहुयात् पृथक् ॥

'रात्रिसूक्तं' 'रात्रिवाख्यदायीत' इति । रौद्रसूक्तम् इमा रुद्राय इत्यादि । पावमानं सुमङ्गलं' सूक्तं 'कनिक्रदजनुषम्'–इत्यादि पुरुषसूक्तं प्रसिद्धम् ।

शाक्रं रौद्रं च सौम्यं च कौष्माण्डं जातवेदसम् ।
सौरसूक्तं जपेरँस्ते दक्षिणेन यजुर्विदः ॥

'शाक्रं सूक्तं' 'इन्द्रो नो विश्वतस्परीत्यनुवाको हुधिनुशक्रम्'–इति शक्रलिङ्गकम् । रौद्रं सूक्तं' 'इमा रुद्रा यः स्थिरधन्वन' इति षड्चः । 'सौम्यं सूक्तं' 'सोमो धेनुम्' इति षड्चः । 'कौष्माण्डं सूक्तं' 'यदेवदेवहेडनम्' इति चत्वारोऽनुवाकाः । 'जातवेदसं सूक्तं' 'यस्त्वाहृदाकारिणेत्यनुवाकः' । 'सौरसूक्तं' 'सूर्या देवीर्मित' षड्चः । एतानि सूक्तानि तैत्तिरीयाणां प्रसिद्धानि ।

वैराजं पौरुषं सूक्तं सौपर्णं रुद्रसंहिताम् ।
शैशवं पञ्चनिधनं गायत्रं ज्येष्ठसाम च ॥

---

* ऽर्वतो बह्वृचः–इति न प्र० पु० पा० ।

वामदेव्यं बृहत् सौम्यं रौरवं सरथन्तरम् ।
गवां व्रतं विकर्णं च रक्षोघ्नं च यशस्तथा ॥
गायन्ति सामगा राजन् पश्चिमद्वारमाश्रिताः ।

'वैराजं' 'पिबासोममिन्द्रेत्यत्र' प्रसिद्धम् । 'सौपर्णानि' 'उदवेदभिश्रुता मघमित्यत्र' त्रीणि सामानि । 'रुद्रसंहिता' 'आवो राजानमित्यादि' प्रसिद्धम् । 'शैशवम्' 'उच्चाते जातमन्धस' इति प्रसिद्धम् । 'पञ्चनिधनं' वामदेव्यं 'कयानश्चित्रेत्यत्र' प्रसिद्धम् । गायत्रं तु प्रसिद्धम् । 'ज्येष्ठसामानि' 'त्रीण्याज्यदोहानि वामदेव्यं ग्रामे' गेयम् । 'बृहत् साम' त्वामिद्धिह वामिति प्रसिद्धम् । 'सौम्यं' 'सोमव्रतं सन्ते पयांसोति' प्रसिद्धम् । 'रौरवं' 'पुनानः सोमेत्यत्र' प्रसिद्धम् । 'रथन्तरम्' 'अभित्वा शूरनो नुम' इति प्रसिद्धम् । 'गवां व्रतं' 'तमन्वत प्रथममिति' द्वे सामनी । 'विकर्णं' 'विभाडित्यत्र' प्रसिद्धम् । 'रक्षोघ्नं' 'यशः साम बृहदिन्द्रायेत्यत्र' प्रसिद्धम् ।

आथर्वणाश्चोत्तरतः शान्तिकं पौष्टिकं तथा ।
जपेरन् मनसा देवमाश्रिता वरुणं प्रभुम् ॥
पूर्वेद्युरभितो रात्रावेवं कृत्वाऽधिवासनम् ।
गजाश्वरथ्यावल्मीकसङ्गमह्रदगोकुलात् ॥
मृदमानीय कुण्डेषु प्रक्षिपेच्चत्वरात् तथा ।
रोचनां च ससिद्धार्थान् गन्धान् गुग्गुलमेव च ॥
स्नपनं तस्य कर्त्तव्यं पञ्चभङ्गसमन्वितैः ।
पूर्वं कर्त्तुर्महामन्त्रैरेवं कृत्वा विधानतः ॥

'रोचनां' गोरोचनाम् । 'सिद्धार्थाः' श्वेतसर्षपाः ।

## पञ्चभङ्गाः ।

अश्वत्थोडुम्बरप्लक्षवटचूतस्य पल्लवाः ।

अभिषेकमन्त्रास्तुलापुरुषे द्रष्टव्याः । अभिषेकस्तु द्वितीयदिवसे विधेयः ।

एवं कृत्वा समिदाज्यं*विधियुक्तेन कर्मणा ।
ततः प्रभाते विमले सञ्जाते वा गवां शतम् ॥
ब्राह्मणेभ्यः प्रदातव्यमष्टषष्ट्यथ वा पुनः ।
पञ्चाशद्वाऽथ षट्त्रिंशत् पञ्चविंशति वा पुनः ॥

एता गावो दक्षिणा भवद्भ्यः सम्पादिताः कर्माङ्गदेवताः प्रीयन्ताम्-इत्युदकपूर्वं दद्यात् ।

ततः सांवत्सरे प्रोक्ते शुद्धे लग्ने सुशोभने ।
वेदशास्त्रैः सगान्धर्वैर्वाद्यैश्च विविधैः शुभैः ॥
कनकालङ्कृतां कृत्वा तत्र गामवतारयेत् ।
सामगाय च सा देया ब्राह्मणाय विशां पते ॥

अयं चानुमन्त्रणमन्त्रः ।

इदं सलिलं पवित्रं कुरुष्व शुद्धपूता अमृतः सन्तु नित्यम् ।
मां तारयन्ती कुरु तीर्थाभिषेकं लोकालोकं तरते तीर्यते च–इति ॥

तत्युच्चार्य यजमानः संलग्नस्तरेत् ।

जलाशयं च त्रिवृता सूत्रेण परिवेष्टयेत् ।
पात्रीमादाय सौवर्णीं पञ्चरत्नसमन्विताम् ॥
ततो निक्षिप्य मकरं मत्स्यादींस्तांश्च सर्वशः ।
धृतां चतुर्भिर्विप्रैश्च वेदवेदाङ्गपारगैः ॥
महानदीजलोपेतां दध्यक्षतविभूषिताम् ।
उत्तराभिमुखो न्युब्जां जलमध्ये तु कारयेत् ॥
आथर्वणेन साम्ना च पुनर्मामित्यृचेति च ।
आपोहिष्ठेति मन्त्रेण क्षिप्त्वाऽऽगत्य च मण्डपम् ॥

'आथर्वणं साम' 'शचो देवीरभिष्टये' इति। अत्र प्रसिद्धमरण्यगेयम् । तथा अयं जलाशयः सर्वोपयोगित्वेन सर्वेभ्यो भूतेभ्यो मयोत्सृज्यत इति त्यागं कुर्यात् ।

---

* एवं क्षपां समतिवाह्य इति न॰ प्र॰ पु॰ पा॰ ।

पूजयित्वा सदस्याँस्तु बलिं दद्यात् समन्ततः ।
पुनर्दिनानि होतव्यं चत्वारि मुनिसत्तमाः ॥
चतुर्थीकर्म कर्त्तव्यं देया तत्रापि शक्तितः ।
दक्षिणा राजशार्दूल वरुणं संस्मरँस्ततः ॥
कृत्वा तु यज्ञपात्राणि यज्ञोपकरणानि च ।
ऋत्विग्भ्यस्तु समं दत्त्वा मण्डपं विभजेत् पुनः ॥
हेमपात्रीं च शय्यां च स्थापकाय निवेदयेत् ।
ततः सहस्रं विप्राणामथ वाऽष्टशतं तथा ॥
भोजयेच्च यथाशक्त्या पञ्चाशद्वाऽथ विंशतिम् ।
एवमेव पुराणेषु तडागविधिरुच्यते ॥
कूपवापीषु सर्वासु तथा पुष्करिणीषु च ।
एष एव विधिर्दृष्टः प्रतिष्ठासु तथैव च ॥
मन्त्रतस्तु विशेषः स्यात् प्रासादोद्यानभूमिषु ।
अयं च शक्तावर्धेन विधिर्दिष्टः स्वयम्भुवा ॥
स्वल्पेष्वेकाग्निवत् कार्यं वित्तशाठ्याहते नृभिः ।
प्रावृट्काले स्थितं तोयमग्निष्टोमसमं स्मृतम् ॥
शरत्कालस्थितं यत् स्यात् तदुक्तफलदायकम् ।
वाजपेयातिरात्राभ्यां हेमन्तशिशिरे स्थितम् ॥
अश्वमेधसमं प्राहुर्वसन्तसमये स्थितम् ।
ग्रीष्मे च यत् स्थितं तोयं राजसूयाद्विशिष्यते ॥
एतान् महाराज विशेषधर्मान् करोति योऽर्थ्यानथ शुद्धबुद्धिः ।
स याति रुद्रालयमाशु पूतः कल्पाननेकान् दिवि मोदते च ॥
अनेन लोकाँश्च समस्तपादान् भुक्त्वा परार्धद्वयमङ्गनाभिः ।
सहैव विष्णोः परमं पदं यत् प्राप्नोति तद्योगबलेन भूयः ॥

एवमयं साधारणस्तडागादिप्रतिष्ठाविधिरुक्तः । विशेषस्तु शाखाविभेदेन पुरस्ताद्वक्ष्यते । तत्राविरुद्धधर्माणामेकत्रोपसंहारेण प्रतिष्ठानुष्ठानमादरणीयम् । विरुद्धधर्मसम्बन्धे तु स्वशाखोक्तमनुष्ठेयमिति ।

अथ वह्निपुराणे । द्विज उवाच ।

वारुणेष्टिर्यथा वेदे प्रोक्ता यादृक् स्वयम्भुवा ।
मोहो न जायते येन तत्सर्वं ब्रूहि मे विभो ॥

यम उवाच ।

सुदिने शुभनक्षत्रे प्राग्विप्रानुपवेशयेत् ।
विप्रांश्चाऽऽवाह्य ऋग्वेदं संवत्सरोऽसि वै यजुः ॥
आवो राजेति सामानि अयं मेहीत्यथर्वणम् ।
पूर्वं पाद्यं तु वै दद्यादिदं विष्णुरितीत्यृचा ॥
आत्वावहन्तु हरय इत्यर्घं संप्रदापयेत् ।
ततश्चाचमनीयं च विष्टरोऽसीति विष्टरम् ॥
कांस्यपात्रचां मधु त्वाज्यं कुक्कुटोऽसीति मन्त्रितम् ।
त्रिः संप्राश्य तथाचामेन्मन्त्रादापः पुनन्त्विति ॥
दद्यात् स्थपतये चैवं सदसस्पतिमित्यृचा ।
ततस्तं ब्राह्मणा ब्रूयुः कस्त्वा युनक्ति कर्मणे ॥
कुशासने ततो विश्यं स्थालीपाकं समारभेत् ।
लौकिकाग्निं पुरस्कृत्य लोको हि बलवान् यतः ॥
श्रोत्रिये गामनड्वाहं कन्योक्तिं न समाचरेत् ।
चक्षुषी पूर्वतो हुत्वा व्याहृतीस्तदनन्तरम् ॥

चक्षुषी आज्यभागौ ।

दद्यात् पूर्णाहुतीं पूर्णां गर्भाधानादिकं ततः ।
वरुणं वोरिसदस कुर्यात् पञ्चभिरेव च ॥

ततः पूर्णाहुतिं दत्त्वा अग्निं कुण्डं नयेत् पुरा ।
अग्निं दूतं वृणीमह इत्यतो दक्षिणं नयेत् ॥
वीतिहोत्रं त्वाकवेति अग्निं दूतं च पश्चिमे ।
नीत्वा तमुत्तरं पश्चात् अग्न आयाहि वीतये ॥
एवमुत्पाद्य तं वह्निं चक्षुषी व्याहृतीं हुनेत् ।
वारुणैरेव मन्त्रैश्च पृथक् कुण्डे च पञ्चकम् ॥
वरुणः प्रावृतां भुवमिमं मे वरुणं तथा ।
उदुत्तममिति द्वाभ्यां ऋजुनीतीति वा ततः ॥
सोमं राजानमित्याहुश्चरुं पाच्य हि वारुणम् ।
हुत्वा पूर्णाहुतिं दत्त्वा यूपं तद्वरुणं न्यसेत् ॥
संपूज्य वारुणे कुम्भे शाकलं होममाचरेत् ।
ब्रह्मणो ब्रह्मजज्ञानमतो देवेति विष्णवे ॥
शम्भवे शम्भवायेति त्रातारमिति जिष्णवे ।
त्वमग्ने रोहिताश्वाय यमाय त्वा यमे द्विज ॥
एष ते निर्ऋते चैव वरुणस्य यादःपतेः ।
वातो वा इति वाताय कुविदाङ्गमुदक्पतेः ॥
ईशानमस्य ईशस्य ग्रहाणां शृणु साम्प्रतम् ।
आकृष्ण इति सूर्याय इमं देवेति इन्दवे ॥
कुजायेत्यग्निमूर्धा तु उद्बुध्यश्चन्द्रसूनवे ।
गुरोर्बृहस्पतेत्याहुः शुक्रायान्नात् परिश्रुतः ॥
शन्नो देवी तु सौरेस्तु कयान इति राहवे ।
केतुं कृण्वन्न केतोस्तु विश्वायुर्विश्वकर्मणे ॥
भूताय त्वेति भूतेभ्यो क्षेत्रस्येति च भूपते ।
रक्षोघ्नैश्चैव मन्त्रैश्च हुत्वा तैः क्रमशो नृप ॥

शतं शतसहस्रं वा तिलैस्तत्र पृथक् पृथक् ।
समिद्भिस्तु यवैर्वाऽपि दत्त्वा पूर्णाहुतिं पुनः ॥
सर्वभोगोपकाराय शान्तिं कृत्वा द्विजोत्तमः ।
चरुं तु श्रपयेद्वह्नौ वारुणं सर्वकामदम् ॥
वारुणैरेव होतव्यं वरुणाय नियोजयेत् ।
पूर्णाहुतिं ततो दत्त्वा कुण्डे कुण्डे यथाविधि ॥
वरुणं च* नमेत् तत्र सयादोभिः समन्वितम् ।
उत्सृजेत् तत्र धेनूनां शतमेवार्धमेव वा ॥
बहूनामप्यभावे तु एकां रत्नैरलङ्कृताम् ।
देवपितृमनुष्येभ्यः पुच्छे तस्यास्तिलोदकम् ॥
दत्त्वा निवेदयेत् पश्चात् सर्वालङ्कारभूषिताम् ।
ऋत्विग्भ्यो गुरवे पूर्वं त्रिगुणां दक्षिणां सदा ॥
स्नायादवभृथेनाथ पुत्रभार्यासुहृद्वृतः ।
प्रदद्याद्दक्षिणां तेभ्यो यथाशक्त्या तथा गवाम् ॥
एवं यः कुरुते राजन् वारुणेष्टिं प्रयत्नतः ।
स पूर्वपितृभिर्युक्तः परं ब्रह्माधिगच्छति ॥
एवमेतन्मया ख्यातं यदुक्तं वह्निना पुरा ।

इति वारुणेष्टिः ।

## बह्वृचपरिशिष्टे ।

अथातो वारुणविधिं वापीयज्ञं व्याख्यास्यामः । पुण्ये तिथिकरणे शुभे नक्षत्रे प्राचीं दिशमास्थाय प्राक्प्रवणे उदक्प्रवणे वा उदकसमीपेऽग्निमुपसमाधाय वारुणं चरुं श्रपयित्वा आज्यभागान्तं कृत्वा चतस्र आज्याहुतीर्जुहुयात् । समुद्रज्येष्ठा इति प्रत्यृचम् । ततो हविषा अष्टाहुतीर्जुहुयात् ।

* विन्यसेत् इति न० प्र० पु० पा० ।

तत् त्वा यामि ब्रह्मणा वन्दमान इति पञ्च । त्वं नोऽग्ने वरुणस्य विद्वानिति द्वे । इमं मे वरुणः श्रुधीति च स्विष्टिकृतम् । नवमं नव वै प्राणाः प्राणा वा आपस्तस्मादापो नवभिर्जुहोति* मार्जनान्ते धेनुमवतारयेत् । अवतार्यमाणां तामनुमन्त्रयेत् ।

इदं सलिलं पवित्रं कुरुष्व शुद्धः पूता अमृताः सन्तु नित्यम् ।
भावयन्तो सर्वतीर्थाभिषिक्तं लोकाल्लोकं तरते तीर्यते च ॥

इत्यनेन पुच्छाग्रे यजमानः स्वयं लग्नः आचार्येणान्वारब्ध उत्तीर्य आपो अस्मान्मातरः शुन्धयन्त्वपराजितायां दिश्युत्थापयेत् । सूयवसा भगवती भवतीह भूया इति । यदि सा हिं करोति तदा हिं कृण्वती वसुमती वसूनामिति जपेत् । तां सचेलकण्ठां काञ्चनशृङ्गीं ताम्रपृष्ठीं वृषभप्रजां रौप्यखुरां कांस्योपदोहां विप्राय सामगाय दद्यादितरां वा । शक्त्या दक्षिणा चार्याय देयेति । तत उत्सर्गं कुर्यात् । देवपितृमनुष्याः प्रीयन्तामित्युत्सृजेदिति आह शौनकः । यजमानो ब्राह्मणान् भोजयित्वा स्वस्त्ययनं वाचयेत् ।

## अथ वृक्षारोपणं महाभारते ।

स्थावराणां च भूतानां जातयः षट् प्रकीर्त्तिताः ।
वृक्षगुल्मलतावल्ल्यस्त्वक्सारास्तृणजातयः ॥
एतास्तु जात्या वृक्षाणां तदारोपे गुणोऽस्ति मे ।
कीर्त्तिश्च मानुषे लोके प्रेत्य चैव शुभं फलम् ॥
अतीतानागतौ चोभौ पितृवंशौ च भारत ।
तारयेद्वृक्षरोपी च तस्माद्वृक्षांश्च रोपयेत् ॥
पुष्पैः सुरगणान् वृक्षाः फलैश्चापि तथा पितॄन् ।
छायया चातिथीँस्तात पूजयन्ति महीरुहाः ॥

---

* नव वै प्राणाश्चापस्तस्माद्वानवभिर्जुहोतीति क्व चित् पाठः ।

किन्नरोरगरक्षांसि देवगन्धर्वमानवाः ।
तथा महर्षयश्चैव संश्रयन्ति महीरुहान् ॥
पुष्पिताः फलवन्तश्च तर्पयन्तीह मानवान् ।
वृक्षदं पुत्रवद्वृक्षास्तारयन्ति परत्र च ॥
तस्मात् तडागे रोप्या वै वृक्षाः श्रेयोऽर्थिभिः सदा ।
पुत्रवत् परिपाल्याश्च पुत्रास्ते धर्मतः स्मृताः ॥

## अथाह विष्णुः ।

वृक्षारोपयितुर्वृक्षाः परलोके पुत्रा भवन्ति । वृक्षप्रदस्य वृक्षाः प्रसूनैर्देवान् प्रीणयन्ति फलैश्चातिथीन् । छाययाऽभ्यागतान् देवे वर्षत्युदकेन पितॄन् ।

## पद्मपुराणे ।

अपुत्रस्य च पुत्रत्वं पादपा इह कुर्वते ।
यच्छन्ति रोपकेभ्यस्ते सत्तीर्थे तर्पणादिकम् ॥

'सत्तीर्थे' पुत्रकृतं तर्पणादि तृप्त्यादिजन्यं फलं रोपकस्य प्रयच्छन्तीत्यर्थः ।

यत्नेनापि च राजेन्द्र पिप्पलारोपणं कुरु ।
स तु पुत्रसहस्राणामेक एव करिष्यति ॥

पुत्रसहस्राणां कर्त्तव्यमिति शेषः ।

धनी वाऽश्वत्थवृक्षेण ह्यशोकः शोकनाशनः ।
प्लक्षो यज्ञपतिः प्रोक्तश्चिञ्चा चायुःप्रदा स्मृता ॥
जम्बूकी कन्यदा प्रोक्ता भार्यादा दाडिमी तथा ।
अरलू रोगनाशाय पलाशो ब्रह्मदस्तथा ॥
प्रेतत्वं जायते पुंसां रोपयेद्यो विभीतकम् ।
अङ्कोले कुलवृद्धिः स्यात् खदिरे चाप्यरोगता ॥
निम्बप्ररोपको यस्तु तस्य तुष्टो दिवाकरः ।

श्रीवृक्षे शङ्करो देवः पाटलायां तु पार्वती ॥
शिंशपायामप्सरसः कुन्दे गन्धर्वसत्तमाः ।
तिन्तिडीके दासवर्गो वकुलो दस्युदस्तथा ॥

'श्रीवृक्षः' विल्वः । 'तिन्तिडीको' ऽम्लवृक्षः ।

पुण्यस्त्रीदायकश्चैव चन्दनः पनसस्तथा ।
सौभाग्यदश्चम्पकश्च करीरः पारदारिकः ॥
अपत्यनाशदस्तालो नादेयः कुलवर्धनः ।
वहुभार्या नारिकेलो द्राक्षा सर्वाङ्गसुन्दरी ॥
रतिप्रदा तथा केलिर्मोचकी शत्रुनाशिनी ।

'मोचकी' शाल्मलिः ।

इत्यादयस्तथा येऽन्ये ये नोक्तास्तेऽपि दायकाः ।
प्रतिष्ठां ते गमिष्यन्ति ये नरा वृक्षरोपकाः ॥

## भविष्यत्पुराणे ।

वरं भूमिरुहाः पञ्च न तु कोष्ठरुहा दश ।
पत्रैः पुष्पैः फलैर्मूलैः कुर्वन्ति पितृतर्पणम् ॥
वहुभिर्वत संजातैः पुत्रैर्धर्मार्थवर्जितैः ।
वरमेकः पथि तरुर्यत्र विश्रमते जनः ॥
प्राणिनः प्रीणयन्ति स्म छायावल्कलपल्लवैः ।
पुष्पच्छदा सुतरवः पुष्पैर्देवान् फलैः पितॄन् ॥
पुष्पपत्रफलच्छायामूलवल्कलदारुभिः ।
धन्या महीरुहा येषां विफला यान्ति नार्थिनः ॥
पुत्राः संवत्सरस्यान्ते श्राद्धं कुर्वन्ति मानवाः ।
प्रत्यहं पादपाः पुष्टिं यथेष्टां जनयन्ति हि ॥
न तत् करोत्यग्निहोत्रमसाध्यं योषितां सुतैः ।

यत् करोति घनच्छायः पादपः पथि रोपितः ॥
सुच्छाया च सुपुष्पा च सफला वृक्षवाटिका ।
कुलयोषेव भवति भर्त्तुर्लोकद्वयानुगा ॥
अशोकपल्लवकरा तिलकालङ्कृताननाः ।
सर्वोपभोग्या वेश्येव वाटिका रतिदायिका ॥
सदा स सत्त्रीभवति सदा दानं प्रयच्छति ।
सदा यज्ञं स यजते यो रोपयति पादपम् ॥
अश्वत्थमेकं पिचुमर्दमेकं न्यग्रोधमेकं दश चिञ्चिणीकम् ।
कपित्थबिल्वामलकीत्रयं च पञ्चाम्रवापी नरकं न पश्येत्* ॥
प्रतिश्रयाश्रान्तसमाश्रयित्वादमी च सत्त्रं फलदा बुभुक्षवे ।
अपत्यमेते परलोकहेतोर्विमृश्य तत् किं तरवो न रोपिताः ॥
न खानिता पुष्करिण्यो रोपिता न महीरुहाः ।
मातुर्यौवनचौरेण तेन जातेन किं कृतम् ॥
छायामन्यस्य कुर्वन्ति तिष्ठन्ति स्वयमातपे ।
फलन्ति च परार्थेषु न स्वार्थैकपरा द्रुमाः ॥
अतो द्रुमाः सदा रोप्याः सर्वकामसमृद्धये ।

इति वृक्षारोपणफलम् ।

## अथ वृक्षदानम् । स्कन्दपुराणे ।

यस्तु वृक्षं प्रकुरुते छायापुष्पफलोपगम् ।
पथि दिव्ये नरः पापात् संतारयति वै पितॄन् ॥

## नन्दिपुराणे ।

मार्गशीर्षे तु यो दद्याच्छायाविटपसंकुलम् ।

---

* अश्वत्थमेकं पिचुमर्दमेकं द्वौ चम्पकौ त्रीनथ केशरांश्च ।
सप्ताथ तालान् नव नारिकेलान् पञ्चाम्रवापी नरकं न पश्येत्—इति पुस्तकान्तरे पाठः ।

सकुल्यास्तरुखण्डेषु महेन्द्रोद्यानवेश्मसु ॥
विनोद्यन्तेऽप्सरोवृन्दैर्देववच्च युगार्बुदम् ।

'मार्गशीर्षे' अध्वमुखे । दद्यादित्यत्र वृत्तमिति शेषः ।

फलवृक्षं च यो दद्याद्धर्ममुद्दिश्य मानवः ।
स सर्वकामतृप्तात्मा गच्छेद्वरुणमन्दिरम् ॥

महाभारते ।

देवेभ्योऽथ द्विजातिभ्यो यो दद्यात् फलदं द्रुमम् ।
स पीयूषभुजां लोके सेव्यमानो वरोरुभिः ॥
क्रीडते देववत् कालमनन्तं पूर्वजान्वितः ।
सहकारद्रुमं दत्त्वा किन्नरैः सह मोदते ॥
याति दत्त्वा द्विजे जम्बूमम्बिकायाः सलोकताम् ।
वारुणं नारिकेलेन खर्जूरेण च धानदम् ॥
पूगद्रुमप्रदानेन लोकं सारस्वतं व्रजेत् ।
याति चन्द्रमसो लोकं दत्त्वा पनसभूरुहम् ॥
चिञ्चाप्रदानतो याति रुचिरं लोकमाश्विनम् ।
कपित्थदाडिमाम्रातकदल्यामलकीतरून् ॥
दत्त्वा नक्षत्रलोकेषु सुखमश्नाति मानवः ।
अन्येषामपि वृक्षाणां सुमनःफलशाखिनाम् ॥
प्रदानतो नरो याति परमैश्वर्यसम्पदाम् ।

तथा ।

पुष्पोपगं वाऽथ फलोपगं वा यः पादपं स्पर्शयते द्विजाय ।
स स्त्रीसमृद्धं बहुरत्नपूर्णं प्राप्नोत्ययत्नोपनतं गृहं वै ॥

अथ कदलीदानम् । आह बौधायनः ।

कारयेत् कदलीं दिव्यां पर्णैः सर्वत्र संवृताम् ।

फलपूगेन संयुक्तां सुवर्णस्य पलेन तु ॥
यथाविभवतः कुर्याद्वस्त्रेणावेष्टय सूत्रकैः ।
ब्राह्मणान् भोजयेच्चापि भक्ष्यैर्नानाविधैः शुभैः ॥
होमं च कारयेत् तत्र पूर्ववद्ब्राह्मणेन च ।
हिरण्यगर्भ इत्यादि तल्लिङ्गैः प्राङ्मुखेन तु ॥
तस्मै तां कदलीं दद्याद्वस्त्रालङ्कारपूर्विकाम् ।
पूजिताय दरिद्राय वृत्तिस्थायात्मवेदिने ॥
धर्मज्ञायातिदान्ताय मन्त्रेणानेन तां क्षयी ।
हिरण्यगर्भपुरुष परात् पर जगन्मय ॥
रम्भादानेन दीनेश क्षयं क्षपय मे प्रभो ।

दानमन्त्रः ।

पुण्याहवाचनं कार्यं ब्राह्मणैर्वेदपारगैः ।
शिष्टैरिष्टैर्बन्धुभिश्च सह भोजनमाचरेत् ॥

## अथ न्यग्रोधदानम् । तथा ।

व्रणाः शस्त्रेण येऽपि स्युर्विषदिग्धेन संयुगे ।
तेऽपि शुद्धाः प्ररोहन्ति यथा प्रोक्तं तु वायुना ॥
सौवर्णं राजतं वाऽपि ताम्रं कांस्यमथापि वा ।
पलद्वयेन चैकेन तदर्धेनाथ वा पुनः ॥
न्यग्रोधवृक्षं कुर्वीत स्कन्धशाखाभिरन्वितम् ।
वस्त्रयुग्मेन संवेष्ट्य स्कन्धे स्कन्धे पृथक् पृथक् ॥
हरिद्रापुञ्जके स्थाप्य ब्राह्मणाय नियोजयेत्* ।
उत्तराशापते देव कुबेर नरवाहन ॥
नाडीव्रणं नाशयाशु न्यग्रोधस्य प्रदानतः ।

---

* कल्पयेदिति पुस्तकान्तरे ।

दानमन्त्रः ।

## अथाश्वत्थदानम् । वायुपुराणे ।

भवेत् स्फुटितपादस्तु योऽभिहिंस्याद्वनस्पतीन् ।
दानेन तत्प्रतीकारं प्रवक्ष्यामि यथोदितम् ॥
पलार्धेन तदर्धेन तदर्धेनाथ वा पुनः ।
अश्वत्थवृक्षं कुर्वीत स्कन्धशाखासमन्वितम् ॥
माणिक्यवज्रवैदूर्यैः स्कन्धमध्ये स्वलङ्कृतम् ।
वस्त्रेणावेष्ट्य सर्वत्र धान्यस्योपरि विन्यसेत् ॥
आचार्यः सर्वशास्त्रज्ञो धर्मशास्त्रसुनिष्ठितः ।
वेदवेदाङ्गतत्त्वज्ञो यज्ञकर्मणि निष्ठितः ॥
पूजितो वस्त्रमाल्याद्यैरश्वत्थं पूजयेच्छुभम् ।
अश्वत्थे वो निषदनमिति मन्त्रेण संयुतः ॥
उपचारैः षोडशभिर्होमं कुर्यादनन्तरम् ।
समिदाज्यतिलैर्मन्त्रैर्यद्दोषध्य इष्यति ॥
निम्नतिनामवतीभिस्तान्येव इति च त्रिभिः ।
अश्वत्थ इति मन्त्रेण हुनेत् स्विष्टकृतं तथा ॥
अष्टोत्तरशतं हुत्वा अष्टाविंशतिमेव वा ।
सम्पाताज्येन पादौ द्वौ सिक्तौ कुर्याच्च रोगिणः ॥
सर्पत्वक्कूर्मयुक्तेन निशाचूर्णेन चैव हि ।
प्रयाता इति मन्त्रैश्च चतुर्दशभिरेव च ॥
कुर्याच्च कलशैः स्नानं मन्त्रैरेभिः समाहितः ।
इदं विष्णुः प्रतद्विष्णुर्विष्णोर्नुकमिति क्रमात् ॥
तथा चौषधिसूक्तेन स्नातः शुक्लाम्बरः शुचिः ।
गन्धपुष्पैः समभ्यर्च्य वृक्षं नारायणात्मकम् ॥

मन्त्रेणानेन भक्त्या तमाचार्याय निवेदयेत् ।
पिप्पलो वृक्षराडेव ह्यग्निगर्भस्त्वमेव हि ॥
प्रभुर्वनस्पतीनां च पूर्वजन्मनि यत् कृतम् ।
हिंसनं यत् कृतं यच्च वैरूप्यं पादयोर्मम ॥
नाशयाशु च मे क्षिप्रं त्वं दानेनातितोषितः ।

दानमन्त्रः ।

अश्वत्थमेवं दत्त्वा तं प्रणिपत्य विसर्जयेत् ।
पुनः स्नात्वा तु भुञ्जीत ब्राह्मणैर्बन्धुभिः सह ॥

अथाह वृद्धगौतमः ।

वृक्षच्छेत्ता वृथा यस्तु स नाडीव्रणवान् भवेत् ।
वक्ष्यामि तत्प्रतीकारं सर्वलोकहिताय तु ॥
सौवर्णं कारयेद्वृक्षमश्वत्थं स्कन्धशोभितम् ।
पलार्धेन तदर्धेन तदर्धेनाथ वा पुनः ॥
कुर्याद्रूप्यमयं सूत्रं तेन तं परिवेष्टयेत् ।
तण्डुलोपरि संस्थाप्य पूजयेदुपचारतः ॥
अश्वत्थे वो निषदनमिति मन्त्रेण चोदितः ।
आचार्यो धर्मशास्त्रज्ञो वेदवेदाङ्गपारगः ॥
पुराणज्ञस्तथा शान्तो यज्ञविद्यासु निष्ठितः ।
तेनैव कारयेत् पूजामाहूय स्वयमेव हि ॥
होमं चापि प्रकुर्वीत समिदाज्यतिलैरपि ।
अग्नेः संस्थापनं कार्यं मन्त्राध्यायोक्तमार्गतः ॥
यदहं वाजयन्नेष समिद्धोमः प्रकीर्त्तितः ।
आज्येनाष्टादिको ग्राह्यो व्याहृतिभिस्तिलाहुतीः ॥
ईशानदेशे कलशस्थापनं शास्त्रतो भवेत् ।

तेनाभिषेकं कुर्वीत आपोहिष्ठादिमन्त्रकैः ॥
ग्रहशान्तिश्च कर्त्तव्या ब्राह्मणैर्वेदपारगैः ।
ततो नाडीव्रणी स्नात्वा शुक्लाम्बरधरः शुचिः ॥
उदङ्मुखः प्राङ्मुखाय आचार्याय निवेदयेत् ।
मन्त्रेणानेन विधिवत् पूजितायाङ्गुलीयकैः ॥
वनस्पतीनां प्रवरो विष्णुरूपोऽतिपूजितः ।
तस्य प्रदक्षिणं सर्वो नमस्यः सर्वदेहिनाम् ॥
सर्वकामार्थवृद्धौ स प्रीतो भवतु दानतः ।
वृथा वृक्षच्छेदनेन नाडीव्रणं तदात्मनः ॥
सर्वं विनाशय क्षिप्रं वृक्षाणां प्रवरो ह्यसि ।

दानमन्त्रः ।

एवं दत्त्वा तु तद्दानं सुखी नाडीव्रणी भवेत् ।
अन्येभ्यो ब्राह्मणेभ्यश्च दद्याच्छक्त्या च दक्षिणाम् ॥
नमस्कृत्य तथाऽऽचार्यं शनैः शतपदं व्रजेत् ।
ततः स्नात्वाऽतिहृष्टश्च ब्राह्मणानपि भोजयेत् ॥
शिष्टैरिष्टैर्बन्धुभिश्च स्वयं भुञ्जीत वाग्यतः ।

## अथाम्रतरुदानम् । आह वृद्धगौतमः ।

विद्रधिः फलहर्त्ता स्यात् मनुष्यो ब्राह्मणस्य तु ।
वक्ष्यामि तत्प्रतीकारं दानहोमादिभिः पुनः ॥
पलार्धेन तदर्धेन तदर्धेनाथ वा पुनः ।
यथाविभवतो वाऽपि कुर्यादाम्रतरुं शुभम् ॥
स्निग्धं तथैव शाखाभिः सर्वतः संवृतं शुभम् ।
श्वेतवस्त्रेण संवेष्ट्य फलैरपि सुकल्पितम् ॥
गन्धपुष्पैः समभ्यर्च्य तण्डुलोपरि वेष्टितम् ।

तण्डुलानां परीमाणं द्रोणानां च चतुष्टयम् ॥
तदर्धमथ वा ग्राह्यं यथाविभवतो नरैः ।
आचार्योऽथ विनीतस्तु सर्वशास्त्रार्थतत्त्ववित् ॥
धर्मज्ञः सत्यवादी च कुलीनो लोकसम्मतः ।
आहूय परया भक्त्या तेन पूजादि कारयेत् ॥
वनस्पतेरशनयेत्येतया पूजनादिकम् ।
आग्नेय्यां दिशि होमश्च समिदाज्यतिलैर्भवेत् ॥
मन्त्राश्च शास्त्रतो दृष्टा जाता वा रत्नमित्यपि ।
तिलहोमो व्याहृतिभिरष्टोत्तरसहस्रकम् ॥
यदहं वायुमन्त्रेण आज्यहोमः प्रशस्यते ।
ग्रहशान्तिश्च कर्त्तव्या स्वगृह्योक्तविधानतः ॥
हुत्वा हुत्वा च सम्पातान् पात्रेऽन्यस्मिन् निधापयेत् ।
तेन विद्रधिरोगं मे सम्यगाज्यप्रदानतः ॥
अग्नेरुत्तरतो भागे कलशस्थापनं भवेत् ।
भद्रासनोपविष्टस्य अभिषेकं च कारयेत् ॥
ततः शुक्लाम्बरधरः शुक्लगन्धानुलेपनः ।
सौवर्णमाम्रवृक्षं तं प्रदद्यात् प्राङ्मुखाय तु ॥
गन्धवस्त्रैः पूजिताय रोगी स्वयमुदङ्मुखः ।
आम्र त्वं ब्रह्मणा सृष्टः सर्वप्राणिहिताय तु ॥
वृक्षाणामादिभूतस्त्वं देवानां प्रीतिवर्धनः ।
फलचौर्येण यत् प्राप्तं वैरूप्यं पूर्वजन्मनः ॥
सौवर्णवृक्षदानेन तुष्टा सर्वाश्च देवताः ।
विद्रधीनाशरीरोत्थं वाह्यमभ्यन्तरं तथा ॥
विनाशयन्तु सकलं स्वास्थ्यं कुर्वन्तु मे सदा ।

दानमन्त्रः ।

एवं दत्त्वा तु तद्दान*माचार्यायातिभक्तितः ।
शनैः शतपदं गत्वा प्रणिपत्य विसर्जयेत् ॥
अन्येभ्यो ब्राह्मणेभ्यश्च दद्यात् शक्त्या च दक्षिणाम् ।
ब्राह्मणान् भोजयित्वाऽथ स्वयं भुञ्जीत बन्धुभिः ॥

इति वृक्षदानविधिः ।

## अथारामकृतिः । नन्दिपुराणे ।

क्रीडारामं तु यः कुर्यादुद्यानं पुष्पसंकुलम् ।
तोयाश्रमसमायुक्तं गुप्तं फलसमृद्धिमत् ॥
स गच्छेच्छङ्करपुरं वासस्तत्र युगत्रयम् ।

## विष्णुधर्मोत्तरे । पुष्कर उवाच ।

उत्तरेण शुभः प्लक्षो वटः प्राग्भार्गवोत्तम ।
उदुम्बरश्च याम्येन सौम्येनाश्वत्थ एव च ॥
एते क्रमेण नेष्यन्ते दक्षिणादिक्समुद्भवाः ।
समीपजाताश्च तथा वर्ज्याः कण्टकिनो द्रुमाः ॥
वामभागे तथोद्यानं कुर्याद्वासगृहाच्छुभम् ।
वापयेत् प्राक् तिलाँस्तत्र मृद्नीयात् ताँश्च पुष्पितान् ॥
ततस्तु रोपयेद्वृक्षान् प्रयतः सुसमाहितः ।
स्नातो द्रुममथाभ्यर्च्य ब्राह्मणाँश्च शिवं तथा ॥
ध्रुवानि पञ्च वायव्यं हस्तं पुष्यं सवैष्णवम् ।
नक्षत्राणि तथा मूलं शस्यन्ते द्रुमरोपणे ॥
उद्यानमजलं राम नाभिरामं यदा तदा ।

---

* तत् सर्वमिति क्व चित् पाठः ।

प्रवेशयेन्नदीवाहान् पुष्करिण्यश्च कारयेत् ॥
संस्कार्यमुद्धिदं तोयं कूपाः कार्याः प्रयत्नतः ।
हस्तो मघा तथा मैत्रमाप्यं पुष्यं सवासवम् ॥
उत्तरात्रितयं राम तथा पूर्वा सफाल्गुनी ।
जलाशयसमारम्भे प्रशस्तं वारुणं तथा ॥
संपूज्य वरुणं देवं विष्णुं पर्जन्यमेव च ।
कल्पयित्वा द्विजान् कामैस्तदारम्भपरो भवेत् ॥
अथोद्याने प्रवक्ष्यामि प्रशस्तान् पादपान् द्विज ।
अरिष्टाशोकपुन्नागशिरीषाः सप्रियङ्गवः ॥
पनसाशोककदलीजम्बूलकुचदाडिमाः ।
मङ्गल्याः पूर्वतो राम रोपणीया गृहेषु या ॥
कृत्वा बहुत्वमेतेषां रोप्याः सर्वे वनान्तरम् ।
शाल्मलिं कोविदारं च वर्जयित्वा विभीतकम् ॥
दमनं देवदारुं च पलाशं पुष्करं तथा ।
न विवर्ज्यस्तथा कश्चिद्देवोद्याने विजानता ॥
तत्रापि बहुलाः कार्या मङ्गल्यानां द्विजोत्तम ।
सायं प्रातश्च घर्मान्ते शीतकाले दिनान्तरे ॥
वर्षाकाले भुवः शोषे सेक्तव्या रोपिता द्रुमाः ।
उत्तमं विंशतिर्हस्ता मध्यमा षोडशान्तरम् ॥
स्थानात् स्थानान्तरं कार्यं वृक्षाणां द्वादशान्तरम् ।
अभ्यासजातास्तरवः संस्पृशन्तः परस्परम् ॥
अव्यक्तमिश्रसूक्ष्मत्वाद्भवन्ति सफला द्विज ।
तेषां व्याधिसमुत्पत्तौ शृणु राम चिकित्सितम् ॥
आदौ संशोधनं तेषां किञ्चिच्छस्त्रेण कारयेत् ।

विडङ्गघृतपङ्काक्ताः सेचयेच्छीतवारिणा ॥
फलनाशे कुलत्थैश्च माषैर्मुद्गैस्तिलैर्यवैः ।
शृतशीतपयःसेकः फलपुष्पाय सर्वदा ॥
आविकाजशकृच्चूर्णं यवचूर्णं तिलानि च ।
गोमांसमुदकं चेति सप्तरात्रान् निधापयेत् ॥
उत्सेकं सर्ववृक्षाणां फलपुष्पादिवृद्धिदम् ।
रङ्गतो वापितं बीजं रङ्गतोयावसेचितम् ॥
तद्रङ्गपुष्पं भवति यौवने नात्र संशयः ।
मत्स्याम्भसां तु सेकेन वृद्धिर्भवति शाखिनाम् ॥
अतः प्राधान्यतो वक्ष्ये द्रुमाणां दोहदान्यहम् ।
मत्स्योदकेन शीतेन आम्राणां सेक इष्यते ॥
मृद्वीकानां तथा कार्यस्त्वनेन रिपुसूदन ।
पक्वासिग्भुचिरं चैव दाडिमानां प्रशस्यते ॥
तुषो देयश्च भव्यानां मद्यं च वकुलद्रुमे ।
विशेषात् कामिनीवक्त्रसंसर्गात् त्रिगुणं च यत् ॥
प्रशस्तं चाथ शेकानां कामिनीपदताडनम् ।
शृगालमांसतोयेन नारङ्गोत्थोदकैर्हितम् ॥
मधुयष्ट्युदकं चैव वदराणां प्रशस्यते ।
गुडोदकं सगोमांसं करकाणां प्रशस्यते ॥
क्षीरसेकेन भवति सप्तपर्णो मनोहरः ।
मांसप्लुतोवसामज्जासेकः कुरुवके हितः ॥
पूतिमत्स्याहितं पूतिकार्पासफलमेव च ।
अहिमेदस्य सेकोऽयं पाटलेषु च शस्यते ॥
शृगालमत्स्यमांसाभ्यां चम्पकेषु च दापयेत् ।

फले लतानां क्षीरेण रुधिरेण च शस्यते ॥
कपित्थविल्वयोः सेकं गुडतोयेन कारयेत् ।
जातीनां मल्लिकायाश्च गन्धतोयं परं हितम् ॥
तथाऽकुप्यतजातीनां कूर्ममांसं प्रशस्यते ।
खर्जूरनारिकेलानां वंशस्य कदलस्य च ॥
लवणेन सतोयेन सेको वृद्धिकरः स्मृतः ।
विडङ्गतण्डुलोपेतं मत्स्यमांसं नरोत्तम ॥
सर्वेषामविशेषेण दोहदं परिकल्पयेत् ।
एवं कृते चारुफलाः सुपुष्पाः सुगन्धिनो व्याधिविवर्जिताश्च ।
भवन्ति नित्यं तरवः सुरम्याश्चिरायुषः स्वादुफलान्विताश्च ॥

देवीपुराणे ।

अनूपे सजले स्थाने पुमान् देवेऽथ वा जले ।
आरामं रोपयेत् प्राज्ञो विधिदृष्टेन कर्मणा ॥

'अनूपे' अतिस्निग्धे । 'सजले' जलाशयसहिते ।

कालं देशं तथा पात्रं बीजं बीजक्रियाविधिः ।
तथा फलमसंस्पृष्टमेवमारोपितं भवेत् ॥
फलपुष्पविशुद्धस्य विशुद्धं सर्वसंस्कृतम् ।
धर्मकामार्थमोक्षादिसाधने हन्यतेऽन्यथा ॥
विधिव्यत्ययबीजादिभूषिते भूपरिग्रहे ।
कुलादिभिः सुरश्रेष्ठ यजमानो विनश्यति ॥

'पात्रं' बीजवापेय आचार्यः । बीजक्रियाविधिरङ्कुरजननसमर्थबीजकरणप्रकारः
'विधिव्यत्ययो' विधेरन्यथाकरणम् ।

आरामं सहकारादेर्न शुद्धं कारयेत् क चित् ।
चिताज्वलनसंलग्ने चितिवल्मीकदूषिते ॥

सहकारवनं कृत्वा याति कर्त्ता यमालयम् ।
गृहात् पुरोऽथ वा तात स्थिते संरोपिते तथा ॥
प्रतिपक्षं भवेत् तत्र छिन्द्याद्वा हितमिच्छता ।
अश्वत्थवटप्लक्षादि औदुम्बर्यो विदिक्स्थिताः ॥
जगतो भयदा यस्मात् तस्मात् ताँश्छेदयेन्मुने ।
रोपयेद्बिल्ववीराम्रकपित्थकपिलार्जुनान् ॥
दाडिमीं बीजपूरं च उदगाद्या द्रुमाः परे ।
प्लक्षाः प्राच्यां सदा रोप्याः सकासनसधन्वनाः ॥
कदम्बो वायवे तालो विल्वाशोकौ च सर्वगौ ।

'वीरो' भल्लातकवृक्षः । 'कपिला' शिंशपा । 'असनो' बीजकः । 'वायव्ये' वायुदिग्भागे ।

मयन्दी माधवी रम्भा क्रीडास्थाने निवेशयेत् ।
जातानेपालिकाकुन्दतगरा गन्धमल्लिका ॥
शुभाथ कथितास्तात व्यत्ययाद्भयदा यतः ।
पूर्वेण सुसमारामं तथा चोत्तरतोऽथ वा ॥
पश्चिमे धनदं प्रोक्तं वायव्यां कीर्त्तिवर्धनम् ।
न कुर्युर्याम्यनैर्ऋत्ये ये चाग्नेये शुभार्थिनः ॥
अन्यथा कलहोद्वेगं मृत्युं वा लभते कृती ।
तस्माद्राज्यायुःशुभदं पुत्रसन्ततिवर्धनम् ॥
पश्चिमोत्तरपूर्वेण आरामं जायते कृतम् ।
अथ वाऽऽरामजान् दोषान् चामुण्डा शमयेत् कृतान् ॥
महाभयं महालक्ष्मीर्ग्रहकृत्यं यथोत्थितम् ।

'ग्रहकृत्यं' ग्रहपीडा ।

पुष्पपत्रफलानां च बीजरेणुसमाः समाः ।

कर्त्ता देवसभावासं विधौ यात्यविधावधः ॥

तथा ।

एवं यथोदितां भूमिं शुद्धां प्लवसमाहिताम् ।
परिगृह्य यथा देव वनमालं शिखिध्वजम् ॥
सोमं च नागराजं च ततः कुर्यात् परिग्रहम् ।
यद्बीजं मन्त्ररहितं गर्भाधानादिवर्जितम् ॥
वापितं सहकारादि यद्बीजं मन्त्रवर्जितम् ।
तज्जातं वापकाराय तथा जायेत वैकृतम्* ॥
शङ्करायेति मन्त्रेण इत्थं तु पञ्चमन्त्रवित्† ।
त्र्यम्बकेन तु राजेन्द्र बीजं भवति शोभनम् ॥
अविधौ कूपवाप्यादिखननोत्सरणं च यत् ।
कुर्वन्ति सहकारादिरोपणं तु नराधमाः ॥
फलं तेषां लभन्ते न इह चान्ते ह्यधोगतिः ।
येऽशुद्धाः शुद्धविधिना कुर्वन्ति वनरोपणम् ॥
ते आत्मनृपलोकानां महासंशयकारकाः ।
कूपारामतडागादिप्रपावापीप्रतिश्रयम् ॥
सर्वेशाधिष्ठितं वत्स ह्यनन्तफलदायकम् ।
वृक्षान् पञ्च समारोप्य शिवधाम प्रपद्यते ॥
ये च पापा दुराचाराः श्रीतरुच्छेदकारिणः ।
तेऽप्यवीच्यादिनरके पच्यन्ते ब्रह्मणो दिनम् ॥
मृतास्ते जीवमानास्तु ब्रह्मघ्नाः कीर्त्तिता भुवि ।
तस्मिन् देशे भयं नित्यं राजानो न चिरायुषः ॥

---

* वैकृतुरिति पुस्तकान्तरे पाठः ।

† इन्द्रपश्चिममन्त्रवित्–इति न॰ प्र॰ पु॰ पाठः ।

न च नन्दत्ययं लोको यत्र श्रीवृक्षच्छेदनम् ।

इत्यारामरोपणम् ।

अथ वृक्षप्रतिष्ठा मत्स्यपुराणे । ऋषय ऊचुः ।

पादपानां विधिं सूत यथावद्विस्तराद्वद ।
विधिना केन कर्त्तव्यं पादपोद्यापनं बुधैः ॥
ये च लोकाः स्मृतास्तेषां तानिदानीं वदस्व नः ।

सूत उवाच ।

पादपानां विधिं वक्ष्ये तथैवोद्यानभूमिषु ।
तडागविधिवत् सर्वमासाद्य जगतीश्वरः ॥
ऋत्विग्मण्डपसम्भारमाचार्यञ्चापि तादृशः ।
पूजयेद्ब्राह्मणाँस्तद्वद्धेमवस्त्रानुलेपनैः ॥
सर्वौषध्युदकैः सिक्तान् पिष्टालक्तविभूषितान् ।
वृक्षान् माल्यैरलङ्कृत्य वासोभिरभिवेष्टयेत् ॥
सूच्या सौवर्णया कार्यं सर्वेषां कर्णवेधनम् ।
अञ्जनं चापि दातव्यं तद्वद्धेमशलाकया ॥
फलानि सप्त चाष्टौ वा कालधौतानि कारयेत् ।

'कालधौतानि' रूप्यमयानि ।

प्रत्येकं सर्ववृक्षाणां वेद्यां तानधिवासयेत् ।
धूपोऽत्र गुग्गुलः श्रेष्ठस्ताम्रपात्रैरधिष्ठितान् ॥
सर्वधान्यकृतान् कृत्वा वस्त्रगन्धानुलेपनैः ।
कुम्भान् सर्वेषु वृक्षेषु स्थापयित्वा नरेश्वर ॥
सहिरण्यानशेषाँस्तान् कृत्वा बलिनिवेदनम् ।
यथावल्लोकपालानामिन्द्रादीनां विधानतः ॥
वनस्पतेश्च विद्वद्भिर्होमः कार्यो द्विजातिभिः ।

ततः शुक्लाम्बरधरां सौवर्णकृतभूषणाम् ।
सकांस्यदोहां सौवर्णशृङ्गाभ्यामतिशालिनीम् ॥
पयस्विनीं वृक्षमध्यादुत्सृज्येद्गामुदङ्मुखीम् ।
ततोऽभिषेकमन्त्रेण वाद्यमङ्गलगीतकैः ॥
ऋग्यजुःसाममन्त्रैश्च वारुणैरभितस्तदा ।
तैरेव कुम्भैः स्नपनं कुर्युर्ब्राह्मणपुङ्गवाः ॥
स्नातः शुक्लाम्बरधरो यजमानः प्रपूजयेत् ।
गोभिर्विभवतः सर्वानृत्विजः सुसमाहितः ॥
हेमसूत्रैः सकटकैरङ्गुलीयैः पवित्रकैः ।
वासोभिः *शवलैश्चैव तथोपस्करपादुकैः ॥
क्षीराभिषेचनं दद्युर्यावह्निचतुष्टयम् ।
होमश्च सर्पिषा कार्यो यवकृष्णतिलैस्तथा ॥
पलाशसमिधः शस्ताश्चतुर्थेऽह्नि तथोत्सवः ।
दक्षिणा च पुनस्तद्वद्देया तत्रापि शक्तितः ॥
यद्यदिष्टतमं किञ्चित् तत् तद्द्यादमत्सरः ।
आचार्ये द्विगुणं दत्त्वा प्रणिपत्य विसर्जयेत् ॥
अनेन विधिना यस्तु कुर्याद्वृक्षोत्सवं बुधः ।
सर्वान् कामानवाप्नोति पदं चानन्त्यमश्नुते ॥
यश्चैकमपि राजेन्द्र वृक्षं संस्थापयेन्नरः ।
सोऽपि स्वर्गे वसेद्राजन् यावदिन्द्रायुतत्रयम् ॥
भूतान् भव्यांश्च मनुजांस्तारयेद्राम संमितान् ।
परमां सिद्धिमाप्नोति पुनरावृत्तिदुर्लभाम् ॥

इति वृक्षप्रतिष्ठाविधिः ।

---

* शयनैरिति न॰ प्र॰ पु॰ पा॰ ।

अथ तरुपुत्रदानविधिः । मत्स्यपुराणे ।

दशकूपसमा वापी दशवापीसमो द्रुमः ।
दशद्रुमसमः पुत्रो दशपुत्रसमो द्रुमः ॥

नन्दिपुराणे ।

तरुपुत्रं तु यः कुर्याद्विधिवद्वह्निसन्निधौ ।
स महापातकैर्मुक्तः समुद्धृत्य कुलत्रयम् ॥
नरकेभ्यो नरो याति प्रजापतिपुरं शुभम् ।

स्कन्दपुराणे ।

इत्येवं रुद्रमहिषी भूमीरुहसुतस्तव ।
श्रुत्वा पतिं त्रिलोकेशमिदमाह पतिव्रता ॥
भगवान् केन विधिना विधीनां सारसागरः ।
पुत्रप्रतिकृतिर्वृक्षः क्रियते चन्द्रभूषण ॥
सलीलामिति सर्वज्ञः पृच्छन्तीं विधिमुत्तमम् ।
महादेवो महादेवीमिदं वचनमब्रवीत् ॥
देवि नागेन्द्रनासोरु नागेन्द्रगतिगामिनि ।
शृणुष्व येन विधिना गृह्यतेऽवनिजः सुतः ॥

'अवनिजो' वृक्षः ।

स्वपुत्रार्थं भूमिरुहं ग्रहीष्यामीति पार्वती ।
सोपवासा भवेन्नारी शुचिवस्त्रा शुचिव्रता ॥
ततश्चैव सहस्रांशावस्तशृङ्गगते रवौ ।
उदिते विमले चापि तथाऽऽदाविन्दुसन्निभे ॥
विप्रानामन्त्रयेद्रात्रौ पावनान् वेदवादिनः ।
विप्रान् निमन्त्रयित्वा तु शुचिवस्त्रा शुचिव्रता ॥

शयीत सनमस्कारा सदर्भा भूमिमाश्रिता ।
गमयित्वा तथा रात्रिं सवितर्युदितेऽपि च ॥
भक्ष्यभोज्यं समादाय व्रजेद्यत्र भवेत् तरुः ।
ततस्तं स्नापयित्वा तु सातपत्रं सभूषणम् ॥
तं तरुं तरुणीकृत्य ततश्छायानुगामिनम् ।
यथोपपन्नमन्नं तान् भोजयित्वा द्विजाँस्ततः ॥
पुण्याहं कारयित्वा तु ऋत्विजा चाथ वाऽऽत्मना ।
तृप्तानां ब्राह्मणानां वै चैतत् ते कृत्यमात्मनः ॥
निवेद्य कृतमुद्दिश्य सद्भावेन परेण तु ।
अपुत्रा भगवन्तोऽहं पुत्रप्रतिकृतिं तरुम् ॥
ग्रहीष्यामि ममानुज्ञां कर्त्तुमर्हथ सत्तमाः ।
ततस्तैरभ्यनुज्ञातं तं तरुं तरुणाकृतिम् ॥
भूमिदेवसमक्षं वै गृह्णीयात् तनयं प्रिये ।

'भूमिदेवसमक्षं' ब्राह्मणाग्रतः ।

अनेन विधिना यस्तु गृहीततरुपुत्रकम् ।
पितॄणां निरयस्थानां मधुधारां स वर्षति ॥
गृहीतो विधिनाऽनेन शुभभूमिरुहात्मजः ।
शुभे सुखाय भवति विपरीतेन दुःखदः ॥
न पुत्राणां शतं वाऽपि पीनश्रोणिपयोधरे ।
एको भूमिरुहः श्रेष्ठः पुत्रत्वे कल्पितः सुतः ॥
इत्येवं तन्मया पृष्टमिष्टं दृष्टान्तपारिणि ।
यथा भूमिरुहः पुत्रो विशिष्टः कोष्ठजैः सुतैः ॥
ततः शोकापहा देवी तमशोकविभाविनी ।
अलञ्चकार संहृष्टा ह्यलङ्कारैः पृथग्विधैः ॥

आतपत्रं च तस्याग्रे मुक्ताभवनभास्करम् ।
उच्छ्रयामास गिरिजा मयूराङ्कुरुहैः सह ॥
नानावर्णेन चाप्यस्य चन्दनेन सुगन्धिना ।
आमूलात् प्रददौ देवी करपङ्क्तानितस्ततः ॥
जाम्बूनदमयैश्चापि पदै रत्नविराजितैः ।
सर्वतो भूषयामास तमशोकतरुं प्रियम् ॥
तस्य शाखाप्रशाखासु मुक्तादामानि पार्वती ।
आबबन्ध स तैर्भाति नक्षत्रैरिव भास्करः ॥
तथा वासोयुगेनापि तमशोकं गुहारिणी ।
वासयामास लोकानां जननी पुत्रलालसा ॥
ततो नमेरुणा चारु गुग्गुलं घृतमेव च ।
समवाययुतं धूपं चामरं धूपनार्चितम् ॥
ततः शङ्खनिनादेन देवतूर्यरवेण च ।
नन्दिना च समानीता ब्राह्मणा ब्रह्मणः समाः ॥
वाचयामास पुण्याहं दत्त्वा गाः स्वर्णमेव च ।
ततः पुण्याहघोषान्ते आशीर्वादस्य चोभयोः ॥
अनुमन्ये पतिं देवीमृषींश्चाप्रीणयँस्तदा ।

ब्रह्मवैवर्त्ते श्रीभगवानुवाच ।

अतः परं प्रवक्ष्यामि वृक्षस्योद्यापने विधिम् ।
सर्वपापप्रशमनं सर्वाशुभविनाशनम् ॥
अपुत्रया पुरा पार्थ पार्वत्या मन्दराचले ।
अशोकः शोकशमनः पुत्रत्वे परिकल्पितः ॥
जातकर्मादिकास्तस्य याः क्रियाः कुलवृद्धिमान् ।
चकारात्रिः पुराणोक्ताः शृणुष्वैव युधिष्ठिर ॥

स तु बालो घनदलस्तथैव मृदुपल्लवः ।
शीतवातातपसहः संस्कार्यस्तरुणस्तरुः ॥
स्त्रीनामा कण्टकी कुब्जः कीटखातसकोटरः ।
नोद्याप्यः पादपः सर्वः शिष्टानां यो न सम्मतः ॥
आलवाले सुविहिते शुभे वार्धचतुष्किके ।
शोधयित्वा तमुद्देशं सुलिप्तं कारयेत् ततः ॥
ततश्चोद्यापनं पार्थ पादपानां प्रशस्यते ।
शुभेऽह्नि विप्रकथिते ग्रहनक्षत्रसंयुते ॥
पताकालङ्कृतं वृक्षं पूर्वेद्युरधिवासयेत् ।
रक्तवस्त्रैः समाच्छाद्य रक्तसूत्रेण वेष्टयेत् ॥
पिष्टाद्यैः स्नापितं स्वर्णसर्वौषध्या च पादपम् ।
स्थापयेत् पूर्वकलशांश्चतुर्दिक्षु विचक्षणः ॥
पल्लवालङ्कृतमुखान् सितचन्दनचर्चितान् ।
सितवस्त्रयुगच्छन्नान् समाल्यान् रत्नगर्भिणः ॥
पताकालङ्कृताः सर्वे कार्यास्तत्सन्निधौ द्रुमाः ।
मूलविन्यस्तकलशा रक्तसूत्रैश्च वेष्टिताः ॥
रक्तपीतसितच्छेदचर्चिताः सुमनोरमाः ।
कलधौतमयान्यत्र फलानि दश पञ्च च ॥
ताम्रपात्र्यां सबीजानि सरत्नान्यधिवासयेत् ।
तूर्यमङ्गलघोषेण चतुर्दिक्षु क्षिपेद्बलीन् ॥
इन्द्रादिलोकपालानां तन्मन्त्रैर्मन्त्रविद्गुरुः ।
ततः प्रभाते विमले कुण्डं कृत्वा समेखलम् ॥
ग्रहयज्ञविधानेन* सर्वं कर्म समाचरेत् ॥

---

* शान्तिकर्म इति न० प्र० पु० पा० ।

सुवर्णालङ्कृतान् कृत्वा ब्राह्मणान् वेदपारगान् ।
चतुरोऽष्टौ यथाशक्त्या वासोभिरभिपूजयेत् ॥
तिलाज्येन च होमः स्यात् तुष्टिपुष्टिकरः सदा ।
मातरः स्थापयित्वाऽग्रे पूजयेत् कुसुमाक्षतैः ॥
श्रपयित्वा चरुं सम्यक् पयसा च परिप्लुतैः ।
होमयेज्जातकर्मादि गोदानं यावदेव तु ॥
पादपं स्नापयित्वा तु समन्त्रैस्तीर्थवारिभिः ।
जातकं नामकरणमन्नप्राशनमेव च ॥
सुवर्णसूच्या कुर्वीत कर्णवेधं विधानतः ।
जातरूपक्षुरेणाथ चूडाकर्म यथाक्रमम् ॥
बध्नीयान्मेखलां मौञ्जीं वासश्च परिधापयेत् ।
कृत्वा वै तदशेषेण कुर्याद्गोदानमङ्गलम् ॥
विवाहं केचिदिच्छन्ति माधवीलतया तरोः ।
मालत्या सह शल्लक्या जम्बूं वा शाल्मलिं विदुः ॥
संस्कारैः संस्कृतस्यैव पादपस्य तथाऽर्थवत् ।
एषा प्रतिष्ठा नामेति मन्त्रेणाशीः प्रयोजयेत् ॥
यजमानस्ततः स्नात्वा शुक्लाम्बरधरः शुचिः ।
पुष्पाञ्जलिं समादाय मन्त्रमेतमुदीरयेत् ॥
ये शाखिनः शिखरिणां शिरसां विभूषा
ये नन्दनादिषु वनेषु कृतप्रतिष्ठाः ।
ये कामदाः सुरनरोरगकिन्नराणां
तेऽनेन तस्य दुरितार्त्तिहरा भवन्तु ॥
एते द्विजा विधिवदत्र हुतो हुताशः
पश्यत्यसावहिमदीधितिरन्तरस्थः ।

त्वं वृक्ष पुत्रपरिकल्पनया धृतोऽसि
कार्यं सदैव भवता मम पुत्रकार्यम् ॥
इत्येव मुक्त्वा तं वृक्षं स्पर्शयित्वा पुनः पुनः ।
घृतपात्रे स्ववदनं दृष्ट्वाऽऽशीः संप्रयोजयेत् ॥
अङ्गादङ्गात् सम्भवसि हृदयादभिजायसे ।
आत्मा वै पुत्रनामाऽसि संजीव शरदः शतम् ॥
ब्राह्मणानां ततो देया दक्षिणा हृष्टमानसैः ।
स्थापकाय शुभां धेनुं दत्त्वा कुर्यान्महोत्सवम् ॥
दीनानाथजनानां च भोजनं चानिवारितम् ।
इतरेषां तु दातव्यं सन्तुष्टेन सुरासवम् ॥
ज्ञातिबन्धुजनैः सार्धं स्वयं भुञ्जीत कामतः ।
तथा कर्मकराः सर्वे भोजनीयाः स्वशक्तितः ॥
एतत् ते कथितं पार्थ वृक्षाणां सुमहोत्सवम् ।
सर्वान् कामानवाप्नोति इह लोके परत्र च ॥
पुत्रैर्विना शुभफलं न भवेन्नराणां
दुष्पुत्रकैरपि तथोभयलोकनाशः ।
एतद्विचार्य सुधिया परिपाल्य वृक्षान्
यत्नेन वेदविधिना परिकल्पनीयाः ॥

इति तरुपुत्रविधिः ।

*पर्यवसितं च दानं करणाधिपो विजयते हेमाद्रिः ।
आवारिनिधिक्षौणीमण्डलमण्डलितस्वयशोराशिः ॥
चिन्तामणौ महाशास्त्रे तेन हेमाद्रिणा कृते ।
दानखण्डाख्यखण्डं च जगाम परिपूर्णताम् ॥

* यदीयनाम्नां गणनाक्रमेण इति न० प्र० पु० पा० ।

येषामगण्यत्वमवेक्ष्य कोऽपि *नान्यो मुनिभ्यः प्रभुतामुपैति ।
दानानि तान्याचरितुं प्रबन्धो हेमाद्रिदेवस्य जगाम पारम् ॥

इति श्रीमहाराजाधिराजश्रीमहादेवीयसमस्तकरणाधीश्वरसकलविद्याविशारदश्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ दानखण्डं सम्पूर्णम् ।





* पर्यवसितं चानन्तफलप्रकरणम् ।

अस्ति ध्वस्तसमस्तशूरगिरिभारादिष्टवीरस्फुर-
ज्जैत्रच्छत्रनिवासभूरिह महादेवो महीवल्लभः ।
तस्य श्रीकरणाधिपो विजयते हेमाद्रिरावारिधि-
क्षोणीमण्डलमण्डलीकृतयशोराशिप्रकाशोदयः ॥
इति न. प्र. पु. पा. ।

